# BIBLIOTHECA INDICA

O S fasc 125, 126, 147, 150– 155, 175, 176, 188, 189
190, 191, 192, 196, 197, 204, 210, 216, 220, 222, 223

## Collection of Oriental Works

Published under the Patronage of the
Hon. Court of Directors of the East India Company,
and the Superintendence of the
ASIATIC SOCIETY OF BENGAL.

**volume 31,1**
**The Taittiriya Brahmana of the Black Yajur Veda**

Reprint of the edition Calcutta 1855 - 1870

Biblio Verlag · Osnabrück 1981

# BIBLIOTHECA INDICA;

A

COLLECTION OF ORIENTAL WORKS

PUBLISHED UNDER THE SUPERINTENDENCE OF THE

ASIATIC SOCIETY OF BENGAL.

Nos. 125, 126, 147 & 150.

---

# तैत्तिरीय-ब्राह्मणं।

## कृष्णयजुर्वेदीयं।

सायनाचार्य्यकृत-वेदार्थप्रकाशाख्य-भाष्यसहितं।

कतिपयपण्डितानां साहाय्यमवलम्ब्य

श्रीराजेन्द्रलाल-मित्रेण परिशोधितं।

---

# THE TAITTIRÍYA BRÁHMAṆA

OF THE

## BLACK YAJUR VEDA,

WITH THE

COMMENTARY OF SÁYANÁCHÁRYA,

EDITED BY

RÁJENDRALÁLA MITRA,

WITH THE ASSISTANCE OF SEVERAL LEARNED PAṆḌITAS.

VOLUME I.

CALCUTTA:

PRINTED BY C. B. LEWIS, AT THE BAPTIST MISSION PRESS.

1859.

# तैत्तिरीय ब्राह्मणे

प्रथमाष्टके

प्रथमाध्याये

प्रथमोऽनुवाकः ।

---

श्रीसिद्धिविनायकाय नमः ।

हरिः ॐ ।

ब्रह्म सन्धत्तं तन्मे जिन्वतं। क्षत्रꣳ सन्धत्तं तन्मे जिन्वतं। इषꣳ सन्धत्तं तां मे जिन्वतं। ऊर्जꣳ सन्धत्तं तां मे जिन्वतं। रयिꣳ सन्धत्तं तां मे जिन्वतं। पुष्टिꣳ सन्धत्तं तां मे जिन्वतं। प्रजाꣳ सन्धत्तं तां मे जिन्वतं। पशून् सन्धत्तं तान्मे जिन्वतं। स्तुतोऽसि जनधाः। देवास्त्वा शुक्रपाः प्रणयन्तु ॥ १ ॥

सुवीराः प्रजाः प्रजनयन् परीहि। शुक्रः शुक्रशोचिषा। स्तुतोऽसि जनधाः। देवास्त्वा मन्थिपाः प्रणयन्तु। सुप्रजाः प्रजाः प्रजनयन् परीहि। मन्थी मन्थिशोचिषा। सञ्जग्मानौ दिव आ पृथिव्यायुः। सन्धत्तं तन्मे जिन्वतं। प्राणꣳ सन्धत्तं तम्मे जिन्वतं। अपानꣳ सन्धत्तं तम्मे जिन्वतं ॥ २ ॥

व्यानꣳ सन्धत्तं तन्मे जिन्वतं। चक्षुः सन्धत्तं तन्मे जिन्वतं। श्रोत्रꣳ सन्धत्तं तन्मे जिन्वतं। मनः सन्धत्तं तन्मे जिन्वतं। वाचꣳ सन्धत्तं तां मे जिन्वतं। आयुःस्थ आयुर्मे धत्तं। आयुर्यज्ञाय धत्तं। आयुर्यज्ञपतये धत्तं। प्राणःस्थः प्राणं मे धत्तं। प्राणं यज्ञाय धत्तं ॥ ३ ॥

प्राणं यज्ञपतये धत्तं। चक्षुःस्थश्चक्षुर्मे धत्तं। चक्षुर्यज्ञाय धत्तं। चक्षुर्यज्ञपतये धत्तं। श्रोत्रꣳ स्थः श्रोत्रं मे धत्तं। श्रोत्रं यज्ञाय धत्तं। श्रोत्रं यज्ञपतये धत्तं। तौ देवौ शुक्रामन्थिनौ। कल्पयतं दैवीर्विशः। कल्पयतं मानुषीः ॥ ४ ॥

इषमूर्जमस्मासु धत्तं। प्राणान् पशुषु। प्रजां मयि च यजमाने च। निरस्तःशण्डः। निरस्तो मर्कः। अपनुत्तौ शण्डामर्कौ सहामुना। शुक्रस्य समिदसि। मन्थिनः समिदसि। स प्रथमः सङ्कृतिर्विश्वकर्मा। स प्रथमो मित्रो वरुणो अग्निः। स प्रथमो बृहस्पतिश्चिकित्वान्। तस्मादिन्द्राय सुतमाजुहोमि ॥ ५ ॥

नयन्त्वपानꣳ सन्धत्तं तन्मे जिन्वतं प्राणं यज्ञाय धत्तं मानुषीरग्निर्दं च। इषादिपञ्चके वाचं तान्मे पशून् सन्धत्तं तान्मे प्राणादिचितये तन्मे अन्यच्च तन्मे॥ अनु० १ ॥

द्वितीयोऽनुवाकः।

कृत्तिकास्वग्निमादधीत। एतद्वा अग्नेर्नक्षत्रं। यत्कृत्तिकाः। स्वायामेवैनं देवतायामाधाय। ब्रह्मवर्चसी भवति। मुखं वा एतन्नक्षत्राणां। यत्कृत्तिकाः। यः कृत्तिकास्वग्निमाधत्ते। मुख्य एव भवति। अथो खलु ॥ १ ॥

अग्निनक्षत्रमित्यपचायन्ति। गृहान् ह दाहुको भवति। प्रजापती रोहिण्यामग्निमसृजत। तं देवा रोहिण्यामादधत। ततो वै ते सर्वान्रोहानरोहन्। तद्रोहिण्यै रोहिणित्वं। यो रोहिण्यामग्निमाधत्ते। ऋध्नोत्येव। सर्वान्रोहान्रोहति। देवा वै भद्रास्सन्तोऽग्निमाधित्सन्त ॥ २ ॥

तेषामनाहितोऽग्निरासीत्। अथैभ्यो वामं वस्वपाक्रामत्। ते पुनर्वस्वोरादधत। ततो वैतान् वामं वसूपावर्तत। यः पुरा भद्रः सन्पापीयान्त्स्यात्। स पुनर्वस्वोरग्निमादधीत। पुनरेवैनं वामं वसूपावर्तते। भद्रो भवति। यः कामयेत दानकामा मे प्रजाः स्युरिति। स पूर्वयोः फल्गुन्योरग्निमादधीत ॥ ३ ॥

अर्यम्णो वा एतन्नक्षत्रं। यत्पूर्वे फल्गुनी। अर्यमेति तमाहुर्यो ददाति। दानकामा अस्मै प्रजा भवन्ति। यः कामयेत भगी स्यामिति। स उत्तरयोः फल्गुन्योरग्नि-

मादधीत। भगस्य वा एतन्नक्षत्रं। यदुत्तरे फल्गुनी। भग्येव भवति। कालकञ्जा वै नामासुरा आसन्॥ ४॥

ते सुवर्गाय लोकायाग्निमचिन्वन्त। पुरुष इष्टकामुपादधात्पुरुष इष्टकां। स इन्द्रो ब्राह्मणो ब्रुवाण इष्टकामुपाधत्त। एषा मे चित्रा नामेति। ते सुवर्गलोकमाप्रारोहन्। स इन्द्र इष्टकामावृहत्। तेऽवाकीर्यन्त। येऽवाकीर्यन्त। तऊर्णनाभयोऽभवन्। द्वावुदपततां॥ ५॥

तौ दिव्यौ श्वानावभवतां। यो भ्रातृव्यवान्त्स्यात्। स चित्रायामग्निमादधीत। अवकीर्यैव भ्रातृव्यान्। ओजो बलमिन्द्रियं वीर्यमात्मन्धत्ते। वसन्ते ब्राह्मणोऽग्निमादधीत। वसन्तो वै ब्राह्मणस्यर्तुः। स्व एवैनमृतावाधाय। ब्रह्मवर्चसी भवति। मुखं वा एतदृतूनां॥ ६॥

यद्वसन्तः। यो वसन्ताग्निमाधत्ते। मुख्य एव भवति। अथो योनिमन्तमेवैनं प्रजातमाधत्ते। ग्रीष्मे राजन्य आदधीत। ग्रीष्मो वै राजन्यस्यर्तुः। स्व एवैनमृतावाधाय। इन्द्रियावी भवति। शरदि वैश्य आदधीत। शरद्वै वैश्यस्यर्तुः॥ ७॥

स्व एवैनमृतावाधाय। पशुमान् भवति। न पूर्वयोः फल्गुन्योरग्निमादधीत। एषा वै जघन्या रात्रिः संव-

त्सरस्य। यत्पूर्वे फल्गुनी। पृष्ठत एव संवत्सरस्याग्नि-
माधाय। पापीयान् भवति। उत्तरयोरादधीत। एषा वै
प्रथमा रात्रिः संवत्सरस्य। यदुत्तरे फल्गुनी। मुखत
एव संवत्सरस्याग्निमाधाय। वसीयान् भवति। अथो
खलु। यदेवैनं यज्ञ उपनमेत्। अथादधीत। सैवास्य-
र्धिः॥ ८॥

खल्वधित्सन्त फल्गुन्योरग्निमादधीतासन्नपतताम्ट-
तूनां वैश्यस्यर्तुरुत्तरे फल्गुनी षट् च॥ अनु० २॥

तृतीयोऽनुवाकः।

उद्धन्ति। यदेवास्या अमेध्यं। तदपहन्ति। अपोवा-
क्षति शान्त्यै। सिकतानि वपति। एतद्वा अग्नेर्वैश्वान-
रस्य रूपं। रूपेणैव वैश्वानरमवरुन्धे। ऊषान्निवपति।
पुष्टिर्वा एषा प्रजननं। यदूषाः॥ १॥

पुष्ट्यामेव प्रजननेऽग्निमाधत्ते। अथो संज्ञान एव।
संज्ञानꣳ ह्येतत्पशूनां। यदूषाः। द्यावापृथिवी सहा-
स्तां। ते वियती अब्रूतां। अस्त्वेव नौ सह यज्ञियमिति।
यदमुष्या यज्ञियमासीत्। तदस्यामदधात्। तऊषा
अभवन॥ २॥

यदस्या यज्ञियमासीत्। तदमुष्यामदधात्। तदद-श्चन्द्रमसि कृष्णं। ऊषान्निवपन्नदोध्यायेत्। द्यावा-पृथिव्योरेव यज्ञियेऽग्निमाधत्ते। अग्निर्देवेभ्यो निलायत। आखूरूपं कृत्वा। स पृथिवीं प्राविशत्। स ऊतीः कुर्वाणः पृथिवीमनुसमचरत्। तदाखुकरीषमभवत् ॥ ३ ॥

यदाखुकरीषꣳ संभारो भवति। यदेवास्य तत्र न्यक्तं। तदेवावरुन्धे। ऊर्जं वा एतꣳरसं पृथिव्या उपदीका उद्दिहन्ति। यद्वल्मीकं। यद्वल्मीकवपा संभारो भवति। ऊर्जमेव रसं पृथिव्या अवरुन्धे। अथो श्रोत्र-मेव। श्रोत्रꣳ ह्येतत् पृथिव्याः। यद्वल्मीकः ॥ ४ ॥

अबधिरो भवति। य एवं वेद। प्रजापतिः प्रजा असृजत। तासामन्नमुपाक्षिप्यत। ताभ्यः सूदमुपप्राभिनत्। ततो वै तासामन्नं नाक्षीयत। यस्य सूदः सम्भारो भवति। नास्य गृहेऽन्नं क्षिप्यते। आपो वा इदमग्रे सलिलमासीत्। तेन प्रजापतिरश्राम्यत् ॥ ५ ॥

कथमिदꣳ स्यादिति। सोऽपश्यत् पुष्करपर्णं तिष्ठत्। सोऽमन्यत। अस्ति वै तत्। यस्मिन्निदमधितिष्ठतीति। स वराहो रूपं कृत्वोपन्यमज्जत्। स पृथिवीमध आ-

र्च्छत्। तस्या उपहत्योदमज्जत्। तत्पुष्करपर्णमप्रथयत्। यदप्रथयत् ॥ ६ ॥

तत् पृथिव्यै पृथिवित्वं। अभूद्वा इदमिति। तद्भूम्यै भूमित्वं। तां दिशोनु वातः समवहत्। ताꣳ शर्कराभिरदृꣳहत्। शं वै नोऽभूदिति। तच्छर्कराणाꣳ शर्करत्वं। यद्वराहविहतꣳ सम्भारो भवति। अस्यामेवाछम्बट्कारमग्निमाधत्ते। शर्करा भवन्ति धृत्यै ॥ ७ ॥

अथो शन्त्वाय। सरेता अग्निराधेय इत्याहुः। आपो वरुणस्य पत्नय आसन्। ता अग्निरभ्यध्यायन्। ताः समभवन्। तस्य रेतः परापतत्। तद्धिरण्यमभवत्। यद्धिरण्यमुपास्यति। सरेतसमेवाग्निमाधत्ते। पुरुष इन्वै स्वाद्रेतसोबीभत्सत इत्याहुः ॥ ८ ॥

उत्तरत उपास्यत्यबीभत्सायै। अति प्रयच्छति। आर्त्तिमेवातिप्रयच्छति। अग्निर्देवेभ्योनिलायत। अश्वोरूपं कृत्वा। सोऽश्वत्थे संवत्सरमतिष्ठत्। तदश्वत्थस्याश्वत्थत्वं। यदाश्वत्थः सम्भारो भवति। यदेवास्य तत्र न्यक्तं। तदेवावरुन्धे ॥ ९ ॥

देवा वा ऊर्जं व्यभजन्त। तत उदुम्बर उदतिष्ठत्। ऊर्ग्वा उदुम्बरः। यदौदुम्बरः सम्भारो भवति। ऊर्ज-

मेवावरुन्धे। तृतीयस्यामितो दिवि सोम आसीत्। तं गायत्र्याहरत्। तस्य पर्णमच्छिद्यत। तत्पर्णोऽभवत्। तत्पर्णस्य पर्णत्वं ॥ १० ॥

यस्य पर्णमयः सम्भारो भवति। सोमपीथमेवाव-रुन्धे। देवा वै ब्रह्मन्नवदन्त। तत्पर्ण उपाशृणोत्। सुश्रवा वै नाम। यत्पर्णमयः सम्भारो भवति। ब्रह्मवर्च-समेवावरुन्धे। प्रजापतिरग्निमसृजत। सोऽबिभेत्प्रमा-धक्ष्यतीति। तꣳ शम्याशमयत् ॥ ११ ॥

तच्छम्यै शमित्वं। यच्छमीमयः सम्भारो भवति। शान्त्या अप्रदाहाय। अग्नेः सृष्टस्य यतः। विकङ्कतं भा आर्च्छत्। यद्वैकङ्कतः सम्भारो भवति। भा एवा-वरुन्धे। सहृदयोऽग्निराधेय इत्याहुः। मरुतोऽद्भिरग्नि-मतमयन्। तस्य तान्तस्य हृदयमाच्छिन्दन्। साश-निरभवत्। यदशनिहतस्य वृक्षस्य सम्भारो भवति। सहृदयमेवाग्निमाधत्ते ॥ १२ ॥

ऊर्ध्वा अभवन्नभवद्वल्मीकोऽश्राम्यदप्रथयत्धृत्यै बीभ-त्सत इत्याहुरुन्धे पर्णत्वमशमयदाच्छन्दꣳ स्त्रीणि च ॥ अनु० ३ ॥

चतुर्थोऽनुवाकः ।

द्वादशसु विक्रामेष्वग्निमादधीत । द्वादश मासाः संवत्सरः । संवत्सरादेवैनमवरुध्याधत्ते । यद्द्वादशसु विक्रामेष्वादधीत । परिमितमवरुन्धीत । चक्षुर्निमित आदधीत । इयद्द्वादशविक्रामा३इति । परिमितञ्चैवापरिमितञ्चावरुन्धे । अनृतं वै वाचा वदति । अनृतं मनसा ध्यायति ॥ १ ॥

चक्षुर्वै सत्यं । अद्रा३गित्याह । अदर्शमिति । तत्सत्यं । यश्चक्षुर्निमितेऽग्निमाधत्ते । सत्यएवैनमाधत्ते । तस्मादाहिताग्निर्नानृतं वदेत् । नास्य ब्राह्मणोनाश्वान् गृहे वसेत् । सत्ये ह्यस्याग्निराहितः । आग्नेयी वै रात्रिः ॥ २ ॥

आग्नेयाः पशवः । ऐन्द्रमहः । नक्तं गार्हपत्यमादधाति । पशूनेवावरुन्धे । दिवाहवनीयं । इन्द्रियमेवावरुन्धे । अर्धोदिते सूर्य्यआहवनीयमादधाति । एतस्मिन् वै लोके प्रजापतिः प्रजाअसृजत । प्रजाएव तद्यजमानः सृजते । अथो भूतञ्चैव भविष्यच्चावरुन्धे ॥ ३ ॥

इडा वै मानवी यज्ञानूकाशिन्यासीत् । साश‍ृणोत् । असुराअग्निमादधतइति । तदगच्छत् । तआहवनीयमग्रआदधत । अथ गार्हपत्यं । अथान्वाहार्य्यप-

चनं। साब्रवीत्। प्रतीच्येषाꣳ श्रीरगात्। भद्राभूत्वा पराभविष्यन्तीति॥ ४ ॥

यस्यैवमग्निराधीयते। प्रतीच्यस्य श्रीरेति। भद्रो भूत्वा पराभवति। साम्रणोत्। देवा अग्निमादधत इति। तदगच्छत्। तेऽन्वाहार्य्यपचनमग्र आदधत। अथ गार्हपत्यं। अथाहवनीयं। साब्रवीत्॥ ५ ॥

प्राच्येषाꣳ श्रीरगात्। भद्राभूत्वा सुवर्गं लोकमेष्यन्ति। प्रजान्तु न वेत्स्यन्तइति। यस्यैवमग्निराधीयते। प्राच्यस्य श्रीरेति। भद्रोभूत्वा सुवर्गं लोकमेति। प्रजान्तु न विन्दते। साब्रवीदिडा मनुं। तथा वा अहं तवाग्निमाधास्यामि। यथा प्रप्रजया पशुभिर्मिथुनैर्जनिष्यसे॥६॥

प्रत्यस्मिँल्लोके स्थास्यसि। अभि सुवर्गं लोकं जेष्यसीति। गार्हपत्यमग्र आदधात्। गार्हपत्यं वा अनु प्रजाः पशवः प्रजायन्ते। गार्हपत्येनैवास्मै प्रजां पशून् प्राजनयत्। अथान्वाहार्य्यपचनं। तिर्य्यङ्ङिव वा अयं लोकः। अस्मिन्नेव तेन लोके प्रत्यतिष्ठत्। अथाहवनीयं। तेनैव सुवर्गं लोकमभ्यजयत्॥ ७॥

यस्यैवमग्निराधीयते। प्रप्रजया पशुभिर्मिथुनैर्जायते। प्रत्यस्मिँल्लोके तिष्ठति। अभि सुवर्गं लोकं जयति।

यस्य वाऽयथादेवतमग्निराधीयते। आ देवताभ्यो वृश्च्यते। पापीयान् भवति। यस्य यथादेवतं। न देवताभ्य आवृश्च्यते। वसीयान् भवति॥ भृगूणां त्वाङ्गिरसां व्रतपते व्रतेनादधामीति भृग्वङ्गिरसामादध्यात्। आदित्यानां त्वा देवानां व्रतपते व्रतेनादधामीत्यन्यासां ब्राह्मणीनां प्रजानां। वरुणस्य त्वा राज्ञो व्रतपते व्रतेनादधामीति राज्ञः। इन्द्रस्य त्वेन्द्रियेण व्रतपते व्रतेनादधामीति राजन्यस्य। मनोस्त्वा ग्रामण्यो व्रतपते व्रतेनादधामीति वैश्यस्य। ऋभूणां त्वा देवानां व्रतपते व्रतेनादधामीति रथकारस्य। यथादेवतमग्निराधीयते। न देवताभ्य आवृश्च्यते। वसीयान् भवति॥ ८॥

ध्यायति रात्रिश्चावरुन्धे भविष्यन्तीत्यब्रवीज्जनिष्यसेऽजयद्वसीयान् भवति नव च॥ अनु॰ ४॥

पञ्चमोऽनुवाकः।

प्रजापतिर्वाचः सत्यमपश्यत्। तेनाग्निमाधत्त। तेन वै स आर्ध्नोत्। भूर्भुवः सुवरित्याह। एतद्वै वाचः सत्यं। य एतेनाग्निमाधत्ते। ऋध्नोत्येव। अथो सत्यप्राशूरेव भवति। अथो य एवं विद्वानभिचरति। स्तृणुत एवैनं॥ १॥

भूरित्याह। प्रजा एव तद्यजमानः सृजते। भुवइ-

त्याह। अस्मिन्नेव लोके प्रतितिष्ठति। सुवरित्याह। सुवर्गएव लोके प्रतितिष्ठति। त्रिभिरक्षरैर्गार्हपत्यमादधाति। त्रयइमे लोकाः। एष्वेवैनं लोकेषु प्रतिष्ठितमाधत्ते। सर्वैः पञ्चभिराहवनीयं॥ २॥

सुवर्गाय वाएष लोकायाधीयते। यदाहवनीयः। सुवर्गएवास्मै लोके वाचः सत्यꣳ सर्वमाप्नोति। त्रिभिर्गार्हपत्यमादधाति। पञ्चभिराहवनीयं। अष्टौ सम्पद्यन्ते। अष्टाक्षरा गायत्री। गायत्रोऽग्निः। यावानेवाग्निः। तमाधत्ते॥ ३॥

प्रजापतिः प्रजाअसृजत। ताअस्मात्सृष्टाः पराचीरायन्। ताभ्योज्योतिरुदगृह्णात्। तं ज्योतिः पश्यन्तीः प्रजाअभिसमावर्त्तन्त। उपरीवाग्निमुद्गृह्णीयादुद्धरन्। ज्योतिरेव पश्यन्तीः प्रजायजमानमभिसमावर्त्तन्ते। प्रजापतेरक्ष्यश्वयत्। तत्परापतत्। तदश्वोऽभवत्। तदश्वस्याश्वत्वं॥ ४॥

एष वै प्रजापतिः। यदग्निः। प्राजापत्योऽश्वः। यदश्वं पुरस्तान्नयति। स्वमेव चक्षुः पश्यन् प्रजापतिरनूदेति। वज्री वाएषः। यदश्वः। यदश्वं पुरस्तान्नयति। जातानेव भ्रातृव्यान् प्रणुदते। पुनरावर्त्तयति॥ ५॥

जनिष्यमाणानेव प्रतिनुदते । न्यांहवनीयो गार्हपत्यमकामयत । निगार्हपत्यआहवनीयं । तौ विभाजं नाशक्नोत् । सोऽश्वः पूर्व्ववाड्भूत्वा । प्राञ्चं पूर्व्वमुदवहत् । तत्पूर्व्ववाहः पूर्व्ववाट्त्वं । यदश्वं पुरस्तान्नयति । विभक्तिरेवैनयोः सा । अथो नानावीर्यावेवैनौ कुरुते ॥ ६ ॥

यदुपर्य्युपरि शिरोहरेत् । प्राणान् विच्छिन्द्यात् । अधोधः शिरोहरति । प्राणानां गोपीथाय । इयत्यग्रे हरति । अथेयत्यथेयति । त्रयइमे लोकाः । एष्वेवैनं लोकेषु प्रतिष्ठितमाधत्ते । प्रजापतिरग्निमसृजत । सोऽबिभेत्प्रमाधक्ष्यतीति ॥ ७ ॥

तस्य त्रेधामहिमानं व्यौहत् । शान्त्याअप्रदाहाय । यत् त्रेधाग्निराधीयते । महिमानमेवास्य तद्व्यूहति । शान्त्याअप्रदाहाय । पुनरावर्त्तयति । महिमानमेवास्य सन्दधाति । पशुर्वाएषः । यदश्वः । एष रुद्रः ॥ ८ ॥

यदग्निः । यदश्वस्य पदेऽग्निमादध्यात् । रुद्राय पशूनपिदध्यात् । अपशुर्यजमानः स्यात् । यन्नाक्रमयेत् । अनवरुद्धाअस्य पशवः स्युः । पार्श्वतआक्रमयेत् । यथाहितस्याग्नेरङ्गाराअभ्यववर्त्तेरन् । अवरुद्धाअस्य पशवोभवन्ति । न रुद्रायापिदधाति ॥ ९ ॥

त्रीणि हवीꣳषि निर्वपति। विराजएव विक्रान्तं यजमानोनुविक्रमते। अग्नये पवमानाय। अग्नये पावकाय। अग्नये शुचये। यदग्नये पवमानाय निर्वपति। पुनात्येवैनं। यदग्नये पावकाय। पूतएवास्मिन्नन्नाद्यं दधाति। यदग्नये शुचये॥ ब्रह्मवर्चसमेवास्मिन्नुपरिष्टाद्दधाति॥ १०॥

एनमाहवनीयं धत्तेऽश्वत्वं वर्त्तयति कुरुतइति रुद्रो दधाति यदग्नये शुचयएकं च॥ अनु० ५॥

षष्ठोऽनुवाकः।

देवासुराः संयत्ताआसन्। ते देवाविजयमुपयन्तः। अग्नौ वामं वसु सन्न्यदधत। इदमु नो भविष्यति। यदि नो जेष्यन्तीति। तदग्निर्नोत्सहमशक्नोत्। तत् त्रेधा विन्यदधात्। पशुषु तृतीयं। अप्सु तृतीयं। आदित्ये तृतीयं॥ १॥

तद्देवाविजित्य। पुनरवारुरुत्सन्त। तेऽग्नये पवमानाय पुरोडाशमष्टाकपालं निरवपन्। पशवोवाअग्निः पवमानः। यदेव पशुष्वासीत्। तत्तेनावारुन्धत। तेऽग्नये पावकाय। आपोवाअग्निः पावकः। यदेवाप्स्वासीत्। तत्तेनावारुन्धत॥ २॥

तेऽग्नये शुचये। असौ वा आदित्योऽग्निः शुचिः। यदेवादित्य आसीत्। तत्तेनावारुन्धत। ब्रह्मवादिनो वदन्ति। तनुवो वावैता अग्न्याधेयस्य। आग्नेयो वा अष्टाकपालोऽग्न्याधेयमिति। यत्तं निर्वपेत्। नैतानि। यथात्मा स्यात्॥ ३॥

नाङ्गानि। तादृगेव तत्। यदेतानि निर्वपेत्। न तं। यथाङ्गानि स्युः। नात्मा। तादृगेव तत्। उभयानि सह निरुप्याणि। यज्ञस्य सात्मत्वाय। उभयं वा एतस्येन्द्रियं वीर्यमाप्यते॥ ४॥

योऽग्निमाधत्ते। ऐन्द्राग्नमेकादशकपालमनुनिर्वपेत्। आदित्यं चरुं। इन्द्राग्नी वै देवानामयातयामानौ। ये एव देवते अयातयाम्नी। ताभ्यामेवास्मा इन्द्रियं वीर्यमवरुन्धे। आदित्यो भवति। इयं वा अदितिः। अस्यामेव प्रतितिष्ठति। धेन्वै वा एतद्रेतः॥ ५॥

यदाज्यं। अनडुहस्तण्डुलाः। मिथुनमेवावरुन्धे। घृते भवति। यज्ञस्यालूक्षान्तत्वाय। चत्वार आर्षेयाः प्राश्नन्ति। दिशामेव ज्योतिषि जुहोति। पशवो वा एतानि हवीꣳषि। एष रुद्रः। यदग्निः॥ ६॥

यत्सद्य एतानि हवीꣳषि निर्वपेत्। रुद्राय पशूनपि

दध्यात्। अपशुर्यजमानः स्यात्। यन्नानुनिर्वपेत्। अनवरुद्धा अस्य पशवः स्युः। द्वादशसु रात्रीष्वनुनिर्वपेत्। संवत्सरप्रतिमा वै द्वादश रात्रयः। संवत्सरेणैवास्मै रुद्रꣳ शमयित्वा। पशूनवरुन्धे। यदेकमेकतानि हवीꣳषि निर्वपेत्॥ ७॥

यथा त्रीण्यावपनानि पूरयेत्। तादृक्तत्। न प्रजननमुच्छिꣳषेत्। एकं निरुप्य। उत्तरे समस्येत्। तृतीयमेवास्मै लोकमुच्छिꣳषति प्रजननाय। तं प्रजया पशुभिरनुप्रजायते। अथो यज्ञस्यैवैषाभिक्रान्तिः। रथचक्रं प्रवर्त्तयति। मनुष्यरथेनैव देवरथं प्रत्यवरोहति॥ ८॥

ब्रह्मवादिनो वदन्ति। होतव्यमग्निहोत्रा३ं न होतव्या३मिति। यद्यजुषा जुहुयात्। अयथापूर्व्वमाहुतीर्जुहुयात्। यन्न जुहुयात्। अग्निः पराभवेत्। तूष्णीमेव होतव्यं। यथापूर्व्वमाहुतीर्जुहोति। नाग्निः पराभवति। अग्नीधे ददाति॥ ९॥

अग्निमुखानेवर्त्तून् प्रीणाति। उपबर्हणं ददाति। रूपाणामवरुध्यै। अश्वं ब्रह्मणे। इन्द्रियमेवावरुन्धे। धेनुꣳ होत्रे। आशिष एवावरुन्धे। अनड्वाहमध्वर्यवे। वह्निर्वा अनड्वान्। वह्निरध्वर्युः॥ १०॥

बर्हिर्नैव बर्हिर्यज्ञस्यावरुन्धे । मिथुनौ गावौ ददाति । मिथुनस्यावरुध्यै । वासो ददाति । सर्व्वदेवत्यं वै वासः । सर्व्वा एव देवताः प्रीणाति । आ द्वादशभ्यो ददाति । द्वादश मासाः संवत्सरः । संवत्सर एव प्रतितिष्ठति । काममूर्ध्वं देयं । अपरिमितस्यावरुध्यै ॥ ११ ॥

आदित्ये तृतीयमस्वासीत्तत्तेनावारुन्धत स्यादाप्यते रेतोऽग्निरेकमेकमेतानि हवीꣳषि निर्वपेत् प्रत्यवरोहति ददात्यध्वर्युर्देयमेकञ्च ॥ अनु० ६ ॥

सप्तमोऽनुवाकः ।

घर्मः शिरस्तदयमग्निः । सम्प्रियः पशुभिर्भुवत् । छर्दिस्तोकाय तनयाय यच्छ । वातः प्राणस्तदयमग्निः । सम्प्रियः पशुभिर्भुवत् । स्वदितं तोकायतनयायपितुं पच । प्राचीमनुप्रदिशं प्रेहि विद्वान् । अग्नेरग्ने पुरो अग्निर्भवेह । विश्वा आशादीद्यानो विभाहि । ऊर्ज्जन्नो धेहि द्विपदे चतुष्पदे ॥ १ ॥

अर्कश्चक्षुस्तदसौ सूर्य्यस्तदयमग्निः । सम्प्रियः पशुभिर्भुवत् । यत्ते शुक्र शुक्रं वर्चः शुक्रा तनूः । शुक्रं ज्योतिरजस्रं । तेन मे दीदिहि तेन त्वादधे । अग्निनाग्ने ब्र-

ह्मणा। आनशे व्यानशे सर्व्वमायुर्व्यानशे। ये ते अग्ने शिवे तनुवौ। विराट् च स्वराट् च। ते माविशतां ते मा जिन्वतां ॥ २ ॥

ये ते अग्ने शिवे तनुवौ। सम्राट् चाभिभूश्च। ते माविशतां ते मा जिन्वतां। ये ते अग्ने शिवे तनुवौ। विभूश्च परिभूश्च। ते मा विशतां ते मा जिन्वतां। ये ते अग्ने शिवे तनुवौ। प्रभ्वी च प्रभूतिश्च। ते मा विशतां ते मा जिन्वतां। यास्ते अग्ने शिवास्तनुवः॥ ताभिस्त्वा दधे। यास्ते अग्ने घोरास्तनुवः। ताभिरमुङ्गच्छ ॥ ३ ॥

चतुष्पदे जिन्वतां तनुवस्त्रीणि च ॥ ७ ॥

अष्टमोऽनुवाकः।

इमे वा एते लोका अग्नयः। ते यदव्यावृत्ता आधीयेरन्। शोचयेयुर्यजमानं। घर्मः शिर इति गार्हपत्यमादधाति। वातः प्राण इत्यन्वाहार्य्यपचनं। अर्कश्चक्षुरित्याहवनीयं। तेनैवैनान्व्यावर्त्तयति। तथा न शोचयन्ति यजमानं। रथन्तरमभिगायति गार्हपत्य आधीयमाने। राथन्तरो वा अयं लोकः ॥ १ ॥

अस्मिन्नेवैनं लोके प्रतिष्ठितमाधत्ते। वामदेव्यम-

भिगायतउधिय्यमाणे। अन्तरिक्षं वै वामदेव्यं। अन्तरिक्षएवैनं प्रतिष्ठितमाधत्ते। अथो शान्तिर्वै वामदेव्यं। शान्तमेवैनं पशव्यमुद्धरते। बृहद्भिगायतआहवनीयआधीयमाने। बार्हतोवाअसौ लोकः। अमुष्मिन्नेवैनं लोके प्रतिष्ठितमाधत्ते। प्रजापतिरग्निमसृजत॥ २॥

सोऽश्वोवारो भूत्वा पराङैत्। तं वारवन्तीयेनावारयत। तद्वारवन्तीयस्य वारवन्तीयत्वं। श्यैतेन श्येती अकुरुत। तच्छ्यैतस्य श्यैतत्वं। यद्वारवन्तीयमभिगायते। वारयित्वैवैनं प्रतिष्ठितमाधत्ते। श्यैतेन श्येतीकुरुते। घर्मः शिरइति गार्हपत्यमादधाति। सशीर्षाणमेवैनमाधत्ते॥ ३॥

उपैनमुत्तरोयज्ञोनमति। रुद्रोवाएषः। यदग्निः। सआधीय्यमानईश्वरोयजमानस्य पशून् हिꣳसितोः। सम्प्रियः पशुभिर्भुवदित्याह। पशुभिरेवैनꣳ सम्प्रियं करोति। पशूनामहिꣳसायै। छर्दिस्तोकाय तनयाय यच्छेत्याह। आशिषमेवैतामाशास्ते। वातः प्राणइत्यन्वाहार्यपचनं॥ ४॥

सप्राणमेवैनमाधत्ते। स्वदितं तोकाय तनयाययितुं

पचेत्याह। अन्नमेवास्मै स्वदयति। प्राचीमनु प्रदिशं प्रेहि विद्वानित्याह। विभक्तिरेवैनयोः सा। अथो नानावीर्यावेवैनौ कुरुते। ऊर्जन्नो धेहि द्विपदे चतुष्पद इत्याह। आशिषमेवैतामाशास्ते। अर्कश्चक्षुरित्याहवनीयं। अर्को वै देवानामन्नं॥ ५॥

अन्नमेवावरुन्धे। तेन मे दीदिहीत्याह। समिन्ध एवैनं। आनशे व्यानशइति चिरुदिङ्गयति। त्रयइमे लोकाः। एष्वेवैनं लोकेषु प्रतिष्ठितमाधत्ते। तत्तथा न कार्य्यं। वीङ्कितमप्रतिष्ठितमादधीत। उद्धृत्यैवाधायाभिमन्त्र्यः। अवीङ्कितमेवैनं प्रतिष्ठितमाधत्ते॥ विराट् च स्वराट् च यास्ते अग्ने शिवास्तनुवस्ताभिस्त्वादधइत्याह। एतावा अग्नेः शिवास्तनुवः। ताभिरेवैनः समर्धयति। यास्ते अग्ने घोरास्तनुवस्ताभिरमुं गच्छेति ब्रूयाद्यं द्विष्यात्। ताभिरेवैनं पराभावयति॥ ६॥

लोकोऽसृजतैनमाधत्तेऽन्वाहार्यपचनं देवानामन्नमेनं प्रतिष्ठितमाधत्ते पञ्च च॥ अनु० ८॥

नवमोऽनुवाकः।

शमीगर्भादग्निं मन्थति। एषा वा अग्नेर्यज्ञिया तनूः। तामेवास्मै जनयति। अदितिः पुत्रकामा। साध्येभ्यो

देवेभ्यो ब्रह्मौदनमपचत् । तस्या उच्छेषणमददुः । तत्प्राश्नात् । सा रेतोऽधत्त । तस्यै धाता चार्यमा चाजायेतां । सा द्वितीयमपचत् ॥ १ ॥

तस्या उच्छेषणमददुः । तत्प्राश्नात् । सा रेतोऽधत्त । तस्यै मित्रश्च वरुणश्चाजायेतां । सा तृतीयमपचत् । तस्या उच्छेषणमददुः । तत्प्राश्नात् । सा रेतोऽधत्त । तस्या अꣳशश्च भगश्चाजायेतां । सा चतुर्थमपचत् ॥ २ ॥

तस्या उच्छेषणमददुः । तत्प्राश्नात् । सा रेतोऽधत्त । तस्या इन्द्रश्च विवस्वाꣳश्चाजायेतां । ब्रह्मौदनं पचति । रेत एव तद्दधाति । प्राश्नन्ति ब्राह्मणा ओदनं । यदाज्यमुच्छिष्यते । तेन समिधोऽभ्यज्याद्दधाति । उच्छेषणाद्ध्यदिती रेतोऽधत्त ॥ ३ ॥

उच्छेषणादेव तद्रेतो धत्ते । अस्थि वा एतत् । यत्समिधः । एतद्रेतः । यदाज्यं । यदाज्येन समिधोऽभ्यज्यादधाति । अस्थ्येव तद्रेतसि दधाति । तिस्र आदधाति मिथुनत्वाय । इयतीर्भवन्ति । प्रजापतिना यज्ञमुखेन सम्मिताः ॥ ४ ॥

इयतीर्भवन्ति । यज्ञपुरुषा सम्मिताः । इयतीर्भवन्ति । एतावद्वै पुरुषे वीर्य्यं । वीर्य्यसम्मिताः । आर्द्रा भवन्ति ।

आर्द्रमिव हि रेतः सिच्यते। चित्रियस्याश्वत्थस्याद-धाति। चित्रमेव भवति। घृतवतीभिरादधाति॥ ५॥

एतद्वा अग्नेः प्रियं धाम। यद्घृतं। प्रियेणैवैनं धाम्ना समर्धयति। अथो तेजसा। गायत्रीभिर्ब्राह्मणस्याद-ध्यात्। गायत्रछन्दा वै ब्राह्मणः। स्वस्य छन्दसः प्रत्यय-नस्त्वाय। त्रिष्टुग्भी राजन्यस्य। त्रिष्टुप्छन्दा वै राज-न्यः। स्वस्य छन्दसः प्रत्ययनस्त्वाय॥ ६॥

जगतीभिर्वैश्यस्य। जगतीछन्दा वै वैश्यः। स्वस्य छ-न्दसः प्रत्ययनस्त्वाय। तꣳ संवत्सरं गोपायेत्। संवत्स-रꣳ हि रेतो हितं वर्धते। यद्येनꣳ संवत्सरे नोपन-मेत्। समिधः पुनरादध्यात्। रेत एव तद्धितं वर्धमा-नमेति। न माꣳसमश्नीयात्। न स्त्रियमुपेयात्॥ ७॥

यन्माꣳसमश्नीयात्। यत्स्त्रियमुपेयात्। निर्वीर्य्यः स्यात्। नैनमग्निरुपनमेत्। श्व आधास्यमानो ब्रह्मौदनं पचति। आदित्या वा इत उत्तमाः सुवर्गं लोकमायन्। ते वा इतो यन्तं प्रतिनुदन्ते। एते खलु वा आदित्याः। यद्ब्रा-ह्मणाः। तैरेव सन्त्वं गच्छति॥ ८॥

नैनं प्रतिनुदन्ते। ब्रह्मवादिनो वदन्ति। क्वासः। अग्निः कार्य्यः। यो ऽस्मै प्रजां पशून् प्रजनयतीति। शल्कै-

स्ताः रात्रिमग्निमिन्धीत। तस्मिन्नुपव्युपमरणीनिष्टपेत्। यथर्षभाय वाशितान्यावित्क्षायति। तादृगेव तत्। अपोदूह्यभस्माग्निं मन्थति॥ ९॥

सैव साग्नेः सन्ततिः। तं मन्थित्वा प्राञ्चमुद्धरति। संवत्सरमेव तद्रेतो हितं प्रजनयति। अनाहितस्तस्याग्निरित्याहुः। यः समिधोऽनाधायाग्निमाधत्तइति। ताः संवत्सरे पुरस्तादादध्यात्। संवत्सरादेवैनमवरुध्याधत्ते। यदि संवत्सरे नादध्यात्। द्वादश्यां पुरस्तादादध्यात्। संवत्सरप्रतिमावै द्वादशरात्रयः॥ संवत्सरमेवास्याहिताभवन्ति। यदि द्वादश्यां नादध्यात्। त्र्यहे पुरस्तादादध्यात्। आहिताएवास्य भवन्ति ॥ १० ॥

द्वितीयमपचच्चतुर्थमपचददितीरेतोऽधत्त सम्मितापृतवतीभिरादधाति राजन्यः स्वस्य छन्दसः प्रत्ययनस्त्वायेंयाग्नेच्छति मन्थति रात्रयश्चत्वारि च॥ अनु० ९॥

दशमोऽनुवाकः।

प्रजापतिः प्रजाअसृजत। स रिरिचानोऽमन्यत। स तपोऽतप्यत। स आत्मन् वीर्यमपश्यत्। तदवर्धत।

तदस्मात्सहँसोर्ध्वमसृज्यत। सा विराडभवत्। तां देवासुरा अंगृह्णन्त। सोऽब्रवीत्प्रजापतिः। मम वा एषा॥ १॥

दोहा एव युष्माकमिति। सा ततः प्राच्युदक्रामत्। तत्प्रजापतिः पर्यगृह्णात्। अथर्वपितुं मे गोपायेति। सा द्वितीयमुदक्रामत्। तत्प्रजापतिः पर्यगृह्णात्। नर्यं प्रजां मे गोपायेति। सा तृतीयमुदक्रामत्। तत्प्रजापतिः पर्यगृह्णात्। शँस्य पशून्मे गोपायेति॥ २॥

सा चतुर्थमुदक्रामत्। तत्प्रजापतिः पर्यगृह्णात्। सप्रथ सभां मे गोपायेति। सा पञ्चममुदक्रामत्। तत्प्रजापतिः पर्यगृह्णात्। अहेबुध्निय मन्त्रं मे गोपायेति। अग्नी वाव सा तान् व्याक्रामत। तान् प्रजापतिः पर्यगृह्णात्। अथो पङ्क्तिमेव। पङ्क्तिर्वा एषा ब्राह्मणे प्रविष्टा॥ ३॥

तामात्मनोऽधिनिर्मिमीते। यदग्निराधीयते। तस्मादेतावन्तोऽग्नय आधीयन्ते। पाण्ड इदँ सर्व्वं। पाण्डुनैव पाण्डुँ स्पृणोति। अथर्वपितुं मे गोपायेत्याह। अन्नमेवैतेन स्पृणोति। नर्यं प्रजां मे गोपायेत्याह। प्रजामेवैतेन स्पृणोति। शँस्य पशून्मे गोपायेत्याह ॥ ४॥

पशूनेवैतेन स्पृणोति । सप्रथ सभां मे गोपायेत्याह । सभामेवैतेनेन्द्रियꣳ स्पृणोति । अहेबुध्निय मन्त्रं मे गोपायेत्याह । मन्त्रमेवैतेन श्रियꣳ स्पृणोति । यदन्वाहार्यपचनेऽन्वाहार्यं पचन्ति । तेन सोऽस्याभीष्टः प्रीतः । यद्गार्हपत्य आज्यमधिश्रयन्ति सम्पत्नीर्याजयन्ति । तेन सोऽस्याभीष्टः प्रीतः । यदाहवनीये जुह्वति ॥ ५ ॥

तेन सोऽस्याभीष्टः प्रीतः । यत्सभायां विजयन्ते । तेन सोऽस्याभीष्टः प्रीतः । यदावसथेऽन्नꣳ हरन्ति । तेन सोऽस्याभीष्टः प्रीतः । तथास्य सर्व्वे प्रीता अभीष्टा आधीयन्ते । प्रवसथमेष्यन्नेवमुपतिष्ठेतैकमेकं । यथा ब्राह्मणाय गृहे वासिने परिदाय गृहानेति । तादृगेव तत् । पुनरागत्योपतिष्ठते ॥ स भागधेयमेवैषां तत् । सा ततऊर्ध्वारोहत् । सा रोहिण्यभवत् । तद्रोहिण्यै रोहिणित्वं । रोहिण्यामग्निमादधीत । स्व एवैनं योनौ प्रतिष्ठितमाधत्ते । ऋध्नोत्येनेन ॥ ६ ॥

एषा पशून्मे गोपायेति प्रविष्टा पशून्मे गोपायेत्याह जुह्वति तिष्ठते सप्त च ॥ अनु० १० ॥

ब्रह्म सन्धत्तं कृत्तिकासूद्धन्ति द्वादशसु प्रजापति-

वाचोदेवासुराधर्म्मः शिरइमे वै शमीगर्भात्प्रजापतिः स रिरिचानः स तपः सञ्जात्मन्वीर्य्यं दर्श ॥

ब्रह्म सन्धत्तं तौ दिव्यावर्था शन्त्वाय प्राच्यैपां यदुर्युपरि यत्सद्यः सोश्वोवारौभूत्वा जगतीभिरश्नौतिः ॥

इति प्रथमोऽध्यायः ॥

हरिः ॐ ॥

प्रथमाष्टके द्वितीयाध्याये

प्रथमोऽनुवाकः ।

उद्धन्यमानमस्याश्वमेध्यं। अपपाप्मानं यजमानस्य हन्तु। शिवानः सन्तु प्रदिशश्चतस्रः। शन्नो माता पृथिवी तोकसाता। शन्नोदेवीरभिष्टये। आपोभवन्तु पीतये। शंयोरभिस्रवन्तु नः। वैश्वानरस्य रूपं। पृथिव्यां परिस्रसा। स्योनमाविशन्तु नः॥ १ ॥

यदिदं दिवो यददः पृथिव्याः। सञ्जज्ञाने रोदसी सम्बभूवतुः। ऊषान् कृष्णमवतु कृष्णमूषाः। इहोभयो-र्यज्ञियमागमिष्ठाः। ऊतीः कुर्व्वाणो यत् पृथिवीमचरः। गुहाकारमाखुरूपं प्रतीत्य। तत्ते न्यक्तमिह सम्भरन्तः। शतं जीवेम शरदः सवीराः। ऊर्जं पृथिव्यारसमाभरन्तः। शतं जीवेम शरदः पुरूचीः॥ २॥

वंम्रीभिरनुवित्तं गुहासु। श्रोत्रं त उर्व्य बधिराभवामः। प्रजापतिसृष्टानां प्रजानां। क्षुधोपहत्यै सुवितन्नो अस्तु। उपप्रभिन्नमिषमूर्जं प्रजाभ्यः। सूदं गृहेभ्योरसमाभरामि। यस्य रूपं बिभ्रदिमामविन्दत्। गुहाप्रविष्टाꣳ सरिरस्य मध्ये। तस्येदं विहृतमाभरन्तः। अछं बट्कारमस्यां विधेम॥ ३॥

यत्पर्यपश्यत्सरिरस्य मध्ये। उर्वीमपश्यज्जगतः प्रतिष्ठां। तत्पुष्करस्यायतनाद्धि जातं। पर्णं पृथिव्याः प्रथनꣳ हरामि। याभिरदृꣳहज्जगतः प्रतिष्ठां। उर्वीमिमां विश्वजनस्य भर्त्रीं। तानः शिवाः शर्कराः सन्तु सर्व्वाः। अग्नेरेतश्चन्द्रꣳ हिरण्यं। अद्भ्यः सम्भूतममृतं प्रजासु। तत्सम्भरन्नुत्तरतोनिधाय॥ ४॥

अतिप्रयच्छन्दुरितिन्तरेयं। अश्वोरूपं कृत्वा यदश्वत्थेऽतिष्ठः। संवत्सरं देवेभ्योनिलाय। तत्ते न्यक्तमिह सम्भरन्तः। शतं जीवेम शरदः सवीराः। ऊर्जः पृथिव्या अध्युत्थितोऽसि। वनस्पते शतवल्शो विरोह। त्वया वयमिषमूर्जं मदन्तः। रायस्पोषेण समिषा मदेम। गायत्रिया ह्रियमाणस्य यत्ते॥ ५॥

पर्णमपतत्तृतीयस्यै दिवोधि। सोऽयं पर्णः सोमप-

र्णाद्धि जातः। ततो हरामि सोमपीथस्यावरुध्यै। देवानां ब्रह्मवादं वदतां यत्। उपाश्टणोः सुश्रवा वै श्रुतोऽसि। ततो मामाविशतु ब्रह्मवर्चसं। तत्सम्भरं स्तदवरुन्धीय साक्षात्। यया ते सृष्टस्याग्नेः। हेतिमशमयत्प्रजापतिः। तामिमामप्रदाहाय॥ ६॥

शमीं शान्त्यै हराम्यहं। यत्ते सृष्टस्य यतः। विकङ्कतं भा आर्च्छज्जातवेदः। तया भासा सम्मितः। उरुन्नो लोकमनुप्रभाहि। यत्ते तान्तस्य हृदयमाच्छिन्दज्जातवेदः। मरुतोऽद्भिस्तमयित्वा। एतत्ते तदशनेः सम्भरामि। सात्मा अग्ने सहृदयो भवेह। चित्रियादश्वत्थात्सम्भृताद्बृहत्यः॥ ७॥

शरीरमभिसंस्कृतास्थ। प्रजापतिना यज्ञमुखेन सम्मिताः। तिस्रस्त्रिवृद्भिर्मिथुनाः प्रजात्यै। अश्वत्थाद्धव्यवाहाद्धि जातां। अग्नेस्तनूं यज्ञियां सम्भरामि। शान्तयोनिं शमीगर्भं। अग्नये प्रजनयितवै। यो अश्वत्थः शमीगर्भः। आरुरोह त्वे सचा। तन्ते हरामि ब्रह्मणा॥ ८॥

यज्ञियैः केतुभिः सह। यन्त्वा समभरं जातवेदः। यथा शरीरं भूतेषु न्यक्तं। स सम्भृतः सीद शिवः प्रजाभ्यः।

उरुन्नो लोकमनु नेषि विद्वान्। प्रवेधसे कवये मेध्याय। वचो वन्दारु वृषभाय वृष्णे। यतो भयमभयं तन्नो अस्तु। अव देवान् यजे हेड्यान्। समिधाग्निं दुवस्यत॥ ९ ॥

घृतैर्बोधयतातिथिं। आस्मिन् हव्याजुहोतन। उपत्वाग्ने हविष्मतीः। घृताचीर्यन्तु हर्यत। जुषस्व समिधो मम। तन्त्वा समिद्भिरङ्गिरः। घृतेन वर्धयामसि। बृहच्छोचायविष्ठ्य। समिध्यमानः प्रथमोनु धर्मः। समक्तुभिरज्यते विश्ववारः॥ १० ॥

शोचिष्केशो घृतनिर्णिक्पावकः। सुयज्ञो अग्निर्यजथाय देवान्। घृतप्रतीको घृतयोनिरग्निः। घृतैः समिद्धो घृतमस्यान्नं। घृतप्रुषस्त्वा सरितो वहन्ति। घृतं पिबन्त्सुयजा यक्षि देवान्। आयुर्दा अग्ने हविषो जुषाणः। घृतप्रतीको घृतयोनिरेधि। घृतं पीत्वा मधु चारु गव्यं। पितेव पुत्रमभिरक्षतादिमं॥ ११ ॥

त्वामग्ने समिधानं यविष्ठ। देवा दूतं चक्रिरे हव्यवाहं। उरुज्रयसं घृतयोनिमाहुतं। त्वेषञ्चक्षुर्दधिर चोदयन्वति। त्वामग्ने प्रदिव आहुतं घृतेन। सुम्नायवः सुषमिधा समीधिरे। स वावृधान ओषधीभिरुक्षितः उरुज्रयांसि पार्थिवा वितिष्ठसे। घृतप्रतीकश्च ऋ-

तस्य धूरुपदं। अग्निं मित्रं न संमिधानऋञ्जते॥ १२॥

इन्धानो अक्रो विदथेषु दीद्यत्। शुक्रवर्णामुदुनो यꣳ स ते धियं। प्रजाअग्ने संवासय। आशाश्च पशुभिः सह। राष्ट्राण्यस्मा आधेहि। यान्यासंत्सवितुः सवे। महो विश्वपत्नी सदने ऋतस्य। अर्वाचीरातं धरुणेरयीणां। अन्तर्वत्नी जन्यं जातवेदसं। अध्वराणां जनयथः पुरोगां॥ १३॥

आरोहतं दशतꣳशक्करीर्मम। ऋतेनाग्न आयुषा वर्चसा सह। ज्योग्जीवन्त उत्तरामुत्तराꣳ समां। दर्शमहं पूर्णमासं यज्ञं यथा यजै। ऋत्वियवतीस्थो अग्निरेतसौ। गर्भं दधाथान्ते वामहं ददे। तत्सत्यं यद्वीरं बिभृथः। वीरं जनयिष्यथः। ते मत्प्रातः प्रजनिष्येथे। ते मा प्रजाते प्रजनयिष्यथः॥ १४॥

प्रजया पशुभिर्ब्रह्मवर्चसेन सुवर्गे लोके। अनृतात्सत्यमुपैमि। मानुषाद्दैव्यमुपैमि। दैवीं वाचं यच्छामि। शल्कैरग्निमिन्धानः। उभौ लोकौ संनेमहं। उभयोर्लोकयोर्ऋध्वा। अतिमृत्युं तराम्यहं। जातवेदो भुवनस्य रेतः। इह सिञ्च तपसो यज्जनिष्यते॥ १५॥

अग्निमश्वत्थादधि हव्यवाहं। शमीगर्भाज्जनयन् यो

मयोऽभूः। अयं ते योनिर्ऋत्वियः। यतो जातो अरोचथाः। तं जानन्नग्न आरोह। अथा नो वर्धया रयिं। अपेतवीतविचसर्पतातः। येऽत्र स्थ पुराणा ये च नूतनाः। अदादिदं यमोवसानं पृथिव्याः। अक्रन्निमं पितरो लोकमस्मै ॥ १६ ॥

अग्नेर्भस्मास्यग्नेः पुरीषमसि। सञ्ज्ञानमसि कामधरणं। मयि ते कामधरणं भूयात्। संवः सृजामि हृदयानि। सꣳसृष्टं मनो अस्तु वः। सꣳसृष्टः प्राणो अस्तु वः। संयावः प्रियास्तनुवः। सम्प्रियाहृदयानि वः। आत्मा वो अस्तु सम्प्रियः। सम्प्रियास्तनुवो मम ॥ १७ ॥

कल्पेतां द्यावापृथिवी। कल्पन्तामापओषधीः। कल्पन्तामग्नयः पृथक्। मम ज्यैष्ठ्याय सव्रताः। येऽग्नयः समनसः। अन्तरा द्यावापृथिवी। वासन्तिकावृतू अभिकल्पमानाः। इन्द्रमिव देवाअभिसंविशन्तु। दिवस्त्वा वीर्येण। पृथिव्यै महिम्ना ॥ १८ ॥

अन्तरिक्षस्य पोषेण। सर्व्वपशुमादधे। अजीजनन्नमृतं मर्त्यासः। अस्रेमाणं तरणिं वीडुजम्भं। दश स्वसारो अग्रुवः समीचीः। पुमाꣳसञ्जातमभिसꣳरभ-

न्तां। प्रजापतेस्त्वा प्राणेनाभिप्राणिमि। पूष्णः पोषेण मह्यं। दीर्घायुत्वाय शतशारदाय। शतꣳ शरद्भ्य आयुषे वर्चसे ॥ १९ ॥

जीवात्वै पुण्याय। अहं त्वदस्मि मदसि त्वमेतत्। ममासि योनिस्तव योनिरस्मि। ममैव सन्वह हव्यान्यग्ने। पुत्रः पित्रे लोककृज्जातवेदः। प्राणे त्वामृतमादधामि। अन्नादमन्नाद्याय। गोप्तारं गुप्त्यै। सुगार्हपत्यो विदहन्नरातीः। उषसः श्रेयसी श्रेयसीर्दधत् ॥ २० ॥

अग्ने सपत्नाꣳ अपबाधमानः। रायस्पोषमिषमूर्जमस्मासु धेहि। इमा उ मामुपतिष्ठन्तु रायः। आभिः प्रजाभिरिह संवसेय। इहो इडा तिष्ठतु विश्वरूपी। मध्ये वसोर्दीदिहि जातवेदः। ओजसे बलाय त्वोद्यच्छे। वृषणे शुष्मायायुषे वर्चसे। सपत्नतूरसि वृत्रतूः। यस्ते देवेषु महिमा सुवर्गः ॥ २१ ॥

यस्त आत्मा पशुषु प्रविष्टः। पुष्टिर्या ते मनुष्येषु पप्रथे। तया नो अग्ने जुषमाण एहि। दिवः पृथिव्याः पर्यन्तरिक्षात्। वातात्पशुभ्यो अध्योषधीभ्यः। यत्र यत्र जातवेदः सम्बभूव। ततो नो अग्ने जुषमाण एहि। प्राची-

मनु प्रदिशं प्रेहि विद्वान्। अग्नेरग्ने पुरोअग्निर्भवह। विश्वाआशादीद्यानो विभाहि॥ २२॥

ऊर्ज्जन्नोधेहि द्विपदे चतुष्पदे। अन्वग्निरुषसामग्र-मख्यत्। अन्वहानि प्रथमोजातवेदाः। अनुसूर्य्यस्य पुरुचाच रश्मीन्। अनुद्यावापृथिवी आततान। विक्र-मस्व महाँ असि। वेदिपन्मानुषेभ्यः। चिषु लोकेषु जागृहि। यदिदं दिवोयददः पृथिव्याः। संविदाने रोदसी सम्बभूवतुः॥ २३॥

तयोः पृष्ठे सीदतु जातवेदाः। शम्भूः प्रजाभ्यस्तनुवे स्योनः। प्राणं त्वामृतआदधामि। अन्नादमन्नाद्याय। गोप्तारं गुप्त्यै। यत्ते शुक्र शुक्रं वर्चः शुक्रा तनूः। शुक्रं ज्यो-तिरजस्रं। तेन मे दीदिहि तेन त्वादधे। अग्निनाग्ने ब्रह्मणा। आनशे व्यानशे सर्व्वमायुर्व्यानशे॥ २४॥

नर्य्यं प्रजां मे गोपाय। अमृतत्वाय जीवसे। जातां जनिष्यमाणाञ्च। अमृते सत्ये प्रतिष्ठितां। अथर्व्व पितुं मे गोपाय। रसमन्नमिहायषे। अदब्धायोऽशीततनो। अविषन्नः पितुं कृणु। शंस्य पशून्मे गोपाय। द्विपादो ये चतुष्पदः॥ २५॥

अष्टाशफाश्च यइहाग्ने। ये चैकशफाआशुगाः।

सप्रथ सभां मे गोपाय। येच सभ्याः सभासदः। तानि-न्द्रियावतः कुरु। सर्व्वमायुरुपासतां। अहे बुध्निय मन्त्रं मे गोपाय। यमृषयस्त्रयिविदाविदुः। ऋचः सामानि यजूꣳषि। सा हि श्रीरमृता सतां॥ २६॥

चतुःशिखण्डा युवतिः सुपेशाः। घृतप्रतीका भुवनस्य मध्ये। मर्म्मृज्यमाना महते सौभगाय। मह्यं धुक्ष्व यज-मनाय कामान्। इहैव सन्तच्च सतो वोऽअग्नयः। प्राणेन वाचा मनसा बिभर्म्मि तिरोमासन्तमायुर्माप्रहासीत्। ज्योतिषा वो वैश्वानरेणोपतिष्ठे। पञ्चधाग्नीन्व्यक्रामत्। विराट्सृष्टा प्रजापतेः। ऊर्ध्वारोहद्रोहिणी॥ योनिरग्नेः प्रतिष्ठितिः॥ २७॥

विशन्तु नः पुरूचीर्विधेम निधापयन्तेऽप्रदाहाय ब्रह्-त्यो ब्रह्मणा दुवस्यत विश्ववारद्रमर्म्मृञ्जते पुरोगां प्रज-नयिष्यथो जनिष्यतेऽस्मै मर्म महिम्ना वर्चसे दधत्सुवर्गा भाहि सम्बभूवतुरायुर्व्यानशे चतुष्पदः सतां प्रजापते-र्द्वे च॥ अनु० १॥

द्वितीयोऽनुवाकः।

नवैतान्यहानि भवन्ति। नव वै सुवर्गालोकाः। यदे-तान्यहान्युपयन्ति। नवस्वेव तत्सुवर्गेषु लोकेषु सत्रिणः

प्रतितिष्ठन्तोयन्ति। अग्निष्टोमाः परः सामानः कार्य्या-इत्याहुः। अग्निष्टोमसम्मितः सुवर्गो लोक इति। द्वादशाग्निष्टोमस्य स्तोत्राणि। द्वादशमासाः संवत्सरः। तत-न्नसूक्ष्यं। उक्थ्याएव सप्तदशाः परः सामानः कार्य्याः॥१॥

पशवोवाउक्थानि। पशूनामवरुध्यै। विश्वजिदभि-जितावग्निष्टोमौ। उक्थ्याः सप्तदशाः परः सामानः। ते सꣳस्तुताविराजमभिसम्पद्यन्ते। द्वे चर्चावतिरि-च्येते। एकया गौरतिरिक्तः। एकयायुरूनः। सुवर्गोवै लोकोज्योतिः। ऊर्ग्विराट्॥२॥

सुवर्गमेव तेन लोकमभिजयन्ति। यत्परꣳ राथन्त-रं। तत्प्रथमेऽहन् कार्य्यं। बृहद्द्वितीये। वैरूपं तृतीये। वैराजं चतुर्थे। शाक्वरं पञ्चमे। रैवतꣳ षष्ठे। तद्धुपृष्ठेभ्यो नयन्ति। सन्ततयएते ग्रहागृह्यन्ते॥३॥

अतिग्राह्याः परः सामसु। इमानेवैतैर्लोकान्त्सन्त-न्वन्ति। मिथुनाएते ग्रहागृह्यन्ते। अतिग्राह्याः परः सामसु। मिथुनमेव तैर्यजमानाअवरुन्धते। बृहत्पृष्ठं भवति। बृहद्वै सुवर्गोलोकः। बृहतैव सुवर्गं लोकं यन्ति। त्रयस्त्रिꣳशि नाम साम। माध्यन्दिने पवमाने भवति॥४॥

चयस्त्रिंशद्वै देवताः। देवता एवावरुन्धते। ये वा इतः पराञ्चं संवत्सरमुपयन्ति। न हैनन्ते स्वस्ति समश्नुवते। अथ येऽमुतोऽर्वाञ्चमुपयन्ति। ते हैनं स्वस्ति समश्नुवते। एतद्वा अमुतोऽर्वाञ्चमुपयन्ति। यदेवं। यो ह खलु वाव प्रजापतिः। स उ वेवेन्द्रः। तदु देवेभ्यो नयन्ति ॥ ५ ॥

कार्याविराड्गृह्यन्ते पवमाने भवतीन्द्र एकञ्च ॥ अनु० २ ॥

तृतीयोऽनुवाकः।

सन्ततिर्वा एते ग्रहाः। यत्परः सामानः। विषूचीं दिवा कीर्त्यं। यथा शालायै पक्षसी। एवं संवत्सरस्य पक्षसी। यदेतेन गृह्णीरन्। विषूची संवत्सरस्य पक्षसी व्यवस्रंसेयातां। आर्तिमार्छेयुः। यदेते गृह्यन्ते। यथा शालायै पक्षसी मध्यमं वंशमभिसमायच्छति ॥ १ ॥

एवं संवत्सरस्य पक्षसी दिवाकीर्त्यमभिसन्तन्वन्ति। नार्त्तिमार्छन्ति। एकविंशमहर्भवति। शुक्राग्रा ग्रहा गृह्यन्ते। प्रत्युत्तब्ध्यै सयत्वाय। सौर्यं एतदहः पशुरालभ्यते। सौर्योऽतिग्राह्यो गृह्यते। अहरेव रूपेण समर्धयन्ति। अथो अह्न एवैष बलिर्ह्रियते। सप्तैतदहरतिग्राह्या गृह्यन्ते ॥ २ ॥

सप्त वै शीर्षण्याः प्राणाः। असावादित्यः शिरः प्रजानां। शीर्षन्नेव प्रजानां प्राणान् दधाति। तस्मात्सप्त शीर्षन् प्राणाः। इन्द्रोवृत्रꣳहत्वा। असुरान् पराभाव्य। सइमांल्लोकानभ्यजयत्। तस्यासौ लोकोनाभिजितआसीत्। तं विश्वकर्म्मा भूत्वाभ्यजयत्। यद्वैश्वकर्म्मणोगृह्यते ॥ ३ ॥

सुवर्गस्य लोकस्याभिजित्यै। प्र वाएतेऽस्माल्लोकाच्च्यवन्ते। ये वैश्वकर्म्मणं गृह्णते। आदित्यश्चो गृह्यते। इयं वाअदितिः। अस्यामेव प्रतितिष्ठन्ति। अन्योऽन्योगृह्येते। विश्वान्येवान्ये न कर्म्माणि कुर्व्वाणायन्ति। अस्यामन्ये न प्रतितिष्ठन्ति। तावापराधात्संवत्सरस्यान्योन्यो गृह्येते॥तावुभौ सह महाव्रते गृह्येते। यज्ञस्यैवान्तं गत्वा। उभयोर्लोकयोः प्रतितिष्ठन्ति। अर्कमुक्थं भवति। अन्नाद्यस्यावरुध्यै ॥ ४ ॥

समायच्छेत्यतिग्राह्यागृह्यन्ते गृह्यते संवत्सरस्यान्योन्यो गृह्येते पञ्चच ॥ अनु ०३ ॥

### चतुर्थोऽनुवाकः ।

एकविꣳशएष भवति। एतेन वै देवाएकविꣳशेन। आदित्यमितउत्तमꣳ सुवर्गं लोकमारोहयन्। स वा-

एषइतएकविꣳशः। तस्य दशावस्तादहानि। दश परस्तात्। स वाएष विराज्युभयतः प्रतिष्ठितः। विराजि हि वाएषउभयतः प्रतिष्ठितः। तस्मादन्तरेमौ लोकौ यन्। सर्व्वेषु सुवर्गेषु लोकेष्वभितपन्नेति॥ १॥

देवावाआदित्यस्य सुवर्गस्य लोकस्य। पराचोऽतिपादादबिभयुः। तच्छन्दोभिरदृꣳहन्धृत्यै। देवावाआदित्यस्य सुवर्गस्य लोकस्य।अवाचोऽवपादादबिभयुः। तं पञ्चभीरश्मिभिरुदवयन्। तस्मादेकविꣳशेऽहन् पञ्च दिवाकीर्त्यानि क्रियन्ते। रश्मयोवै दिवाकीर्त्यानि। ये गायत्रे। ते गायत्रीपूत्तरयोः पवमानयोः॥ २॥

महादिवाकीर्त्यꣳ होतुः पृष्ठं। विकर्णं ब्रह्मसाम। भासोऽग्निष्टोमः। अथैतानि पराणि। परैर्वै देवाआदित्यꣳ सुवर्गं लोकमपारयन्। यदपारयन्। पत्पराणां परत्वं। पारयन्त्येनं पराणि। यएवं वेद। अथैतानि स्पराणि। स्परैर्वै देवाआदित्यꣳ सुवर्गं लोकमस्पारयन्। यदस्पारयन्। तत्स्पराणाꣳ स्परत्वं। स्पारयन्त्येनꣳ स्पराणि। य एवं वेद॥ ३॥

एति पवमानयोः स्पराणि पञ्च च॥ अनु० ४॥

पञ्चमोऽनुवाकः ।

अप्रतिष्ठां वा एते गच्छन्ति । येषाᳬ संवत्सरेऽनाप्तेऽथ । एकादशिन्याप्यते । वैष्णवं वामनमालभन्ते । यज्ञो वै विष्णुः । यज्ञमेवालभन्ते प्रतिष्ठित्यै । ऐन्द्राग्नमालभन्ते । इन्द्राग्नी वै देवानामयातयामानौ । ये एव देवते अयातयाम्नी । ते एवालभन्ते ॥ १ ॥

वैश्वदेवमालभन्ते । देवता एवावरुन्धते । द्यावापृथिव्यां धेनुमालभन्ते । द्यावापृथिव्योरेव प्रतितिष्ठन्ति । वायव्यं वत्समालभन्ते । वायुरेवैभ्यो यथायतनाद्देवता अवरुन्धे । आदित्यामविं वशामालभन्ते । इयं वा अदितिः । अस्यामेव प्रतितिष्ठन्ति । मैत्रावरुणीमालभन्ते ॥ २ ॥

मित्रेणैव यज्ञस्य स्विष्टᳬ शमयन्ति । वरुणेन दुरिष्टं । प्राजापत्यं तूपरं महावृतआलभन्ते । प्राजापत्योऽतिग्राह्योगृह्यते । अहरेव रूपेण समर्धयन्ति । अथो अह्न एवैष बलिर्ह्रियते । आग्नेयमालभन्ते प्रतिप्रज्ञात्यै । अजपेत्वान्वा एते पूर्वैर्मासैरवरुन्धते । यदेते गव्याः पशवआलभ्यन्ते । उभयेषां पशूनामवरुध्यै ॥ यदतिरिक्तामेकादशिनीमालभेरन् । अप्रियं भ्रातृव्यमभ्यतिरि-

च्येत। यद्द्वौ द्वौ पशू समस्येयुः। कनीयश्चायुः कुर्वी-
रन्। यदेते ब्राह्मणवन्तः पशवश्चालभ्यन्ते। नाग्नियं
भ्रातृव्यमभ्यतिरिच्यते। न कनीयश्चायुः कुर्वते ॥ ३ ॥

ते एवालभन्ते मैत्रावरुणीमालभन्तेऽवरुध्यै सप्त च ॥
अनु० ५ ॥

षष्ठोऽनुवाकः।

प्रजापतिः प्रजाः सृष्ट्वा वृत्तोऽशयत्। तं देवा भूतानाꣳ
रसं तेजः सम्भृत्य। तेनैनमभिषज्यन्। महानववर्ती-
ति। तन्महाव्रतस्य महाव्रतत्वं। महद्व्रतमिति। तन्म-
हाव्रतस्य महाव्रतत्वं। महतोव्रतमिति। तन्महाव्रतस्य
महाव्रतत्वं। पञ्चविꣳशस्तोमो भवति ॥ १ ॥

चतुर्विꣳशत्यर्धमासः संवत्सरः। यद्वा एतस्मिन्त्संव-
त्सरेऽधिप्राजायत। तदन्नं पञ्चविꣳशमभवत्। मध्यतः
क्रियते। मध्यतो ह्यन्नमशितं धिनोति। अथो मध्यत-
एव प्रजानामूर्ग्धीयते। अथ यद्वाइदमन्ततः क्रियते।
तस्मादुदन्ते प्रजाः समेधन्ते। अन्ततः क्रियते प्रजननना-
यैव। त्रिवृच्छिरो भवति ॥ २ ॥

त्रेधाविहितꣳ हि शिरः। लोमछवीरस्थि। परा
चास्तुवन्ति। तस्मात्तत्सदृगेव। न मेद्यतोऽनुमेद्यति। न

कश्यतोऽनु कश्यति। पञ्चदशोऽन्यः पक्षो भवति। सप्तदशोऽन्यः। तस्माद्वयाꣳस्यन्यतरमर्धमभिपर्यावर्त्तन्ते। अन्यतरतो हि तन्नरीयः क्रियते॥ ३॥

पञ्चविꣳश आत्मा भवति। तस्मान्मध्यतः पशवो वरिष्ठाः। एकविꣳशं पुच्छं। द्विपदासु स्तुवन्ति प्रतिष्ठित्यै। सर्व्वेण सह स्तुवन्ति। सर्व्वेण ह्यात्मनात्मन्वी। सहोत्पतन्ति। एकैकामुच्छिꣳषन्ति। आत्मन् ह्यङ्गानि बद्धानि। न वा एतेन सर्व्वः पुरुषः॥ ४॥

यदितइतो लोमानि दतो नखान्। परिमादः क्रियन्ते। तान्येव ते न प्रत्युप्यन्ते। औदुम्बरस्तल्पो भवति। ऊर्ग्वा अन्नमुदुम्बरः। ऊर्ज एवान्नाद्यस्यावरुध्यै। यस्य तल्पसद्यमनभिजितꣳ स्यात्। स देवानाꣳ साम्यक्षे। तल्पसद्यमभिजयानीति तल्पमारुह्योद्गायेत्। तल्पसद्यमेवाभिजयति॥ ५॥

यस्य तल्पसद्यमभिजितꣳ स्यात्। स देवानाꣳ साम्यक्षे। तल्पसद्यं मा पराजेषीति तल्पमारुह्योद्गायेत्। न तल्पसद्यं पराजयते। प्लेङ्खे शꣳसति। महो वै प्लेङ्खः। महस एवान्नाद्यस्यावरुध्यै। देवासुराः संयत्ता आसन्। तआदित्ये व्यायच्छन्त। तं देवाः समजयन्॥ ६॥

ब्राह्मणश्च शूद्रश्च चर्म्मकर्त्ते व्यायच्छेते। दैव्योवै वर्णो ब्राह्मणः। असुर्य्यः शूद्रः। इमे रात्सुरिमे सुभूतमक्रन्नित्यन्यतरोब्रूयात्। इमउद्वासीकारिणइमे दुर्भूतमक्रन्नित्यन्यतरः। यदेवैषाꣳ सुकृतं या राद्धिः। तदन्यतरोऽभिश्रीणाति। यदेवैषां दुष्कृतं या राद्धिः। तदन्यतरोऽपहन्ति। ब्राह्मणः सञ्जयति॥ अमुमेवादित्यं भ्रातृव्यस्य संविन्दन्ते॥ ७॥

भवति भवति क्रियते पुरुषोजयत्यजयञ्जयत्येकञ्च॥ अनु० ६॥

उद्धन्यमानं नवैतानि सन्ततिरेकविꣳशएषोऽप्रतिष्ठां प्रजापतिर्वृत्तः षट्॥

उद्धन्यमानꣳ शोचिष्केशोऽग्ने सपत्नानतिग्राह्याावैश्वदेवमालभन्ते पञ्चाशत्॥

इति द्वितीयोऽध्यायः॥

हरिः ॐ ।

## प्रथमाष्टके तृतीयाध्याये

### प्रथमोऽनुवाकः ।

देवासुराः संयत्ता आसन् । ते देवा विजयमुपयन्तः । अग्नीषोमयोस्तेजस्विनीस्तनूः सन्न्यदधत । इदमु नो भविष्यति । यदि नो जेष्यन्तीति । तेनाग्नीषोमावप्राक्रामतां । ते देवा विजित्य । अग्नीषोमावन्वैच्छन् । तेऽग्निमन्वविदन्नृतुषूत्सन्नं । तस्य विभक्तीभिस्तेजस्विनीस्तनूरवारुन्धत ॥ १ ॥

ते सोममन्वविन्दन् । तमघ्नन् । तस्य यथाभिज्ञायं तनूर्व्यगृह्णत । ते ग्रहा अभवन् । तद्ग्रहाणां ग्रहत्वं । यस्यैवं विदुषो ग्रहा गृह्यन्ते । तस्य त्वेव गृहीताः । नानाग्नेयं पुनराधेयं कुर्य्यात् । यदनाग्नेयं पुनराधेयं कुर्य्यात् । व्यृद्धमेव तत् ॥ २ ॥

अनाग्नेयं वा एतत्क्रियते । यत्समिधस्तनूनपातमिडो बर्हिर्यजति । उभावाग्नेयावाज्यभागौ स्यातां । अनाज्यभागौ भवत इत्याहुः । यदुभावाग्नेयावन्वञ्चाविति । अग्नये पवमानायोत्तरः स्यात् । यत्पवमानाय ।

तेनाज्यभागः। तेन सौम्यः। वृधन्वत्याग्नेयस्याज्यभागस्य पुरोनुवाक्या भवति ॥ ३ ॥

यथा सुसम्बोधयति। तादृगेव तत्। अग्निर्न्यक्ताः पत्नीसंयाजानामृचः स्युः। तेनाग्नेयꣳ सर्व्वं भवति। एकधा तेजस्विनीं देवतामुपैतीत्याहुः। सैनमीश्वरा प्रदहइति। नेति ब्रूयात्। प्रजननं वाअग्निः। प्रजननमेवोपैतीति। कृतयजुः सम्भृतसम्भार इत्याहुः ॥ ४ ॥

न सम्भृत्याः सम्भाराः। न यजुः कार्य्यमिति। अथो खलु। सम्भृत्याएव सम्भाराः। कार्य्यं यजुः। पुनराधेयस्य समृध्यै। तेनोपाꣳशु प्रचरति। एष्यइव वाएषः। यत्पुनराधेयः। यथोपाꣳशु नष्टमिच्छति ॥ ५ ॥

तादृगेव तत्। उच्चैः स्विष्टकृतमुत्सृजति। यथा नष्टं वित्वा प्राहायमिति। तादृगेव तत्। एकधा तेजस्विनीं देवतामुपैतीत्याहुः। सैनमीश्वरा प्रदहइति। तत्तथा नोपैति। प्रयाजानूयाजेष्वेव विभक्तीः कुर्य्यात्। यथा पूर्व्वमाज्यभागौ स्याताम्। एवं पत्नीसंयाजाः॥ तद्वैश्वानरवत्प्रजननवत्तरमुपैतीति। तदाहुः। व्यृद्धं वाएतत्। अनाग्नेयं वाएतत्क्रियतइति। नेति ब्रूयात्। अग्निं प्रथमं विभक्तीनां यजति। अग्निमुत्तमं पत्नी-

संयाजानां। तेनाग्नेयं। तेन समृद्धं क्रियतइति॥ ६॥

अरुन्धतैव तद्भवति सम्भृतसम्भार इत्याहुरिच्छति पत्नीसंयाजानवं च॥ अनु० १॥

द्वितीयोऽनुवाकः।

देवावै यथादर्शं यज्ञानाहरन्त। योऽग्निष्टोमं। यउक्थ्यं। योऽतिरात्रं। ते सहैव सर्व्वे वाजपेयमपश्यन। ते। अन्योन्यस्मै नातिष्ठन्त। अहमनेन यजाइति। तेऽब्रुवन्। आजिमस्य धावामेति॥ १॥

तस्मिन्नाजिमधावन्। तं बृहस्पतिरुदजयत्। तेनायजत। स स्वाराज्यमगच्छत्। तमिन्द्रोऽब्रवीत्। मामनेन याजयेति। तेनेन्द्रमयाजयत्। सोऽग्रं देवतानां पर्यैत्। अगच्छत्स्वाराज्यं। अतिष्ठन्तास्मै ज्यैष्ठ्याय॥ २॥

यएवं विद्वान् वाजपेयेन यजते। गच्छति स्वाराज्यं। अग्रꣳ समानानां पर्येति। तिष्ठन्तेऽस्मै ज्यैष्ठ्याय। स वाएष ब्राह्मणस्य चैव राजन्यस्य च यज्ञः। तं वा एतं वाजपेयइत्याहुः। वाजाप्योवाएषः। वाजꣳ ह्येतेन देवाऐप्सन्। सोमोवै वाजपेयः। योवै सोमं वाजपेयं वेद॥ ३॥

वाज्येवैनं पीत्वा भवति। आस्य वाजी जायते। अन्नं

व वाजपेयः। य एवं वेद। अत्त्यन्नं। आस्यान्नादो जायते। ब्रह्म वै वाजपेयः। य एवं वेद। अत्ति ब्रह्मणान्नं। आस्य ब्रह्मा जायते ॥ ४ ॥

वाग्वै वाजस्य प्रसवः। य एवं वेद। करोति वाचा वीर्य्यं। ऐनं वाचा गच्छति। अपिवतीं वाचं वदति। प्रजापतिर्देवेभ्यो यज्ञान् व्यादिशत्। स आत्मन् वाजपेयमधत्त। तन्देवा अब्रुवन्। एष वाव यज्ञः। यद्वाजपेयः॥५॥

अप्येव नोऽत्रास्त्विति। तेभ्य एतानुज्जितीः प्रायच्छत्। तावा एता उज्जितयो व्याख्यायन्ते। यज्ञस्य सर्व्वत्वाय। देवतानामनिर्भागाय। देवा वै ब्रह्मणश्चान्नस्य च शमलमपाघ्नन्। यद्ब्रह्मणः शमलमासीत्। सा गाथा नाराशꣳसी भवत्। यदन्नस्य। सा सुरा ॥ ६ ॥

तस्माद्गायतश्च मत्तस्य च न प्रतिगृह्यं। यत्प्रतिगृह्णीयात्। शमलं प्रतिगृह्णीयात्। सर्व्वा वा एतस्य वाचोऽवरुद्धाः। यो वाजपेययाजी। या पृथिव्यां याग्नौ या रथन्तरे। यान्तरिक्षे या वायौ या वामदेव्ये। या दिवि यादित्ये या बृहति। याप्सु यौषधीषु या वनस्पतिषु। तस्माद्वाजपेययाज्यार्त्विजीनः॥ सर्व्वा ह्यस्य वाचोऽवरुद्धाः ॥ ७ ॥

धावामेति ज्यैष्ठ्याय वेदं ब्रह्मा जायते वाजपेयः सुरात्विजीनएकंच ॥ अनु० २ ॥

तृतियोऽनुवाकः ।

देवावै यदन्यैर्ग्रहैर्यज्ञस्य नावारुन्धत । तदतिग्राह्यै-रतिगृह्यावारुन्धत । तदतिग्राह्याणामतिग्राह्यत्वं । यदतिग्राह्यागृह्यन्ते । यदेवान्यैर्ग्रहैर्यज्ञस्य नावरुन्धे । तदेव तैरतिगृह्यावरुन्धे । पञ्च गृह्यन्ते । पांक्तो यज्ञः । यावानेव यज्ञः । तमाप्त्वावरुन्धे ॥ १ ॥

सर्व्वऐन्द्राभवन्ति । एकधैव यजमानइन्द्रियं दधाति । सप्तदश प्राजापत्याग्रहागृह्यन्ते । सप्तदशः प्रजापतिः । प्रजापतेराप्त्यै । एकयर्चा गृह्णाति । एकधैव यजमाने वीर्य्यं दधाति । सोमग्रहांश्च सुराग्रहांश्च गृह्णाति । एतद्वै देवानां परममन्नं । यत्सोमः ॥ २ ॥

एतन्मनुष्याणां । यत्सुरा । परमेणैवास्माअन्नाद्ये-नावरमन्नाद्यमवरुन्धे । सोमग्रहान् गृह्णाति । ब्रह्मणो वाएतत्तेजः । यत्सोमः । ब्रह्मणएव तेजसा तेजोयजमाने दधाति । सुराग्रहान् गृह्णाति । अन्नस्य वाएतच्छमलं । यत्सुरा ॥ ३ ॥

अन्नस्यैव शमलेन शमलं यजमानादपहन्ति । सो-

मग्रहांश्च सुराग्रहांश्च गृह्णाति। पुमान् वै सोमः। स्त्री सुरा। तन्मिथुनं। मिथुनमेवास्य तद्यज्ञे करोति प्रजननाय। आत्मानमेव सोमग्रहैः स्पृणोति। जायां सुराग्रहैः। तस्माद्वाजपेययाज्यमुष्मिँल्लोके स्त्रियं संभवति। वाजपेयाभिजितं ह्यस्य ॥ ४ ॥

पूर्व्वे सोमग्रहा गृह्यन्ते। अपरे सुराग्रहाः। पुरोक्षं सोमग्रहान्त्सादयति। पश्चादक्षं सुराग्रहान्। पापवस्य सस्यविधृत्यै। एष वै यजमानः। यत्सोमः। अन्नं सुरा। सोमग्रहांश्च सुराग्रहांश्च व्यतिषजति। अन्नाद्येनैवैनं व्यतिषजति ॥ ५ ॥

सम्पृचस्थ सम्मा भद्रेण पृङ्क्तेत्याह। अन्नं वै भद्रं। अन्नाद्येनैवैनं संसृजति। अन्नस्य वा एतच्छमलं। यत्सुरा। पाप्मेव खलु वै शमलं। पाप्मना वा एनमेतच्छमलेन व्यतिषजति। यत्सोमग्रहांश्च सुराग्रहांश्च व्यतिषजति। विपृचस्थ विमा पाप्मनापृङ्क्तेत्याह पाप्मनैवैनं शमलेन व्यावर्त्तयति ॥ ६ ॥

तस्माद्वाजपेययाजी पूतो मेध्यो दक्षिण्यः। प्राङ्द्रवति सोमग्रहैः। अमुमेव तैर्लोकमभिजयति। प्रत्यङ् सुराग्रहैः। इममेव तैर्लोकमभिजयति। प्रतिष्ठन्ति सोम-

गृह्वैः। यावदेव सत्यं। तेन सूयते। वाजस्रञ्जाः। सुरा-गृह्वान् हरन्ति। अनृतेनैव विशꣳसꣳसृजति॥ हिर-ण्यपात्रं मधोः पूर्णं ददाति। मधव्योसानीति। एकधा ब्रह्मणउपहरति। एकधैव यजमानआयुस्तेजोदधाति ॥ ७ ॥

आम्नावरुन्धे सोमः शमलं यत्सुराह्यस्यैनं व्यतिष-जति व्यावर्त्तयति सृजति चत्वारि च ॥ अनु० ३ ॥

चतुर्थोऽनुवाकः।

ब्रह्मवादिनोवदन्ति। नाग्निष्टोमोनोक्थ्यः। न षो-डशी नातिरात्रः। अथ कस्माद्वाजपेये सर्व्वे यज्ञक्रतवो-ऽवरुध्यन्त इति। पशुभिरिति ब्रूयात्। आग्नेयं पशुमा-लभते। अग्निष्टोममेव तेनावरुन्धे। ऐन्द्राग्नेनोक्थ्यं। ऐन्द्रेण षोडशिनंस्तोत्रं। सारस्वत्यातिरात्रं॥ १॥

मारुत्या बृहतस्तोत्रं। एतावन्तोवै यज्ञक्रतवः। तान् पशुभिरेवावरुन्धे। आत्मानमेव स्पृणोत्यग्निष्टोमेन। प्राणापानावुक्थ्येन। वीर्य्यꣳषोडशिनंस्तोत्रेण। वाचं-मतिरात्रेण। प्रजां बृहतस्तोत्रेण। इममेव लोकमभि-जयत्यग्निष्टोमेन। अन्तरिक्षमुक्थ्येन॥ २॥

सुवर्गं लोकꣳषोडशिनंस्तोत्रेण। देवयानानेव पथ

आरोहत्यतिरात्रेण । नाकꣳ रोहति बृहतस्तोत्रेण । तेज एवात्मन्धत्त आग्नेयेन पशुना । ओजो बलमैन्द्राग्नेन । इन्द्रियमैन्द्रेण । वाचꣳ सारस्वत्या । उभावेव देवलोकञ्च मनुष्यलोकञ्चाभिजयति मारुत्या वशया । सप्तदश प्राजापत्यान् पशूनालभते । सप्तदशः प्रजापतिः ॥ ३ ॥

प्रजापतेराप्त्यै । श्यामा एकरूपा भवन्ति । एवमिव हि प्रजापतिः समृद्ध्यै । तान्पर्यग्निकृतानुत्सृजति । मरुतो यज्ञमजिघाꣳसन् प्रजापतेः । तेभ्य एतां मारुतीं वशामालभत । तयैवैनानशमयत् । मारुत्या प्रचर्य । एतान् सञ्ज्ञपयेत् । मरुत एव शमयित्वा ॥ ४ ॥

एतैः प्रचरति । यज्ञस्याघाताय । एकधा वपा जुहोति । एकदेवत्या हि । एते । अथो एकधैव यजमाने वायं दधाति । नैवारेण सप्तदशशरावेणैतर्हि प्रचरति । एतत्पुरोडाशा ह्येते । अथो पशूनामेव छिद्रमपि दधाति । सारस्वत्योत्तमया प्रचरति ॥ वाग्वै सरस्वती । तस्मात्प्राणानां वागुत्तमा । अथो प्रजापतावेव यज्ञं प्रतिष्ठापयति । प्रजापतिर्हि वाक् । अपन्नदती भवति । तस्मान्मनुष्याः सर्वां वाचं वदन्ति ॥ ५ ॥

अतिरात्रमन्तरिक्षमुक्थ्येन प्रजापतिः श्रमयित्वो-त्तमया प्रचरति षट्च ॥ अनु॰ ४ ॥

पञ्चमोऽनुवाकः।

सावित्रं जुहोति कर्म्मणः कर्म्मणः पुरस्तात्। कस्त-द्वेदेत्याहुः। यद्वाजपेयस्य पूर्व्वं यदपरमिति। सवितृ-प्रसूतएव यथा पूर्व्वं कर्म्माणि करोति। सवने सवने जुहोति। आक्रमणमेव तत्सेतुं यजमानः कुरुते। सुव-र्गस्य लोकस्य समष्ट्यै। वाचस्पतिर्वाचमद्य स्वदाति न इत्याह। वाग्वै देवानां पुरान्नमासीत्। वाचमेवास्मा अन्नꣳ स्वदयति ॥ १ ॥

इन्द्रस्य वज्रोऽसि वार्त्तघ्नइति रथमुपावहरति वि-जित्यै। वाजस्यनुप्रसवे मातरं महीमित्याह। यच्चैवेयं। यच्चास्यामधि। तदेवावरुन्धे। अथो तस्मिन्नेवोभयेऽभि-षिच्यते। अप्स्वन्तरमृतमप्सु भेषजमित्यश्वान्पल्पूलय-ति। अप्सु वा अश्वस्य तृतीयं प्रविष्टं। तदनुवे नन्ववस्र-वते। यदप्सु पल्पूलयति ॥ २ ॥

यदेवास्याप्सु प्रविष्टं। तदेवावरुन्धे। बहु वा अश्वो-मेध्यमुपगच्छति। यदप्सु पल्पूलयति। मेध्यानेवैनान करोति। वायुर्वा त्वामनुर्वात्वेत्याह। एतावाएतं देवता

अग्ने अश्वमयुञ्जन् । ताभिरेवैनान् युनक्ति । सवस्यो-ज्जित्यै । यजुषा युनक्ति व्यावृत्त्यै ॥ ३ ॥

अपांनपादाशु हेमन्निति सम्मार्ष्टि । मेध्यानेवनान् करोति । अथोस्तौत्येवैनानाजिꣳसरिष्यतः । विष्णुक्र-मान् क्रमते । विष्णुरेव भूत्वेमाँल्लोकानभिजयति । वैश्वदेवोवै रथः । अकौ न्यङ्कावभितो रथं यावित्याह । याएव देवतारथे प्रविष्टाः । ताभ्य एव नमस्करोति । आत्मनोनार्त्यै ॥ अर्शमरथं भावुकोऽस्य रथोभवति । यएवं वेद ॥ ४ ॥

स्वदयति पल्पूलयति व्यावृत्त्याअनार्त्यै द्वे च ॥ अनु० ५ ॥

षष्ठोऽनुवाकः ।

देवस्याहꣳसवितुः प्रसवे बृहस्पतिना वाजजिता वाजं जेषमित्याह । सवितृप्रसूतएव ब्रह्मणा वाजमु-ज्जयति । देवस्याहꣳसवितुः प्रसवे बृहस्पतिना वाजं जितावर्षिष्ठं नाकꣳ रुहेयमित्याह । सवितृप्रसूतएव ब्रह्मणा वर्षिष्ठं नाकꣳ रोहति । चात्वाले रथचक्र-न्निमित्तꣳ रोहति । अतोवाअङ्गिरसउत्तमाः सुवर्गं लोकमायन् । साक्षादेव यजमानः सुवर्गं लोकमे-

ति। आवेष्टयति। वज्रोवै रथः। वज्रेणैव दिशाऽभिजयति॥ १॥

वाजिनाᳪं साम गायते। अन्नं वै वाजः। अन्नमेवावरुन्धे। वाचोवर्ष्मं देवेभ्योऽपाक्रामत्। तद्वनस्पतीन् प्राविशत्। सैषा वाग्वनस्पतिषु वदति। या दुन्दुभौ। तस्माद्दुन्दुभिः सर्व्वावाचोऽतिवदति। दुन्दुभीन्त्समाघ्नन्ति। परमा वाएषा वाक्॥ २॥

या दुन्दुभौ। परमयैव वाचावरां वाचमवरुन्धे। अथौ वाचएव वर्ष्म यजमानोऽवरुन्धे। इन्द्राय वाचं वदतेन्द्रं वाजं जापयतेन्द्रोवाजमजयिदित्याह। एष वाएतर्हीन्द्रः। योयजते। यजमानएव वाजमुज्जयति। सप्तदशप्रव्याधानाजिं धावन्ति। सप्तदशᳪं स्तोत्रं भवति। सप्तदश सप्तदश दीयन्ते॥ ३॥

सप्तदशः प्रजापतिः। प्रजापतेराप्त्यै। अश्वोसि सप्तिरसि वाज्यसीत्याह। अग्निर्वा अश्वः। वायुः सप्तिः। आदित्यो वाजी। एताभिरेवास्मै देवताभिर्देवरथं युनक्ति। पृष्टिवाहिनं युनक्ति। पृष्टिवाही वै देवरथः। देवरथमेवास्मै युनक्ति॥ ४॥

वाजिनोवाजं धावत काष्ठां गच्छतेत्याह। सुवर्गोवै

लोकः काष्ठा । सुवर्गमेव लोकं यन्ति । सुवर्गं वा एत लोकं यन्ति । यआजिं धावन्ति । प्राञ्चोधावन्ति । प्राङिव हि सुवर्गोलोकः । चतसृभिरनुमन्त्रयते । चत्वारि छन्दांसि । छन्दोभिरेवैनां सुवर्गं लोकं गमयति ॥ ५ ॥

प्रवा एतेऽस्माल्लोकाच्च्यवते । यआजिं धावन्ति । उदञ्च आवर्त्तन्ते । अस्मादेव तेन लोकन्नयन्ति । रथविमाचनीयं जुहोमि प्रतिष्ठित्यैवं । आमावाजस्य प्रसवोजगम्यादित्याह । अन्नं वै वाजः । अन्नमेवारुन्धे । यथा लोकं वा एतउज्जयन्ति । यआजिं धावन्ति ॥ ६ ॥

कृष्णलं कृष्णलं वाजसृद्भ्यः प्रयच्छति । यमेव ते वाजं लोकमुज्जयन्ति । तं परिक्रीय्यावरुन्धे । एकधा ब्रह्मण उपहरति । एकधैव यजमाने वीर्य्यं दधाति । देवावा ओषधीष्वाजिमयुः । तान्बृहस्पतिरुदजयत् । स नीवारान्निरवृणीत । तन्नीवाराणां नीवारत्वं । नैवारश्चरुर्भवति ॥ ७ ॥

एतद्वै देवानां परममन्नं । यन्नीवाराः । परमेणैवास्मा अन्नाद्येनावरमन्नाद्यवरुन्धे । सप्तदशशरावो भवति । सप्तदशः प्रजापतिः । प्रजापतेराप्त्यै । क्षीरे

भवति। रुचमेवास्मिन्दधाति। सर्पिष्वान् भवति मेध्य-त्वाय। बार्हस्पत्योवाएष देवतया ॥ ८ ॥

योवाजपेयेन यजते। बार्हस्पत्यएष चरुः। अश्वान् सरिष्यतः रससुषश्चावधापयति। यमेव ते वाजं लो-कमुज्जयन्ति। तमेवावरुन्धे। अजीजियतवनस्पतय-इन्द्रं वाजं विमुच्यध्वमिति दुन्दुभीन् विमुञ्चति। यमेव ते वाजं लोकमिन्द्रियं दुन्दुभयउज्जयन्ति। तमेवा-वरुन्धे ॥ ९ ॥

अभिजयति वाएषा वाग्दीयन्तेऽस्मै युनक्ति गमयति यश्चाजिन्धावन्ति भवति देवतयाष्टौ च ॥ अनु० ६ ॥

सप्तमोऽनुवाकः ।

तार्प्यं यजमानं परिधापयति। यज्ञोवै तार्प्यं। यज्ञे-नैवैनꣳ समर्धयति। दर्भमयं परिधापयति। पवित्रं वै दर्भाः। पुनात्येवैनं। वाजं वाएषोऽवरुरुत्सते। योवा-जपेयेन यजते। ओषधयः खलु वै वाजः। यद्दर्भमयं परिधापयति ॥ १ ॥

वाजस्यावरुध्यै। जायएहि सुवोरोहावेत्याह। पत्निया एवैष यज्ञस्यान्वारम्भो नवच्छित्यै। सप्तदशार-

त्रियूपो भवति। सप्तदशः प्रजापतिः। प्रजापतेराप्त्यै। तूपरश्चतुरश्रिर्भवति। गौधूमञ्च पालं। न वाएते व्रीहयेन यवाः। यद्गोधूमाः ॥ २ ॥

एवमिव हि प्रजापतिः समृद्ध्यै। अथो अमुमेवास्मै लोकमन्नवन्तं करोति। वासोभिर्वेष्टयति। एष वै यजमानः। यद्यूपः। सर्व्वदेवत्यं वासः। सर्व्वाभिरेवैनं देवताभिस्समर्धयति। अथो आक्रमणमेव तत्सेतुं यजमानः कुरुते। सुवर्गस्य लोकस्य समष्ट्यै। द्वादशवाजप्रसवीयानि जुहोति ॥ ३ ॥

द्वादशमासाः संवत्सरः। संवत्सरमेव प्रीणाति। अथो संवत्सरमेवास्माउपदधाति। सुवर्गस्य लोकस्य समष्ट्यै। दशभिः कल्पैरोहति। नव वै पुरुषे प्राणाः। नाभिर्दशमी। प्राणानेव यथा स्थानं कल्पयित्वा। सुवर्गं लोकमेति। एतावद्वै पुरुषस्य स्वं ॥ ४ ॥

यावत्प्राणाः। यावदेवास्यास्ति। तेन सह सुवर्गं लोकमेति। सुवर्देवाꣳ अगन्मेत्याह। सुवर्गमेव लोकमेति। अमृताअभूमेत्याह। अमृतमिव हि सुवर्गो लोकः। प्रजापतेः प्रजाअभूमेत्याह। प्राजापत्योवा अयं लोकः। अस्मादेव तेन लोकान्नैति ॥ ५ ॥

समहं प्रजया सं मया प्रजेत्याह । आशिषमेवैतामाशास्ते । आसपुटैर्घ्नन्ति । अन्नं वाङ्गयं । अन्नाद्येनैवैनꣳ समर्धयन्ति । ऊषैर्घ्नन्ति । एते हि साक्षादन्नं । यदूषाः । साक्षादेवैनमन्नाद्येन समर्धयन्ति । परस्तात्प्रत्यञ्चं घ्नन्ति ॥ ६ ॥

पुरस्ताद्धि प्रतीचीनमन्नमद्यते । शीर्षतोघ्नन्ति । शीर्षतोह्यन्नमद्यते । दिग्भ्योघ्नन्ति । दिग्भ्यएवास्मा अन्नाद्यमवरुन्धते । ईश्वरोवाएष पराङ्प्रदघः । योयूपꣳ रोहति । हिरण्यमध्यवरोहति । अमृतं वै हिरण्यं । अमृतꣳ सुवर्गोलोकः ॥ अमृतएव सुवर्गे लोके प्रतितिष्ठति । शतमानं भवति । शतायुः पुरुषः शतेन्द्रियः । आयुष्येवेन्द्रिये प्रतितिष्ठति । पुष्ट्यै वाएतद्रूपं । यदजा । त्रिःसंवत्सरस्यान्यान् पशून् परिप्रजायते । बस्ताजिनमध्यवरोहति । पुष्ट्यामेव प्रजनने प्रतितिष्ठति ॥ ७ ॥

परिधापयति गोधूमा जुहोति स्वन्नैति प्रत्यञ्चं घ्नन्ति लोकोनव च ॥ अनु० ७ ॥

अष्टमोऽनुवाकः ।

सप्तान्नहोमाञ्जुहोति । सप्त वा अन्नानि । यावन्त्ये-वान्नानि । तान्येवावरुन्धे । सप्त ग्राम्या ओषधयः । सप्तारण्याः । उभयीषामवरुध्यै । अन्नस्यान्नस्य जुहोति । अन्नस्यान्नस्यावरुध्यै । यद्वाजपेययाज्यनवरुद्धस्याश्नीयात् ॥ १ ॥

अवरुद्धेन व्यृध्येत । सर्व्वस्य समवदाय जुहोति । अनवरुद्धस्यावरुध्यै । औदुम्बरेण स्रुवेण जुहोति । ऊर्ग्वा अन्नमुदुम्बरः । ऊर्जएवान्नाद्यस्यावरुध्यै । देवस्य त्वा-सवितुः प्रसवइत्याह । सवितृप्रसवएवैनं ब्रह्मणा देवताभिरभिषिञ्चति । अन्नस्यान्नस्याभिषिञ्चति । अन्नस्यान्नस्यावरुध्यै ॥ २ ॥

पुरस्तात्प्रत्यञ्चमभिषिञ्चति । पुरस्ताद्धि प्रतीचीन-मन्नमद्यते । शीर्षतोऽभिषिञ्चति । शीर्षतो ह्यन्नमद्यते । आमुखादन्ववस्रावयति । मुखतएवास्मा अन्नाद्यं दधाति । अग्नेस्त्वा साम्राज्येनाभिषिञ्चामीत्याह । एष वा अग्नेः सवः । तेनैवैनमभिषिञ्चति । इन्द्रस्य त्वा साम्राज्येनाभिषिञ्चामीत्याह ॥ ३ ॥

इन्द्रियमेवास्मिन्नेतेन दधाति । बृहस्पतेस्त्वा साम्रा-

ज्येनाभिषिञ्चामीत्याह। ब्रह्म वै देवानां बृहस्पतिः। ब्रह्मणैवैनमभिषिञ्चति। सोमगृहाꣳश्चावदानीयानि चर्त्विग्भ्यउपहरन्ति। अमुमेव तैर्लोकमन्नवन्तं करोति। सुरागृहाꣳश्चानवदानीयानि च वाजसृद्भ्यः। इममेव तैर्लोकमन्नवन्तं करोति। अथो उभयोष्वेवाभिषिच्यते। विमाथं कुर्व्वते वाजसृतः ॥ ४ ॥

इन्द्रियस्यावरुध्यै। अनिरुक्ताभिः प्रातः सवने स्तुवते। अनिरुक्तः प्रजापतिः। प्रजापतेराप्त्यै। वाजवतीभिर्माध्यंन्दिने। अन्नं वै वाजः। अन्नमेवावरुन्धे। शिपिविष्टवतीभिस्तृतीयसवने। यज्ञोवै विष्णुः। पशवः शिपिः॥ यज्ञएव पशुषु प्रतितिष्ठति। बृहदन्त्यं भवति। अन्तमेवैनꣳ श्रियै गमयति ॥ ५ ॥

अश्नीयादन्नस्यान्नस्यावरुध्याइन्द्रस्य त्वा साम्राज्येनाभिषिञ्चामीत्याह वाजसृतः शिपिस्त्रीणि च॥ अनु० ८ ॥

नवमोऽनुवाकः।

नृषदन्त्वेत्याह। प्रजावै नृन्। प्रजानामेवैतेन सूयते। द्रषदमित्याह। वनस्पतयोवै द्रु। वनस्पतीनामेवैतेन सयते। भवनसदमित्याह। यदा वै वसीयान्

भवति। भुवनमगन्निति वै तमाहुः। भुवनमेवैतेन ग-
च्छति ॥ १ ॥

अप्सुपदं त्वा घृतसदमित्याह। अपामेवैतेन घृतस्य
सूयते। व्योमसदमित्याह। यदा वै वसीयान् भवति।
व्योमागन्निति वै तमाहुः। व्योमैवैतेन गच्छति। पृथि-
विपदं त्वान्तरिक्षसदमित्याह। एषामेवैतेन लोका-
नाꣳ सूयते। तस्माद्वाजपेययाजी न कञ्चन प्रत्यव-
रोहति। अपीव हि देवतानाꣳ सूयते॥ नाकसद-
मित्याह। यदा वै वसीयान् भवति। नाकमगन्निति
वै तमाहुः। नाकमेवैतेन गच्छति। ये ग्रहाः पञ्चज-
नीना इत्याह। पञ्चजनानामेवैतेन सूयते। अपाꣳ
रसमुद्वयसमित्याह। अपामेवैतेन रसस्य सूयते।
सूर्यरश्मिꣳ समाभृतमित्याह सशुक्रत्वाय ॥ २ ॥

गच्छति सूयते नव च ॥ अनु० ९ ॥

दशमोऽनुवाकः।

इन्द्रो वृत्रꣳ हत्वा। असुरान् पराभाव्य। सोऽमा-
वास्यां प्रत्यागच्छत्। ते पितरः पूर्वेद्युरागच्छन्। पि-
तॄन् यज्ञोऽगच्छत्। तं देवाः पुनरयाचन्त। तमेभ्यो न

पुनरददुः। तेऽब्रुवन् वरं वृणामहै। अथ वः पुनर्दास्यामः। अस्मभ्यमेव पूर्व्वेद्युः क्रियतइति ॥ १ ॥

तमेभ्यः पुनरददुः। तस्मात्पितृभ्यः पूर्व्वेद्युः क्रियते। यत्पितृभ्यः पूर्व्वेद्युः करोति। पितृभ्यएव तद्यज्ञं निष्क्रीय यजमानः प्रतनुते। सोमाय पितृपीताय स्वधा नमइत्याह। पितुरेवाधि सोमपीथमवरुन्धे। नहि पिता प्रमीयमाणआहैष सोमपीथइति। इन्द्रियं वै सोमपीथः। इन्द्रियमेव सोमपीथमवरुन्धे। तेनेन्द्रियेण द्वितीयां जायामभ्यश्नुते ॥ २ ॥

एतद्वै ब्राह्मणं पुरा वाजश्रवसाविदामक्रन्। तस्मात्ते द्वे द्वे जाये अभ्याक्षत। यएवं वेद। अभि द्वितीयां जायामश्नुते। अग्नये कव्यवाहनाय स्वधा नमइत्याह। यएव पितृणामग्निः। तं प्रीणाति। तिस्रआहुतीर्जुहोति। त्रिर्निदधाति। षट् सम्पद्यन्ते ॥ ३ ॥

षड्वाऋतवः। ऋतूनेव प्रीणाति। तूष्णीं मेक्षणमादधाति। अस्ति वाहि षष्ठऋतुर्नवा। देवान् वै पितृन्प्रीतान्। मनुष्याः पितरोनुप्रपिपते। तिस्रआहुतीर्जुहोति। त्रिर्निदधाति। षट् सम्पद्यन्ते। षड्वा ऋतवः ॥ ४ ॥

ऋतवः खलु वै देवाः पितरः। ऋतूनेव देवान् पितॄन्प्रीणाति। तान् प्रीतान्। मनुष्याः पितरोनुप्रपियते। सकृदाच्छिन्नं बर्हिर्भवति। सकृदिव हि पितरः। त्रिर्निदधाति। तृतीये वाइतोलोके पितरः। तानेव प्रीणाति। पराङावर्त्तते ॥ ५ ॥

ह्लीकाहि पितरः। ओष्मणोव्यावृतउपास्ते। ऊष्मभागाहि पितरः। ब्रह्मवादिनो वदन्ति। प्राश्यां३ न प्राश्या३ मिति। यत्प्राश्नीयात्। जन्यमन्नमद्यात्। प्रमायुकः स्यात्। यन्न प्राश्नीयात्। अहविः स्यात् ॥ ६ ॥

पितृभ्यआवृश्चेत्। अवघ्रेयमेव। तन्नेव प्राशितन्नेवाप्राशितं। वीरं वै वा पितरः प्रयन्तोहरन्ति। वीरं वा ददति। दशाञ्छिनत्ति। हरणभागाहि पितरः। पितॄनेव निरवदयते। उत्तरआयुषि लोम छिन्दीत। पितृणाꣳ ह्येतर्हि नेदीयः ॥ ७ ॥

नमस्करोति। नमस्कारोहि पितृणां। नमोवः पितरोरसाय। नमोवः पितरः शुष्माय। नमोवः पितरो जीवाय। नमोवः पितरः स्वधायै। नमोवः पितरो मन्यवे। नमोवः पितरोघोराय। पितरोनमोवः। यएतस्मिँल्लोके स्थ ॥ ८ ॥

युष्मांस्तेनु। येऽस्मिँल्लोके। मान्तेनु। यएतस्मिँल्लो-
के स्थ। यूयं तेषां वसिष्ठाभूयास्त। येऽस्मिँल्लोके। अहं
तेषां वसिष्ठोभूयासमित्याह। वसिष्ठः समानानां भ-
वति। यएवं विद्वान् पितृभ्यः करोति। एष वै मनुष्याणां
यज्ञः॥ ९॥

देवानां वाइतरे यज्ञाः। तेन वाएतत् पितृलोके
चरति। यत्पितृभ्यः करोति। सईश्वरः प्रमेतोः। प्राजा-
पत्ययर्चा पुनरैति। यज्ञोवै प्रजापतिः। यज्ञेनैव सह
पुनरैति। न प्रमायुकोभवति। पितृलोके वाएतद्य-
जमानश्चरति। यत्पितृभ्यः करोति॥ स ईश्वरआर्त्ति-
मार्त्तोः। प्रजापतिस्त्वावैनन्ततउन्नेतुमर्हतीत्याहुः।
यत्प्राजापत्ययर्चा पुनरैति। प्रजापतिरेवैनन्ततउन्न-
यति। नार्त्तिमार्छति यजमानः॥ १०॥

इत्यश्नुते पद्यन्ते पद्यन्ते षड्वा ऋतवोवर्त्ततेऽहविःस्या-
न्नेदीयःस्थ यज्ञोयजमानश्चरति यत्पितृभ्यः करोति
पञ्च च॥

देवासुराअग्नीषोमयोर्देवावै यथादर्शौ देवावै यद-
न्यैर्ग्रहैर्ब्रह्मवादिनोनाग्निष्टोमोन सावित्रं देवस्याहं
ताण्यंसत्तान्नहोमान्त्सदन्त्वेन्द्रो वृचं हत्वा दर्श॥

देवासुरावाज्यैवैनं तस्माद्वाजपेययाजी देवस्याहं वा-
जस्यावरुध्याइन्द्रियमेवास्मिन् ह्लोकाद्धि पितरः पञ्च-
षष्टिः ॥ ६५ ॥ हरिः ॐ ॥ इति तृतीयाध्यायः ॥

## चतुर्थाध्यायः ।

### प्रथमानुवाकः ।

उभये वाएते प्रजापतेरध्यसृज्यन्त । देवाश्चासुरा-
श्च । तान्न व्यजानात् । इमेन्यइमेन्यइति । स देवानꣳ
शूनंकरोत् । तानभ्यषुणोत् । तान् पवित्रेणापुनात् ।
तान् पुरस्तात् पवित्रस्य व्यगृह्णात् । ते ग्रहाअभवन् ।
तद्ग्रहाणां ग्रहत्वं ॥ १ ॥

देवतावाएतायजमानस्य गृहे गृह्यन्ते । यद्ग्रहाः ।
विदुरेनं देवाः । यस्यैवं विदुषएते ग्रहागृह्यन्ते । एषा वै
सोमस्याहुतिः । यदुपाꣳशुः । सोमेन देवाꣳस्तर्पया-
णीति खलु वै सोमेन यजते । यदुपाꣳशुं जुहोति । सोमे
नैव तद्देवाꣳस्तर्पयति । यद्ग्रहाञ्जुहोति ॥ २ ॥

देवाएव तद्देवान् गच्छन्ति । यच्चमसञ्जुहोति । ते-
नैवानुरूपेण यजमानः सुवर्गं लोकमेति । किन्त्वेत-
दग्रआसीदित्याहुः । यत्पात्राणीति । इयं वाएतदग्र
आसीत् । मृण्मयानि वाएतान्यासन् । तैर्देवान-

व्यावृत्तमगच्छन् । तएतानि दारुमयाणि पात्राण्यपश्यन् । तान्यकुर्व्वत ॥ ३ ॥

तैर्वै ते व्यावृत्तमगच्छन् । यद्दारुमयाणि पात्राणि भवन्ति । व्यावृत्तमेव तैर्यजमानोगच्छति । यानि दारुमयाणि पात्राणि भवन्ति । अमुमेव तैर्लोकमभिजयति । यानि मृन्मयानि । इममेव तैर्लोकमभिजयति । ब्रह्मवादिनोवदन्ति । कास्मात्सत्यादित्यस्थालीवायव्याः सोमग्रहणीरिति । देवावै पृश्निमदुहन् ॥ ४ ॥

तस्याएते स्तनाआसन् । इयं वै पृश्निः । तामादित्याआदित्यस्थाल्या चतुष्पदः पशूनदुहन् । यदादित्यस्थाली भवति । चतुष्पदएव तया पशून्यजमानइमां दुहे । तामिन्द्रउक्थ्यस्थाल्येन्द्रियमदुहत् । यदुक्थ्यस्थाली भवति । इन्द्रियमेव तया यजमानइमां दुहे । तां विश्वेदेवाआग्रयणस्थाल्योर्जमदुहन् । यदाग्रयणस्थाली भवति ॥ ऊर्जमेव तया यजमानइमां दुहे । तां मनुष्याद्ध्रुवस्थाल्यायुरदुहन् । यद्ध्रुवस्थाली भवति । आयुरेव तया यजमानइमां दुहे । स्थाल्या गृह्णाति । वायव्येन जुहोति । तस्मादन्येन पात्रेण पशून्

दुहन्ति। अन्येन प्रतिगृह्णन्ति। अथो व्यावृत्तमेव तद्यजमानो गच्छति ॥ ५ ॥

गृहत्वं ग्रहाञ्जुहोत्यकुर्व्वतादुहन्नाग्रयणस्थाली भवति नवं च ॥ अनु० १ ॥

द्वितीयोऽनुवाकः।

यवꣳ सुराममश्विना। नमुचा वासुरे सचा। विपिपाना शुभस्पती। इन्द्रं कर्म्मस्वावतं। पुत्रमिव पितरावश्विनोभा। इन्द्रावतं कर्म्मणा दꣳसनाभिः। यत्सुरामं व्यपिबः शचीभिः। सरस्वती त्वा मघवन्नभीष्णात्। अहाव्यग्ने हविरास्येते। स्रुचीव घृतञ्चमूइव सोमः ॥ १ ॥

वाजसनिꣳ रयिमस्मेसु वीरं। प्रशस्तं धेहि यशसं बृहन्तं। यस्मिन्नश्वासऋषभासउक्षणः। वशामेषा अवसृष्टासआहुताः। कीलालपे सोमपृष्ठाय वेधसे। हृदा मतिं जनय चारुमग्नये। नानाहि वां देवहितꣳ सदोमितं। मासꣳसृक्षाथां परमे व्योमन्। सुरा त्वमसि शुष्मिणी सोम एषः। मा माहिꣳसीस्वां योनिमाविशन् ॥ २ ॥

यदत्र शिष्टꣳ रसिनः सुतस्य। यदिन्द्रो अपिबच्छचीभिः। अहं तदस्य मनसा शिवेन। सोमꣳ राजा-

नमिह भक्षयामि। द्वे स्रुती अशृणवं पितृणां। अहं देवानामुत मर्त्यानां। ताभ्यामिदं विश्वं भुवनꣳ समेति। अन्तरा पूर्व्वमपरं च केतुं। यस्ते देव वरुण गायत्रच्छन्दाः पाशः। तन्त एतेनावयजे ॥ ३ ॥

यस्ते देव वरुण त्रिष्टुप्छन्दाः पाशः। तन्त एतेनावयजे। यस्ते देव वरुण जगतीछन्दाः पाशः। तन्त एतेनावयजे। सोमोवा एतस्य राज्यमादत्ते। योराजा सन्राज्योवा सोमेन यजते। देवसुवामेतानि हवीꣳषि भवन्ति। एतावन्तोवै देवानाꣳ सवाः। त एवास्मै सवान्प्रयच्छन्ति। त एनं पुनस्सुवन्ते राज्याय॥ देवसूराजा भवति ॥ ४ ॥

सोमश्चाविशन् यजे राज्यायैकञ्च॥ अनु० २ ॥

तृतीयोऽनुवाकः।

उदस्थाद्देव्यदितिर्विश्वरूपी। आयुर्यज्ञपतावधात्। इन्द्राय कृण्वती भागं। मित्राय वरुणाय च। इयं वा अग्निहोत्री। इयं वा एतस्य निषीदति। यस्याग्निहोत्री निषीदति। तामुत्थापयेत्। उदस्थाद्देव्यदितिरिति। इयं वै देव्यदितिः॥ १ ॥

इयमेवास्मानुत्थापयति। आयुर्यज्ञपतावधादि-

त्याह । आयुरेवास्मिन्दधाति । इन्द्राय त्वष्ट्वती भागं मित्राय वरुणाय चेत्याह । यथा यजुरेवैतत् । अवर्त्तिं वा एषैतस्य पाप्मानं प्रतिख्याय निषीदति । यस्याग्निहोत्र्युपसृष्टा निषीदति । तां दुग्ध्वा ब्राह्मणाय दद्यात् । यस्यान्नं नाद्यात् । अवर्त्तिमेवास्मिन् पाप्मानं प्रतिमुञ्चति ॥ २ ॥

दुग्ध्वा ददाति । नह्यदृष्टा दक्षिणा दीयते । पृथिवीं वा एतस्य पयः प्रविशति । यस्याग्निहोत्रं दुह्यमानꣳ स्कन्दयति । यदद्य दुग्धं पृथिवीमसक्त । यदोषधीरप्यसरद्यदापः । पयो गृहेषु पयो अघ्नियासु । पयो वत्सेषु पयो अस्तु तन्मयीत्याह । पय एवात्मन् गृहेषु पशुषु धत्ते । अप उपसृजति ॥ ३ ॥

अद्भिरेवैनदाप्नोति । यो वै यज्ञस्यार्त्तेनानार्त्तꣳ सꣳसृजति । उभे वै ते तर्ह्यार्च्छतः । अर्च्छति खलु वा एतदग्निहोत्रं । यद्दुह्यमानꣳ स्कन्दति । यदभिदुह्यात् । आर्त्तेनानार्त्तं यज्ञस्य सꣳसृजेत् । तदेव यादृक्कीदृक् च होतव्यं । अथान्यां दुग्ध्वा पुनर्होतव्यं । अनार्त्तेनैवार्त्तं यज्ञस्य निष्करोति ॥ ४ ॥

यद्युद्रुतस्य स्कन्देत् । यत्ततो हुत्वा पुनरेयात् । यज्ञं

विच्छिन्द्यात्। यत्र स्कन्देत्। तन्निपद्य पुनर्गृह्णीयात्। यत्रैव स्कन्दति। ततएवैनत्पुनर्गृह्णाति। तदेव यादृक् कीदृक् च होतव्यं। अथान्यां दुग्ध्वा पुनर्होतव्यं। अनार्त्तेनैवार्त्तिं यज्ञस्य निष्करोति ॥ ५ ॥

वि वाएतस्य यज्ञश्छिद्यते। यस्याग्निहोत्रेऽधिश्रिते श्वान्तरा धावति। रुद्रः खलु वाएषः। यदग्निः। यज्ञामन्वत्यावर्त्तयेत्। रुद्राय पशूनपि दध्यात्। अपशुर्यजमानःस्यात्। यदपोऽन्वतिषिञ्चेत्। अनाद्यमग्नेरापः। अनाद्यमाभ्यामपि दध्यात्॥ गार्हपत्याद्भस्मादाय। इदं विष्णुर्विचक्रमइति वैष्णव्यर्चाहवनीयाध्वंसयनुद्रवेत्। यज्ञोवै विष्णुः। यज्ञेनैव यज्ञꣳ सन्तनोति। भस्मना पदमपि वपति शान्त्यै ॥ ६ ॥

वै देव्यदितिर्मुञ्चति सृजति करोति करोत्याभ्यामपि दध्यात्पञ्च च ॥ अनु० ३ ॥

चतुर्थोऽनुवाकः।

नि वाएतस्याहवनियो गार्हपत्यं कामयते। नि गार्हपत्यआहवनीयं। यस्याग्निमनुद्धृतꣳ सूर्य्योऽभिनिम्रोचति। दर्भेण हिरण्यं प्रबध्य पुरस्ताद्धरेत्। अथाग्निं। अथाग्निहोत्रं। यद्धिरण्यं पुरस्ताद्धरति। ज्योतिर्वै

हिरण्यं। ज्योतिरेवैनं पश्यन्नुद्धरति। यदग्निं पूर्वꣳ हरत्यथाग्निहोत्रं ॥ १ ॥

भागधेयेनैवैनं प्रणयति। ब्राह्मणआर्षेयउद्धरेत्। ब्राह्मणोवै सर्व्वादेवताः। सर्व्वाभिरेवैनं देवताभिरुद्धरति। अग्निहोत्रमुपसाद्यातमितोरासीत्। व्रतमेव हृतमनुम्रियते। आर्त्तिं वाएपश्चात्मनोगच्छति। यस्तास्यति। आर्त्तिमेष यज्ञस्य गच्छति। यस्याग्निमनुद्धृतꣳ सूर्य्योऽभिनिम्रोचति ॥ २ ॥

पुनः समन्य जुहोति। आर्त्तेनैवार्त्तिं यज्ञस्य निष्क्रोति। वरुणो वाएतस्य यज्ञं गृह्णाति। यस्याग्निमनुद्धृतꣳ सूर्य्योऽभिनिम्रोचति। वारुणं चरुं निर्वपेत्। तेनैव यज्ञं निष्क्रीणीते। निवाएतस्याहवनोयो गार्हपत्यं कामयते। निगार्हपत्यआहवनीयं। यस्याग्निमनुद्धृतꣳ सूर्य्योऽभ्युदेति। चतुर्गृहीतमाज्यं पुरस्ताद्धरेत् ॥ ३ ॥

अथाग्निं। अथाग्निहोत्रं। यदाज्यं पुरस्ताद्धरति। एतद्वाअग्नेः प्रियं धाम। यदाज्यं। प्रियेणैवैनं धाम्ना समर्धयति। यदग्निं पूर्व्वꣳ हरत्यथाग्निहोत्रं। भागधेयेनैवैनं प्रणयति। ब्राह्मणआर्षेयउद्धरेत्। ब्राह्मणो वै सर्व्वादेवताः ॥ ४ ॥

सर्व्वाभिरेवैनं देवताभिरुद्धरति। पराची वाएतस्मै व्युच्छन्ती व्युच्छति। यस्याग्निमनुद्धृतꣳ सूर्य्योऽभ्युदेति। उषाः केतुना जुषतां। यज्ञं देवेभिरन्वितं। देवेभ्यो मधुमत्तमꣳस्वाहेति प्रत्यङ्ङिपद्याज्येन जुहुयात्। प्रतीचीमेवास्मै विवासयति। अग्निहोत्रमुपसाद्यातमितोरासीत। व्रतमेव हुतमनुम्रियते। अन्तं वाएषआत्मनोगच्छति ॥ ५ ॥

यस्ताम्यति। अन्तमेष यज्ञस्य गच्छति। यस्याग्निमनुद्धृतꣳ सूर्य्योऽभ्युदेति। पुनः समन्य जुहोति। अन्तेनैवान्तं यज्ञस्य निष्करोति। मित्रोवाएतस्य यज्ञं गृह्णाति। यस्याग्निमनुद्धृतꣳ सूर्य्योऽभ्युदेति। मैत्रं चरुं निर्वपेत्। तेनैव यज्ञं निष्क्रीणीते। यस्याहवनिय्योऽनुद्वाते गार्हपत्यउद्वायेत् ॥ ६ ॥

यदाहवनीयमनुद्वाप्य गार्हपत्यं मन्थेत्। विच्छिन्द्यात्। भ्रातृव्यमस्मै जनयेत्। यद्वै यज्ञस्य वास्तव्यं क्रियते। तदनुरुद्रोऽवचरति। यत्पूर्व्वमन्ववस्येत्। वास्तव्यमग्निमुपासीत। रुद्रोऽस्य पशूघ्नातुकः स्यात्। आहवनीयमुद्वाप्य। गार्हपत्यं मन्थेत् ॥ ७ ॥

इतः प्रथमं जज्ञे अग्निः। स्वाद्योनेरधि जातवेदाः।

स गायत्रिया त्रिष्टुभा जगत्या। देवेभ्यो हव्यं वहतु प्रजानन्निति। छन्दोभिरेवैनꣳ स्वाद्योनेः प्रजनयति। गार्हपत्यं मन्थति। गार्हपत्यं वा अन्वाहिताग्नेः पशव उपतिष्ठन्ते। सयदुद्दायति। तदनुपशवोऽपक्रामन्ति। इषे रय्यै रमस्व ॥ ८ ॥

सहसे द्युम्नाय। ऊर्जे पत्यायेत्याह। पशवोवै रयिः। पशूनेवास्मै रमयति। सारस्वतौ त्वोत्सौ समिन्धातामित्याह। ऋक्सामे वै सारस्वतावुत्सौ। ऋक्सामाभ्यामेवैनꣳ समिन्धे। संम्राडसि विराडसीत्याह। रथन्तरं वै संम्राट्। बृहद्विराट् ॥ ९ ॥

ताभ्यामेवैनꣳ समिन्धे। वज्रोवै चक्रं। वज्रोवा एतस्य यज्ञं विच्छिनत्ति। यस्यानोवा रथोवान्तरामी याति। आहवनीयमुद्दाय्य। गार्हपत्यादुद्धरेत्। यदग्नेः पूर्व्वं प्रभृतं पदꣳहि तत्। सूर्यस्य रश्मीनन्वाततान। तत्र रयिष्ठामनुसम्भरैतं। सन्नः सृज सुमत्या वाजवत्येति॥ पूर्व्वेणैवास्य यज्ञेन यज्ञमनुसन्तनोति। त्वमग्ने स प्रथा असीत्याह। अग्निः सर्व्वा देवताः। देवताभिरेव यज्ञꣳ सन्तनोति। अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत्। अग्निमेव पथिकृतꣳ स्वेन भागधेयेनो-

पधावति। स एवैनं यज्ञियं पन्थानमपि नयति। अनड्वान् दक्षिणा। वह्नी ह्येष समृद्ध्यै ॥ १० ॥

हरत्यथाग्निहोत्रं निंम्रोचति हरेद्देवतागच्छत्युद्वायेन्मन्येद्रमस्व बृहद्विराडेति नव च ॥ अनु० ४ ॥

निवै पूर्व्वं त्रीणि निंम्रोचति दर्भेण यद्धिरण्यमग्निहोत्रं। पुनर्वरुणोवारुणं निवाएतस्याभ्युदेति चतुर्गृहीतमाज्यं यदाज्यं यदग्निं पराच्युषाः। पुनर्मित्रोमैत्रं यस्याहवनियेनुद्वाते गार्हपत्ये यद्वै मन्येदुद्धरेत् ॥

पञ्चमोऽनुवाकः ।

यस्य प्रातःसवने सोमोऽतिरिच्यते। माध्यन्दिनꣳ सवनं कामयमानोऽभ्यतिरिच्यते। गौधयति मरुतामिति धयद्वतीषु कुर्व्वन्ति। छिनत्ति वै सन्ध्यधीतं। सन्धीव खलु वाएतत्। यत्सवनस्यातिरिच्यते। यद्धयद्वतीषु कुर्व्वन्ति। सन्धेः शान्त्यै। गायत्रꣳ साम भवति पञ्चदशः स्तोमः। तेनैव प्रातःसवनान्नयन्ति ॥ १ ॥

मरुत्वतीषु कुर्व्वन्ति। तेनैव माध्यन्दिनात्सवनान्नयन्ति। होतुश्चमसमनून्नयन्ते। होतानुशꣳसति। म-

ध्यतएव यज्ञꣳ समादधाति। यस्य माध्यन्दिने सवने सोमोऽतिरिच्यते। आदित्यं तृतीयसवनं कामयमानोऽभ्यतिरिच्यते। गौरिवीतꣳ साम भवति। अतिरिक्तं वै गौरिवीतं। अतिरिक्तं यत्सवनस्यातिरिच्यते॥ २॥

अतिरिक्तस्य शान्त्यै। बण्महाꣳ असि सूर्येति कुर्वन्ति। यस्यैवादित्यस्य सवनस्य कामेनातिरिच्यते। तेनैवैनं कामेन समर्धयन्ति। गौरिवीतꣳ साम भवति। तेनैव माध्यन्दिनात्सवनान्नयन्ति। सप्तदशः स्तोमः। तेनैव तृतीयसवनान्नयन्ति। होतुश्चमसमनून्नयन्ते। होतानुशꣳसति॥ ३॥

मध्यतएव यज्ञꣳ समादधाति। यस्य तृतीयसवने सोमोऽतिरिच्येत। उक्थ्यं कुर्वीत। यस्योक्थ्येऽतिरिच्येत। अतिरात्रं कुर्वीत। यस्यातिरात्रेऽतिरिच्यते। तं वै दुष्प्रज्ञानं। यजमानं वा एतत्पशवआसाद्य यन्ति। बृहत्साम भवति। बृहद्वाइमाँल्लोकान्दाधार॥ बार्हताः पशवः। बृहतैवास्मै पशून्दाधार। शिपिविष्टवतीषु कुर्वन्ति। शिपिविष्टोवै देवानां पुष्टं। पुष्ट्यैवैनꣳ समर्धयन्ति। होतुश्चमसमनून्नयन्ते। होतानुशꣳसति। मध्यतएव यज्ञꣳ समादधाति॥ ५॥

यन्ति सवनस्यातिरिच्यते शंसति द्वाधाराष्टौ च॥ अनु॰ ५॥

षष्ठोऽनुवाकः।

एकैकोवै जनतायामिन्द्रः। एकं वाएताविन्द्रमभिसंसुनुतः। यौ द्वौ संसुनुतः। प्रजापतिर्वाएष वितायते। यद्यज्ञः। तस्य ग्रावाणोदन्ताः। अन्यतरं वाएते संसुन्वतोनिर्वप्सति। पूर्व्वेणोपसृता देवताइत्याहुः। पूर्व्वोपसृतस्य वै श्रेयान् भवति। एतावन्त्याज्यानि भवन्त्यभिजित्यै॥ १॥

मरुत्वतीः प्रतिपदः। मरुतोवै देवानामपराजितमायतनं। देवानामेवापराजितआयतने यतते। उभे बृहद्रथन्तरे भवतः। इयं वाव रथन्तरं। असौ बृहत्। आभ्यामेवैनमन्तरेति। वाचश्च मनसश्च। प्राणाच्चापानाच्च। दिवश्च पृथिव्याश्च॥ २॥

सर्व्वस्माद्वित्ताद्वेद्यात्। अभिवर्त्तोब्रह्मसाम भवति। सुवर्गस्य लोकस्याभिवृत्त्यै। अभिजिद्भवति। सुवर्गस्य लोकस्याभिजित्यै। विश्वजिद्भवति। विश्वस्य जित्यै। यस्य भूयांसोयज्ञक्रतवइत्याहुः। स देवतावृङ्क्तइति। यद्यग्निष्टोमः सोमः पुरस्तात्स्यात्॥ ३॥

उक्थ्यं कुर्व्वीत। यद्युक्थ्यं स्यात्। अतिरात्रं कुर्व्वीत। यज्ञक्रतुभिरेवास्य देवता वृङ्क्ते। योवै छन्दोभिरभिभवति। स सꣳसुन्वतोरभिभवति। संवेशाय त्वोपवेशाय त्वेत्याह। छन्दाꣳसि वै संवेशउपवेशः। छन्दोभिरेवास्य छन्दाꣳस्यभिभवति। इष्टर्गोवाऋत्विजामध्वर्य्युः ॥ ४ ॥

इष्टर्गः खलु वै पूर्व्वोर्ष्टुः क्षीयते। प्राणापानौ मृत्योर्मापातमित्याह। प्राणापानयोरेव श्रयते। प्राणापानौ मामाहासिष्टमित्याह। नैनं पुरायुषः प्राणापानौ जहितः। आर्त्तिं वाएते निर्यन्ति। येषां दीक्षितानां प्रमीयते। तं यदववर्जेयुः। क्रूरकृतामिवैषां लोकः स्यात्। आहर दहेति ब्रूयात् ॥ ५ ॥

तं दक्षिणतो वेद्यै निधाय। सर्पराज्ञिया ऋग्भिस्तुयुः। इयं वै सर्पतो राज्ञी। अस्याएवैनं परिददति। व्यृद्धं तदित्याहुः। यस्तुतमननुशस्तमिति। होता प्रथमः प्राचीनावीती मार्जालीयं परीयात्। यामीरनुब्रुवन्। सर्पराज्ञीनां कीर्त्तयेत्। उभयोरेवैनं लोकयोः परिददति ॥ ६ ॥

अथोधुवन्त्येवैनं। अथोन्ये चास्मै ह्नुवते। त्रिःपरि-

यन्ति। त्रय इमे लोकाः। एभ्य एवैनं लोकेभ्यो धुवते। त्रिः पुनः परियन्ति। षट्सम्पद्यन्ते। षड्वा ऋतवः। ऋतुभिरेवैनं धुवते। अग्न आयूंषि पवस इति प्रतिपदं कुर्वीरन्॥ रथन्तरसामैषांᳲ सोमः स्यात्। आयुरेवात्मन्दधते। अथो पाप्मानमेव विजहतो यन्ति॥ ७॥

अभिजित्यै पृथिव्याश्च स्याद्ध्वर्य्युर्ब्रूयाल्लोकयोः परिदद्दति कुर्वीरंᳲस्तोर्णि च॥ अनु० ६॥

सप्तमोऽनुवाकः।

असुर्य्यं वा एतस्माद्वर्णं कृत्वा। पशवो वीर्य्यमपक्रामन्ति। यस्य यूपो विरोहति। त्वाष्ट्रं बहु रूपमालभेत। त्वष्टा वै रूपाणामीशे। य एव रूपाणामीशे। सोऽस्मिन् पशून् वीर्य्यं यच्छति। नास्मात्पशवो वीर्य्यमपक्रामन्ति। आर्त्तिमेते नियन्ति। येषां दीक्षितानामग्निरुद्वायति॥ १॥

यदाहवनीय उद्वायेत्। यत्तं मन्थेत्। विच्छिन्द्यात्। भ्रातृव्यमस्मै जनयेत्। यदाहवनीय उद्वायेत्। आग्नीध्रादुद्धरेत्। यदाग्नीध्र उद्वायेत्। गार्हपत्यादुद्धरेत्। यद्गार्हपत्य उद्वायेत्। अत एव पुनर्मन्थेत्॥ २॥

अत्र वाव स निलयते। यत्र खलु वै निलीनमुत्तमं पश्यन्ति। तदेनमिच्छन्ति। यस्माद्दारोरुद्बायेत्। तस्यारणीं कुर्य्यात्। क्रुमुकमपि कुर्य्यात्। एषा वा अग्नेः प्रिया तनूः। यत् क्रुमुकः। प्रिययैवैनं तनुवा समर्धयन्ति। गार्हपत्यं मन्थति ॥ ३ ॥

गार्हपत्योवा अग्नेर्योनिः। स्वादेवैनं योनेर्जनयति। नास्मै भ्रातृव्यं जनयति। यस्य सोम उपदस्येत्। सुवर्णꣳ हिरण्यं द्वेधा विच्छिद्य। ऋजीषेऽन्यदा धूनुयात्। जुहुयादन्यत्। सोममेवाभिषुणोति। सोमं जुहोति। सोमस्य वा अभिषूयमाणस्य प्रिया तनूरुदक्रामत् ॥ ४ ॥

तत्सुवर्णꣳ हिरण्यमभवत्। यत्सुवर्णꣳ हिरण्यं कुर्व्वन्ति। प्रिययैवैनं तनुवा समर्धयन्ति। यस्याक्रीतꣳ सोममपहरेयुः। क्रीणीयादेव। सैव ततः प्रायश्चित्तिः। यस्य क्रीतमपहरेयुः। आदाराꣳश्च फाल्गुनानि चाभिषुणुयात्। गायत्रीयꣳ सोममाहरत्। तस्य योऽꣳशुः परापतत् ॥ ५ ॥

तआदारा अभवन्। इन्द्रोवृत्रमहन्। तस्य वल्कः परापतत्। तानि फाल्गुनान्यभवन्। पशवोवै फाल्गुनानि। पशवः सोमोराजा। यदादाराꣳश्च फाल्गु-

नानि चाभिषुणोति। सोममेव राजानमभिषुणोति। शृतेन प्रातःसवने श्रीणीयात्। दध्ना मध्यन्दिने ॥ ६ ॥

नीतमिश्रेण तृतीयसवने। अग्निष्टोमः सोमः स्याद्र-थन्तरसाम। यद्यृत्विजोवृताः स्युः। तएनं याजयेयुः। एकाङ्गां दक्षिणां दद्यात्तेभ्यएव। पुनः सोमं क्रीणीयात्। यज्ञेनैव तद्यज्ञमिच्छति। सैव ततः प्रायश्चित्तिः। सर्व्वा-भ्योवा एष देवताभ्यः सर्व्वेभ्यः पृष्ठेभ्यआत्मानमागु-रते। यः सत्रायागुरते॥ एतावान् खलु वै पुरुषः। या-वदस्य वित्तं। सर्व्ववेदसे न यजेत। सर्व्वपृष्ठोऽस्य सोमः स्यात्। सर्व्वाभ्यएव देवताभ्यः सर्व्वेभ्यः पृष्ठेभ्यआत्मानं निष्क्रीणीते ॥ ७ ॥

उद्वायति मन्थेन्मन्थत्यक्रामत्परापतन्मध्यन्दिनआ-गुरते पञ्च च ॥ अनु० ७ ॥

अष्टमोऽनुवाकः ।

पवमानः सुवर्जनः। पवित्रेण विचर्षणिः। यः पूतः स पुनातु मा। पुनन्तु मा देवजनाः। पुनन्तु मनवोधिया। पुनन्तु विश्वआयवः। जातवेदः पवित्रवत्। पवित्रेण पु-नीहि मा। शुक्रेण देवदीद्यत्। अग्ने क्रत्वाक्रतूꣳरनु ॥१॥

यत्ते पवित्रमर्च्चिषि। अग्ने विततमन्तरा। ब्रह्म तेन

पुनीमहे। उभाभ्यां देव सवितः। पवित्रेण सवेन च। इदं ब्रह्म पुनीमहे। वैश्वदेवी पुनती देव्यागात्। यस्यै बह्वीस्तनुवो वीतपृष्ठाः। तया मदन्तः सधमाद्येषु। वयꣳ स्याम पतयो रयीणां॥ २॥

वैश्वानरो रश्मिभिर्मा पुनातु। वातः प्राणेनेषिरो मयोभूः। द्यावापृथिवी पयसा पयोभिः। ऋतावरी यज्ञिये मा पुनीतां। बृहद्भिः सवितस्तृभिः। वर्षिष्ठैर्देवमन्मभिः। अग्ने दक्षैः पुनीहि मा। येन देवा अपुनत। येनापो दिव्यंकशः। तेन दिव्येन ब्रह्मणा॥ ३॥

इदं ब्रह्म पुनीमहे। पावमानीरध्येति। ऋषिभिः सम्भृतꣳ रसं। सर्व्वꣳ स पूतमश्नाति। स्वदितं मातरिश्वना। पावमानीर्यो अध्येति। ऋषिभिः सम्भृतꣳ रसं। तस्मै सरस्वती दुहे। क्षीरꣳ सर्पिर्मधूदकं। पावमानीः स्वस्त्ययनीः॥ ४॥

सुदुघाहि पयस्वतीः। ऋषिभिः सम्भृतो रसः। ब्राह्मणेष्वमृतꣳ हितं। पावमानीर्दिशन्तु नः। इमं लोकमथो अमुं। कामान्त्समर्धयन्तु नः। देवीर्देवैः समाभृताः। पावमानीः स्वस्त्ययनीः। सुदुघाहि घृतश्चुतः। ऋषिभिः सम्भृतो रसः॥ ५॥

ब्राह्मणेष्वमृतꣳ हितं। येन देवाः पवित्रेण। आत्मानं पुनते सदा। तेन सहस्रधारेण। पावमान्यः पुनन्तु मा। प्राजापत्यं पवित्रं। शतोद्यामꣳ हिरण्मयं। तेन ब्रह्मविदो वयं। पूतं ब्रह्म पुनीमहे। इन्द्रः सुनीती सह मा पुनातु॥ सोमः स्वस्त्या वरुणः समीच्या। यमो राजा प्रमृणाभिः पुनातु मां। जातवेदा मोर्जयन्त्या पुनातु॥ ६॥

अनु रयीणां ब्रह्मणा स्वस्त्ययनीः सुदुघा हि घृतश्चुत ऋषिभिः सम्भृतो रसः पुनातु चीणि च॥ अनु० ८॥

नवमोऽनुवाकः।

प्रजा वै सत्रमासत तपस्तप्यमाना अजुह्वतीः। देवा अपश्यञ्चमसं घृतस्य पूर्णꣳ स्वधां। तमुपोदतिष्ठन्तमजुह्वुः। तेनार्धमासऊर्जमवारुन्धत। तस्मादर्धमासे देवा इज्यन्ते। पितरोऽपश्यञ्चमसं घृतस्य पूर्णꣳ स्वधां। तमुपोदतिष्ठन्तमजुह्वुः। तेन मास्यूर्जमवारुन्धत। तस्मान्मासि पितृभ्यः क्रियते। मनुष्या अपश्यञ्चमसं घृतस्य पूर्णꣳ स्वधां॥ १॥

तमुपोदतिष्ठन्तमजुह्वुः। तेन द्वयीमूर्जमवारुन्धत। तस्माद्दिरह्नो मनुष्येभ्य उपह्रियते। प्रातश्च सायञ्च।

पशवोऽपश्यञ्चमसं घृतस्य पूर्णꣳ स्वधां। तमुपोदतिष्ठन्तमजुहवुः। तेन त्रयीमूर्जमवारुन्धत। तस्मात् त्रिरह्नः पशवः प्रेरते। प्रातः सङ्गवे सायं। असुरा अपश्यञ्चमसं घृतस्य पूर्णꣳ स्वधां॥ २॥

तमुपोदतिष्ठन्तमजुहवुः। तेन संवत्सर ऊर्जमवारुन्धत। ते देवा अमन्यन्त। अमी वा इदमभूवन्। यद्वयꣳ स्म इति। त एतानि चातुर्मास्यान्यपश्यन्। तानि निरवपन्। तैरेवैषां तामूर्जमवृञ्जत। ततो देवा अभवन्। परासुराः॥ ३॥

यद्यजते। यामेव देवा ऊर्जमवारुन्धत। तां तेनावरुन्धे। यत्पितृभ्यः करोति। यामेव पितर ऊर्जमवारुन्धत। तां तेनावरुन्धे। यदावसथेऽन्नꣳ हरन्ति। यामेव मनुष्या ऊर्जमवारुन्धत। तां तेनावरुन्धे। यद्दक्षिणां ददाति॥ ४॥

यामेव पशव ऊर्जमवारुन्धत। तां तेनावरुन्धे। यच्चातुर्मास्यैर्यजते। यामेवासुरा ऊर्जमवारुन्धत। तां तेनावरुन्धे। भवत्यात्मना। परास्य भ्रातृव्यो भवति। विराजो वा एषा विक्रान्तिः। यच्चातुर्मास्यानि। वैश्वदेवेनास्मिँल्लोके प्रत्यतिष्ठत्॥ वरुणप्रघासैरन्तरिक्षे। सा-

कमेधैरमुष्मिँल्लोके। एष ह त्वा वै तत्सर्व्वं भवति। यएवं विद्वाꣳश्चातुर्मास्यैर्यजते ॥ ५ ॥

मनुष्याअपश्यश्चमसं घृतस्य पूर्णꣳ स्वधामसुरा अपश्यश्चमसं घृतस्य पूर्णꣳ स्वधामसुरा ददात्यतिष्ठच्च-त्वारिं च ॥ अनु० ९ ॥

दशमोऽनुवाकः।

अग्निर्वाव संवत्सरः। आदित्यः परिवत्सरः। चन्द्रमा इदावत्सरः। वा पुनरनुवत्सरः। यद्वैश्वदेवेन यजते। अग्निमेव तत्संवत्सरमाप्नोति। तस्माद्वैश्वदेवेन यजमानः। संवत्सरीणाꣳ स्वस्तिमाशास्तइत्याशासीत। यद्व-रुणप्रघासैर्यजते। आदित्यमेव तत्परिवत्सरमाप्नोति ॥ १ ॥

तस्माद्वरुणप्रघासैर्यजमानः। परिवत्सरीणाꣳ स्व-स्तिमाशास्तइत्याशासीत। यत्साकमेधैर्यजते। चन्द्र-मसमेव तदिदावत्सरमाप्नोति। तस्मात्साकमेधैर्यज-मानः। इदावत्सरीणाꣳ स्वस्तिमाशास्तइत्याशासीत। यत्पितृयज्ञेन यजते। देवानेव तदन्ववस्यति। अथवा अस्य वायुश्चानुवत्सरश्चाप्रीतावुच्छिष्येते। यच्छुनासी-रीयेण यजते ॥ २ ॥

वायुमेव तदनुवत्सरमाप्नोति। तस्माच्छुनासीरी-येण यजमानः। अनुवत्सरीणाꣳ स्वस्तिमाशास्त इत्या-शासीत। संवत्सरं वा एष ईप्सतीत्याहुः। यश्चातुर्मा-स्यैर्यजत इति। एष ह वै संवत्सरमाप्नोति। य एवं वि-द्वाꣳश्चातुर्मास्यैर्यजते। विश्वे देवाः समयजन्त। तेऽग्नि-मेवायजन्त। त एतं लोकमजयन् ॥ ३ ॥

यस्मिन्नग्निः। यद्वैश्वदेवेन यजते। एतं मे लोकं ज-यति। यस्मिन्नग्निः। अग्नेरेव सायुज्यमुपैति। यदा वैश्वदेवेन यजते। अथ संवत्सरस्य गृहपतिमाप्नोति। यदा संवत्सरस्य गृहपतिमाप्नोति। अथ सहस्रयाजि-नमाप्नोति। यदा सहस्रयाजिनमाप्नोति ॥ ४ ॥

अथ गृहमेधिनमाप्नोति। यदा गृहमेधिनमाप्नोति। अथाग्निर्भवति। यदाग्निर्भवति। अथ गौर्भवति। एषा वै वैश्वदेवस्य मात्रा। एतद्वा एतेषामवमं। अतोऽतोवा उत्तराणि श्रेयाꣳसि भवन्ति। यद्विश्वे देवाः समय-जन्त। तद्वैश्वदेवस्य वैश्वदेवत्वं ॥ ५ ॥

अथादित्यो वरुणꣳ राजानं वरुणप्रघासैरयजत। स एतं लोकमजयत्। यस्मिन्नादित्यः। यद्वरुणप्रघासै-र्यजते। एतमेव लोकं जयति। यस्मिन्नादित्यः। आदि-

त्यस्यैव सायुज्यमुपैति। यदादित्योवरुणꣳ राजानं वरुणप्रघासैरयजत। तद्वरुणप्रघासानां वरुणप्रघासत्वं। अथ सोमोराजा छन्दाꣳसि साकमेधैरयजत ॥ ६ ॥

सएतं लोकमजयत्। यस्मिꣳश्चन्द्रमाविभाति। यत्साकमेधैर्यजते। एतमेव लोकञ्जयति। यस्मिꣳश्चन्द्रमा विभाति। चन्द्रमसएव सायुज्यमुपैति। सोमोवै चन्द्रमाः। एष ह वै साक्षात् सोमं भक्षयति। यएवं विद्वान्त्साकमेधैर्यजते। यत्सोमश्च राजा छन्दाꣳसि च समैधन्त ॥ ७ ॥

तत्साकमेधानाꣳ साकमेधत्वं। अथर्त्तवः पितरः प्रजापतिं पितरं पितृयज्ञेनायजन्त। तएतं लोकमजयन्। यस्मिन्नृतवः। यत्पितृयज्ञेन यजते। एतमेव लोकं जयति। यस्मिन्नृतवः। ऋतूनामेव सायुज्यमुपैति। यदृतवः। पितरः प्रजापतिं पितरं पितृयज्ञेनायजन्त। तत्पितृयज्ञस्य पितृयज्ञत्वं ॥ ८ ॥

अथौषधयइमं देवं त्र्यम्बकैरजयन्त प्रथेमहीति। ततोवै ताअप्रथन्त। यएवं विद्वाꣳस्त्र्यम्बकैर्यजते। प्रथते प्रजया पशुभिः। अथ वायुः परमेष्ठिनꣳ शुनासीरीयेणायजत। सएतं लोकमजयत्। यस्मिन्वायुः।

यच्छुनासीरीयेण यजते। एतमेव लोकं जयति। यस्मिन् वायुः॥ ९॥

वायोरेव सायुज्यमुपैति। ब्रह्मवादिनो वदन्ति प्रचातुर्मास्ययाजी मीयता३ न प्रमीयता३ इति। जीवन् वा एष ऋतूनप्येति। यदि वसन्ता प्रमीयते। वसन्तोभवतिः। यदि ग्रीष्मे ग्रीष्मः। यदि वर्षासु वर्षाः। यदि शरदि शरत्। यदि हेमन् हेमन्तः॥ ऋतुर्भूत्वा संवत्सरमप्येति। संवत्सरः प्रजापतिः। प्रजापतिर्वावैषः॥ १०॥

परिवत्सरमाप्नोति शुनासीरीयेण यजतेऽजयन् सहस्रयाजिनमाप्नोति वैश्वदेवत्वꣳ साकमेधैर्यजत समैधन्त पितृयज्ञत्वं जयति यस्मिन् वायुर्हेमन्तस्त्रीणि च॥ अनु० १०॥

उभये युवꣳ सुराममुदस्थान्निवै यस्य प्रातःसवनएकैकोऽसुर्य्यं पवमानः प्रजावै सत्रमासतान्निर्वाव संवत्सरोदर्शं। उभये वाउदस्थात्सर्व्वाभिर्मध्यतोऽत्र वाव ब्राह्मणेष्वथ गृहमेधिनꣳ षट्पष्टिः॥ हरिः ॐ॥

इति चतुर्थोऽध्यायः॥

हरिः ॐ ॥

प्रथमाष्टके पञ्चमाध्याये

प्रथमोऽनुवाकः ।

अग्नेः कृत्तिकाः। शुक्रं परस्ताज्ज्योतिरवस्तात्। प्रजापते रोहिणी। आपः परस्तादोषधयोऽवस्तात्। सोमस्येन्वका। विततानि परस्ताद्वयन्तोऽवस्तात्। रुद्रस्य बाहू। मृगयवः परस्ताद्विक्षारोऽवस्तात्। अदित्यै पुनर्वसू। वातः परस्तादार्द्रमवस्तात् ॥ १ ॥

बृहस्पतेस्तिष्यः। जुह्वतः परस्ताद्यजमाना अवस्तात्। सर्पाणामाश्लेषाः। अभ्यागच्छन्तः परस्तादभ्यानृत्यन्तोऽवस्तात्। पितृणां मघाः। रुदन्तः परस्तादपभ्रंशोऽवस्तात्। अर्यम्णः पूर्वे फल्गुनी। जाया परस्तादृषभोऽवस्तात्। भगस्योत्तरे। वहतवः परस्ताद्वहमाना अवस्तात् ॥ २ ॥

देवस्य सवितुर्हस्तः। प्रसवः परस्तात्सनिरवस्तात्। इन्द्रस्य चित्रा। ऋतं परस्तात्सत्यमवस्तात्। वायोर्निष्ट्या। व्रततिः परस्तादसिद्धिरवस्तात्। इन्द्राग्नियोर्विशाखे। युगानि परस्तात्कृषमाणा अवस्तात्। मित्रस्यानू-

राधाः। अभ्यारोहत्परस्तादभ्यारूढमवस्तात् ॥ ३ ॥

इन्द्रस्य रोहिणी। शृणत्परस्तात्प्रतिशृणदवस्तात्। निर्ऋत्यै मूलवर्हणी। प्रतिभञ्जन्तः परस्तात् प्रतिशृणन्तोऽवस्तात्। अपां पूर्वा अषाढाः। वर्चः परस्तात्समितिरवस्तात्। विश्वेषां देवानामुत्तराः। अभिजयत्परस्तादभिजितमवस्तात्। विष्णोः श्रोणा। पृच्छमानाः परस्तात्पन्था अवस्तात् ॥ ४ ॥

वसूनाꣳ श्रविष्ठाः। भूतं परस्ताद्भूतिरवस्तात्। इन्द्रस्य शतभिषक्। विश्वव्यचाः परस्ताद्विश्वक्षितिरवस्तात्। अजस्यैकपदः पूर्वे प्रोष्ठपदाः। वैश्वानरं परस्ताद्वैश्वावसवमवस्तात्। अहेर्बुध्नियस्योत्तरे। अभिषिञ्चन्तः परस्तादभिशृण्वन्तोऽवस्तात्। पूष्णो रेवती। गावः परस्ताद्वत्सा अवस्तात्॥ अश्विनोरश्वयुजौ। ग्रामः परस्तात्सेनाऽवस्तात्। यमस्यापभरणीः। अपकर्षन्तः परस्तादपवहन्तोऽवस्तात्। पूर्णा पश्चाद्यत्ते देवा अदधुः ॥ ५ ॥

अद्रिमवस्ताद्वहमाना अवस्तादभ्यारूढमवस्तात् पन्था अवस्ताद्वत्सा अवस्तात् पञ्च च ॥ अनु० १ ॥

द्वितीयोऽनुवाकः ।

यत् पुण्यं नक्षत्रं । तद्बपट्कुर्वीतोपव्युषं । यदा वै सूर्य उदेति । अथ नक्षत्रं नैति । यावति तत्र सूर्यो गच्छेत् । यत्र जघन्यं पश्येत् । तावति कुर्वीत । यत्कारी स्यात् । पुण्याह एव कुरुते । एवꣳ ह वै यज्ञेषुश्च शतद्युम्नश्च मात्स्यो निरवसाययाञ्चकार ॥ १ ॥

यो वै नक्षत्रियं प्रजापतिं वेद । उभयोरेनं लोकयोर्विदुः । हस्त एवास्य हस्तः । चित्रा शिरः । निष्ट्या हृदयं । ऊरू विशाखे । प्रतिष्ठानूराधाः । एष वै नक्षत्रियः प्रजापतिः । य एवं वेद । उभयोरेनं लोकयोर्विदुः ॥ २ ॥

अस्मिꣳश्चामुष्मिꣳश्च । यां कामयेत दुहितरं प्रिया स्यादिति । तान्निष्ट्यां दद्यात् । प्रियैव भवति । नैव तु पुनरागच्छति । अभिजिन्नाम नक्षत्रं । उपरिष्टादषाढानां । अवस्ताच्छ्रोणायै । देवासुराः संयत्ता आसन् । ते देवास्तस्मिन्नक्षत्रेऽभ्यजयन् ॥ ३ ॥

यदभ्यजयन् । तदभिजितोऽभिजित्त्वं । यं कामयेतानपजय्यं जयेदिति । तमेतस्मिन्नक्षत्रे पातयेत् । अनपजय्यमेव जयति । पापपराजितमिव तु । प्रजापतिः पशू-

न्यसृजत। ते नक्षत्रं नक्षत्रमुपातिष्ठन्त। ते समावन्त एवाभवन्। ते रेवतीमुपातिष्ठन्त ॥ ४ ॥

ते रेवत्यां प्राभवन्। तस्माद्रेवत्यां पशूनां कुर्वीत। यत्किंचार्वाचीनꣳ सोमात्। प्रैव भवन्ति। सलिलं वा इदमन्तरासीत्। यदतरन्। तत्तारकाणां तारकत्वं। यो वा इह यजते। अमुꣳ स लोकं नक्षते। तन्नक्षत्राणां नक्षत्रत्वं ॥ ५ ॥

देवगृहा वै नक्षत्राणि। य एवं वेद। गृह्येव भवति। यानि वा इमानि पृथिव्याश्चित्राणि। तानि नक्षत्राणि। तस्मादश्लीलनामꣳश्चित्रे। नावस्येन्न यजेत। यथा पापाहे कुरुते। तादृगेव तत्। देवनक्षत्राणि वा अन्यानि ॥ ६ ॥

यमनक्षत्राण्यन्यानि। कृत्तिकाः प्रथमं। विशाखे उत्तमं। तानि देवनक्षत्राणि। अनूराधाः प्रथमं। अपभरणीरुत्तमं। तानि यमनक्षत्राणि। यानि देवनक्षत्राणि। तानि दक्षिणेन परियन्ति। यानि यमनक्षत्राणि ॥ ७ ॥

तान्युत्तरेण। अन्वेषामरात्स्मेति। तदनूराधाः। ज्येष्ठमेषामवधिष्मेति। तज्ज्येष्ठघ्नी। मूलमेषामवृक्षामे-

ति। तन्मूलवर्हणी। यन्नासहन्त। तदपाढाः। यदश्लो-
णत् ॥ ८ ॥

तच्छ्रोणा। यदशृणोत्। तच्छ्रविष्ठाः। यच्छतमभिष-
ज्यन्। तच्छतभिषक्। प्रोष्ठपदेषूदयच्छन्त। रेवत्यामर-
वन्त। अश्वयुजोरयुञ्जत। अपभरणीष्वपावहन्। तानि
वा एतानि यमनक्षत्राणि॥ यान्येव देवनक्षत्राणि। तेषु
कुर्वीत यत्कारी स्यात्। पुण्याह एव कुरुते ॥ ९ ॥

चकारैवं वेदोभयोरेनं लोकयोर्विदुरजयन्रेवतीमु-
पातिष्ठन्त नक्षत्रत्वमन्यानि यानि यमनक्षत्राण्यश्लो-
णाद्यमनक्षत्राणि त्रीणि च ॥ अनु० २ ॥

तृतीयोऽनुवाकः ।

देवस्य सवितुः प्रातःप्रसवः प्राणः। वरुणस्य साय-
मासवोऽपानः। यत्प्रतीचीनं प्रातस्तनात्। प्राचीनꣳ
सङ्गवात्। ततो देवा अग्निष्टोमं निरमिमीत। तत्तदात्त-
वीर्य्यं निर्मार्गः। मित्रस्य सङ्गवः। तत्पुण्यं तेजस्व्यहः।
तस्मात्तर्हि पशवः समायन्ति। यत्प्रतीचीनꣳ सङ्गवात्॥१॥

प्राचीनं मध्यन्दिनात्।ततो देवा उक्थं निरमिमीत।
तत्तदात्तवीर्य्यं निर्मार्गः। बृहस्पतेर्मध्यन्दिनः। तत्पुण्यं
तेजस्व्यहः। तस्मात्तर्हि तेऽक्ष्णिष्ठं तपति। यत्प्रतीचीनं

मध्यन्दिनात्। प्राचीनमपराह्णात्। ततो देवाः षोडशिनं निरमिमीत। तत्तदात्तवीर्य्यं निर्मार्गः ॥ २ ॥

भगस्यापराह्णः। तत्पुण्यं तेजस्व्यहः। तस्मादपराह्णे कुमार्य्यो भगमिच्छमाना‌श्चरन्ति। यत्प्रतीचीनमपराह्णात्। प्राचीनꣳ सायाह्नात्। ततो देवा अतिरात्रं निरमिमीत। तत्तदात्तवीर्य्यं निर्मार्गः। वरुणस्य सायं। तत् पुण्यं तेजस्व्यहः। तस्मात्तर्हि नानृतं वदेत् ॥ ३ ॥

ब्राह्मणो वा अष्टाविꣳशो नक्षत्राणां। समानस्याह्नः पञ्च पुण्यानि नक्षत्राणि। चत्वार्य्यश्लीलानि। तानि नव। यच्च परस्तान्नक्षत्राणां यच्चावस्तात्। तान्येकादश। ब्राह्मणो द्वादशः। यएवं विद्वान्त्संवत्सरं व्रतं चरति। संवत्सरेणैवास्य व्रतं गुप्तं भवति। समानस्याह्नः पञ्च पुण्यानि नक्षत्राणि॥ चत्वार्य्यश्लीलानि। तानि नव। आग्नेयी रात्रिः। ऐन्द्रमहः। तान्येकादश। आदित्यो द्वादशः। यएवं विद्वान्त्संवत्सरं व्रतं चरति। संवत्सरेणैवास्य व्रतं गुप्तं भवति ॥ ४ ॥

सङ्गवात् षोडशिनं निरमिमीत तत्तदात्तवीर्य्यं निर्मार्गो वदेद्भवति समानस्याह्नः पञ्च पुण्यानि नक्षत्राण्यष्टौ च ॥ अनु० ३ ॥

चतुर्थोऽनुवाकः ।

ब्रह्मवादिनो वदन्ति । कति पात्राणि यज्ञं वहन्तीति । त्रयोदशेति ब्रूयात् । स यद्ब्रूयात् । कस्तानि निर्मिमीतेति । प्रजापतिरिति ब्रूयात् । स यद्ब्रूयात् । कुतस्तानि निर्मिमीतेति । आत्मन इति । प्राणापानाभ्यामेवोपांश्वन्तर्यामौ निर्मिमीत ॥ १ ॥

व्यानादुपांशुसवनं । वाच ऐन्द्रवायवं । दक्षक्रतुभ्यां मैत्रावरुणं । श्रोत्रादाश्विनं । चक्षुषः शुक्रामन्थिनौ । आत्मन आग्रयणं । अङ्गेभ्य उक्थ्यं । आयुषो ध्रुवं । प्रतिष्ठाया ऋतुपात्रे । यज्ञं वाव तं प्रजापतिर्निर्मिमीत ॥ स निर्मितो नाध्रियत समम्लीयत । स एतान्प्रजापतिरपि वापानपश्यन् । तान्निरवपत् । तैर्वै स यज्ञमप्यवपत् । यदपि वापा भवन्ति । यज्ञस्य धृत्या असंव्लयाय ॥ २ ॥

उपांश्वन्तर्यामौ निर्मिमीतामिमीत षट् च ॥ अनु० ४ ॥

पञ्चमोऽनुवाकः ।

ऋतमेव परमेष्ठि । ऋतन्नात्येति किञ्चन । ऋते समुद्र आहितः । ऋते भूमिरियꣳश्रिता । अग्निस्तिग्मेन शोचिषा । तप आक्रान्तमुष्णिहा । शिरस्तपस्याहितं ।

वैश्वानरस्य तेजसा। ऋतेनास्य निवर्त्तये। सत्येन परि-
वर्त्तये॥ १॥

तपसास्यानुवर्त्तये। शिवेनास्योपवर्त्तये। शग्मेना-
स्याभिवर्त्तये। तदृतं तत्सत्यं। तद्व्रतं तच्छकेयं। तेन
शकेयं तेन राध्यासं। यद्घर्म्मः पर्य्यवर्त्तयत्। अन्तान् पृ-
थिव्या दिवः। अग्निरीशान ओजसा। वरुणो धीतिभिः
सह॥ २॥

इन्द्रो मरुद्भिः सखिभिः सह। अग्निस्तिग्मेन शोचिषा।
तपआक्रान्तमुष्णिहा। शिरस्तपस्याहितं। वैश्वानरस्य
तेजसा। ऋतेनास्य निवर्त्तये। सत्येन परिवर्त्तये।
तपसास्यानुवर्त्तये। शिवेनास्योपवर्त्तये। शग्मेनास्या-
भिवर्त्तये॥ ३॥

तदृतं तत्सत्यं। तद्व्रतं तच्छकेयं। तेन शकेयं तेन रा-
ध्यासं। योऽस्याः पृथिव्यास्त्वचि। निवर्त्तयत्योषधीः।
अग्निरीशान ओजसा। वरुणो धीतिभिः सह। इन्द्रो मरु-
द्भिः सखिभिः सह। अग्निस्तिग्मेन शोचिषा। तपआ-
क्रान्तमुष्णिहा॥ ४॥

शिरस्तपस्याहितं। वैश्वानरस्य तेजसा। ऋतेनास्य
निवर्त्तये। सत्येन परिवर्त्तये। तपसास्यानुवर्त्तये। शि-

वेनास्योपवर्त्तये। शग्मेनास्याभिवर्त्तये। तदृतं तत्सत्यं। तद्व्रतं तच्छकेयं। तेन शकेयं तेन राध्यासं ॥ ५ ॥

एकं मासमुदसृजत्। परमेष्ठी प्रजाभ्यः। तेनाभ्यो मह आवहत्। अमृतं मर्त्याभ्यः। प्रजामनुप्रजायसे। तदु ते मर्त्यामृतं। येन मासा अर्द्धमासाः। ऋतवः परिवत्सराः। येन ते ते प्रजापते। ईजानस्य न्यवर्त्तयन् ॥ ६ ॥

तेनाहमस्य ब्रह्मणा। निवर्त्तयामि जीवसे। अग्निस्तिग्मेन शोचिषा। तपआक्रान्तमुष्णिहा। शिरस्तपस्याहितं। वैश्वानरस्य तेजसा। ऋतेनास्य निवर्त्तये। सत्येन परिवर्त्तये। तपसास्यानुवर्त्तये। शिवेनास्योपवर्त्तये॥शग्मेनास्याभिवर्त्तये। तदृतं तत्सत्यं। तद्व्रतं तच्छकेयं। तेन शकेयं तेन राध्यासं ॥ ७ ॥

परिवर्त्तये सहाभिवर्त्तयउष्णिहा राध्यासं न्यवर्त्तयन्नुपवर्त्तये चत्वारि च ॥ अनु० ५ ॥

षष्ठोऽनुवाकः ।

देवा वै यद्यज्ञेऽकुर्व्वत। तदसुरा अकुर्व्वत। तेऽसुरा ऊर्ध्वं पृष्ठेभ्यो नापश्यन्। ते केशानग्रेऽवपन्त। अथ श्मश्रूणि। अथोपपक्षौ। ततस्तेऽवाञ्च आयन्। पराभवन्। यस्यैवं वपन्ति। अवाङेति ॥ १ ॥

अथो परैव भवति। अथ देवाऊर्ध्वं पृष्ठेभ्योऽपश्यन्। तउपपक्षावग्रेऽवपन्त। अथ श्मश्रूणि। अथ केशान्। ततस्तेऽभवन्। सुवर्गं लोकमायन्। यस्यैवं वपन्ति। भवत्यात्मना। अथो सुवर्गं लोकमेति॥ २॥

अथैतन्मनुर्वप्त्रे मिथुनमपश्यत्। स श्मश्रूण्यग्रेऽवपन्त। अथोपपक्षौ। अथ केशान्। ततोवै स प्राजायत प्रजया पशुभिः। यस्यैवं वपन्ति। प्रप्रजया पशुभिर्मिथुनैर्जायते। देवासुराः संयत्ताआसन्। ते संवत्सरे व्यायच्छन्त। तान्देवाश्चातुर्मास्यैरेवाभिप्रायुञ्जत॥ ३॥

वैश्वदेवेन चतुरोमासोऽवृञ्जतेन्द्रराजानः। ताञ्छीर्षं निचावर्त्तयन्त परिच। वरुणप्रघासैश्चतुरोमासोऽवृञ्जत वरुणराजानः। ताञ्छीर्षं निचावर्त्तयन्त परिच। साकमेधैश्चतुरो मासोऽवृञ्जत सोमराजानः। ताञ्छीर्षं निचावर्त्तयन्त परिच। या संवत्सरउपजीवासीत्। तामेषामवृञ्जत। ततोदेवाअभवन्। परासुराः॥ ४॥

यएवं विद्वांश्चातुर्मास्यैर्यजते। भ्रातृव्यस्यैव मासोऽवृङ्क्ते। शीर्षन्निचवर्त्तयते परिच। यैषा संवत्सरउपजीवा। वृङ्क्ते तां भ्रातृव्यस्य। क्षुधास्य भ्रातृव्यः पराभवति।

लोहितायसेन निर्वर्त्तयते। यद्वाइमामग्निरार्त्तावागते निवर्त्तयति। एतदेवैनाꣳ रूपं कृत्वा निवर्त्तयति। सा ततश्श्वश्वोभूयसी भवन्त्येति ॥ ५ ॥

प्रजायते। यएवं विद्वांल्लोहितायसेन निवर्त्तयते। एतदेव रूपं कृत्वा निवर्त्तयते। स ततः श्वश्वोभूयान् भवन्नेति। प्रैव जायते। त्रेण्या शलल्या निवर्त्तयेत। त्रीणि त्रीणि वै देवानामृद्धानि। त्रीणि च्छन्दाꣳसि। त्रीणि सवनानि। त्रयइमे लोकाः ॥ ६ ॥

ऋध्यामेव तद्वीर्य्यएषु लोकेषु प्रतितिष्ठति। यच्चातुर्मास्ययाज्यात्मनोनावद्येत्। देवेभ्यआवृश्चेत। चतुषु चत्वषु मासेषु निवर्त्तयेत। परोक्षमेव तद्देवेभ्यआत्मनोऽवद्यत्यनाव्रस्काय। देवानां वाएषआनीतः। यश्चातुर्मास्ययाजी। यएवंविन्निचवर्त्तयते परि च। देवताएवाप्येति। नास्य रुद्रः प्रजां पशूनभिमन्यते ॥ ७ ॥

एत्येत्ययुञ्जतासुराएति लोकामन्यते ॥ अनु॰ ६ ॥

सप्तमोऽनुवाकः ।

आयुषः प्राणꣳ सन्तनु। प्राणादपानꣳ सन्तनु। अपानाद्व्यानꣳ सन्तनु। व्यानाच्चक्षुः सन्तनु। चक्षुषः श्रो-

षुꣳ सन्तनु। श्रोत्रान्मनः सन्तनु। मनसो वाचꣳ सन्तनु। वाचआत्मानꣳ सन्तनु। आत्मनः पृथिवीꣳ सन्तनु। पृथिव्याअन्तरिक्षꣳ सन्तनु॥ अन्तरिक्षाद्दिवꣳ सन्तनु। दिवः सुवः सन्तनु॥ १ ॥

पृथिव्याअन्तरिक्षꣳ सन्तनु द्वेच॥ अनु० ७॥

अष्टमोऽनुवाकः।

इन्द्रोदधीचोअस्थभिः। वृत्राण्यप्रतिष्कुतः। जघान नवतीर्नव। इच्छन्नश्वस्य यच्छिरः। पर्वतेष्वपश्रितं। तद्विदच्छर्य्यणावति। अत्राह गोरमन्वत। नाम त्वष्टुरपीच्यं। इत्था चन्द्रमसो गृहे। इन्द्रमिद्गाथिनोबृहत्॥ १ ॥

इन्द्रमर्केभिरर्किणः। इन्द्रं वाणीरनूषत। इन्द्रइद्धर्य्योः सचा। सम्मिश्लआवचोयुजा। इन्द्रोवज्री हिरण्ययः। इन्द्रोदीर्घाय चक्षसे। आ सूर्य्यꣳ रोहयद्दिवि। वि गोभिरद्रिमैरयत्। इन्द्रवाजेषु नोअव। सहस्रप्रधनेषु च॥ २ ॥

उग्रउग्राभिरूतिभिः। तमिन्द्रं वाजयामसि। महे वृत्राय हन्तवे। स वृषा वृषभोभुवत्। इन्द्रः सदामने-

कृतः। ओजिष्ठः सबले हितः। द्युम्नी श्लोकी स सौम्यः। गिरा वज्रो न सम्भृतः। सबलो अनपच्युतः। ववक्षुरुग्रो अस्तृतः॥ ३॥

बृहच्चास्तृतः॥ अनु० ८॥

नवमोऽनुवाकः।

देवासुराः संयत्ता आसन्। स प्रजापतिरिन्द्रं ज्येष्ठं पुत्रमपन्यधत्त। नेदेनमसुरा बलीयाꣳसोऽहनन्निति। प्रह्रादो ह वै कायाधवः। विरोचनꣳ स्वं पुत्रमपन्यधत्त। नेदेनं देवा अहनन्निति। ते देवाः प्रजापतिमुपसमेत्योचुः। नाराजकस्य युद्धमस्ति। इन्द्रमन्विच्छामेति। तं यज्ञक्रतुभिरन्वैच्छन्॥ १॥

तं यज्ञक्रतुभिर्नान्वविन्दन्। तमिष्टिभिरन्वैच्छन्। तमिष्टिभिरन्वविन्दन्। तदिष्टीनामिष्टित्वं। एष्टयो ह वै नाम। ताइष्टयइत्याचक्षते परोक्षेण। परोक्षप्रिया इव हि देवाः। तस्मा एतमाग्नावैष्णवमेकादशकपालं दीक्षणीयं निरवपन्। तदपद्रुत्यातन्वत। तान् पत्नीसंयाजान्तउपानयन्॥ २॥

ते तदन्तमेव कृत्वोदद्रवन्। ते प्रायणीयमभिसमारोहन्। तदपद्रुत्यातन्वत। ताञ्छंय्वन्तउपानयन्।

ते तदन्तमेव कृत्वोदद्रवन्। तस्मातिथ्यमभिसमारोहन्। तदुपद्रुत्यातन्वत। तानिडान्तउपानयन्। ते तदन्तमेव कृत्वोदद्रवन्। तस्मादेताएतदन्ताइष्टयः सन्तिष्ठन्ते ॥ ३ ॥

एवꣳ हि देवाअकुर्व्वत। इति देवाअकुर्व्वत। इत्युव मनुष्याः कुर्व्वते। ते देवाऊचुः। यद्वाइदमुच्चैर्यज्ञेन चराम। तन्नोऽसुराः पाप्मानमनुविन्दन्ति। उपाꣳशूपसदा चराम। तथा नोऽसुराः पाप्मानमनुवेत्स्यन्तीति। तउपाꣳशूपसदमतन्वत। तिस्रएव सामिधेनीरनूच्य ॥ ४ ॥

स्रुवेणाघारमाघार्य्य। तिस्रः पराचीराहुतीर्हुत्वा। स्रुवेणोपसदं जुहवाञ्चक्रुः। उग्रं वचोअपावधीन्त्वेषं वचोअपावधीꣳ स्वाहेति। अशनायापिपासे ह वाउग्रं वचः। एनश्च वैरहत्यञ्च त्वेषं वचः। एतꣳहवाव तच्चतुर्द्धा विहितं पाप्मानं देवाअपजघ्निरे। तथोएवैतद्देवं विद्यजमानः। तिस्रएव सामिधेनीरनूच्य। स्रुवेणाघारमाघार्य्य ॥ ५ ॥

तिस्रः पराचीराहुतीर्हुत्वा। स्रुवेणोपसदं जुहोति। उग्रं वचोअपावधीन्त्वेषं वचोअपावधीꣳ स्वाहेति। अशनायापिपासे ह वाउग्रं वचः। एनश्च वैरहत्यञ्च त्वेषं

वर्चः। एतमेव तच्चतुर्धाविहितं पाप्मानं यजमानोऽपंह-
ते। तेभिनीयैवाहः पशुमालभन्त। अन्हएव तद्देवा-
अवर्त्तिं पाप्मानं मृत्युमपंजघ्निरे। तेनाभिनीयैव रात्रेः
प्राचरन्। रात्रियाएव तद्देवाअवर्त्तिं पाप्मानं मृत्यु-
मपंजघ्निरे॥ ६॥

तस्मादभिनीयैवाहः पशुमालभेत। अन्हएव तद्य-
जमानोऽवर्त्तिं पाप्मानं भ्रातृव्यानपंनुदते। तेनाभि-
नीयैव रात्रेः प्रचरेत्। रात्रियाएव तद्यजमानोऽवर्त्तिं
पाप्मानं भ्रातृव्यानपंनुदते। सएषउपवसथीये ह द्वि-
देवत्यः पशुरालभ्यते। द्वयं वाअस्मिँल्लोके यजमानः।
अस्थि च माꣳसञ्च। अस्थि चैव तेन माꣳसञ्च यज-
मानः सꣳस्कुरुते। तावाएताः पञ्च देवताः। अग्नीषो-
मावग्निर्मित्रावरुणौ॥ पञ्चपञ्ची वै यजमानः। त्व-
ङ्माꣳसꣳ स्नाय्वस्थि मज्जा। एतमेव तत्पञ्चधाविहित-
मात्मानं वरुणपाशान्मुञ्चति। भेषज्ताये निर्वरुणत्वा-
य। तꣳ सप्तभिश्छन्दोभिः प्रातराह्वयन्। तस्मात् स-
प्तचतुरुत्तराणि छन्दाꣳसि प्रातरनुवाकेऽनूच्यन्ते। तमे-
तयोपसमेत्योपासीदन्। उपास्मै गायता नरइति।
तस्मादेतया बहिष्पवमानउपसद्यः॥ ७॥

ऐच्छन्ननयँस्तिष्ठन्तोऽनूच्यानूच्यं सुवेर्गाघारमाघा-र्यं रात्रियाएव तद्देवाश्र्वर्त्तिं पाप्मानं मृत्युमपजघ्निरे मित्रावरुणौ नव च ॥ अनु० ९ ॥

जुहवामेतः हे देवाथो जुहोत्येतमेव तद्यजमानस्ते-ऽभिनीयं देवायजमानो देवादेवायजमानोयजमानः प्राचरन्प्रचरेदालभन्तालभेत मृत्युमपजघ्निरे मित्रा वरुणौ भ्रातृव्यान् ॥

दशमोऽनुवाकः ।

स समुद्रउत्तरतः प्राज्वलद्भूम्यन्तेन । एष वाव स समुद्रः । यच्चात्वालः । एषउवेव स भूम्यन्तः । यद्वेद्यन्तः । तदेतत् त्रिशलं त्रिपूरुपं । तस्मात्तं त्रिवितस्तं खनन्ति । स सुवर्णरजताभ्यां कुशीभ्यां परिगृहीतआसीत् । तं यदस्याध्यजनयन् । तस्मादादित्यः ॥ १ ॥

अथ यत्सुवर्णरजताभ्यां कुशीभ्यां परिगृहीतआसी-त् । सास्य कौशिकता । तं त्रिवृताभिप्रास्तुवत । तं त्रि-वृतादंदत । तं त्रिवृताहरन् । यावती त्रिवृतोमात्रा । तं पञ्चदशेनाभिप्रास्तुवत । तं पञ्चदशेनादंदत । तं पञ्चदशेनाहरन् । यावती पञ्चदशस्य मात्रा ॥ २ ॥

तः सप्तदशेनाभिप्रास्तुवत । तः सप्तदशेनादंदत ।

तᳬ सप्तदशेनाहरन् । यावती सप्तदशस्य मात्रा । तस्य सप्तदशेन ह्रियमाणस्य तेजो हरोऽपतत् । तमेकविᳬशेनाभिप्रास्तुवत । तमेकविᳬशेनाददत । तमेकविᳬशेनाहरन् । यावत्येकविᳬशस्य मात्रा । ते यत्त्रिवृता स्तुवते ॥ ३ ॥

त्रिवृतैव तद्यजमानमाददते । तं त्रिवृतैव हरन्ति । यावती त्रिवृतो मात्रा । अग्निर्वै त्रिवृत् । यावद्वा अग्नेर्दहतो धूम उदेत्यानुव्येति । तावती त्रिवृतो मात्रा । अग्नेरेवैनं तत् । मात्राᳬ सायुज्यᳬ सलोकतां गमयन्ति । अथ यत् पञ्चदशेन स्तुवते । पञ्चदशेनैव तद्यजमानमाददते ॥ ४ ॥

तं पञ्चदशेनैव हरन्ति । यावती पञ्चदशस्य मात्रा । चन्द्रमा वै पञ्चदशः । एष हि पञ्चदश्यामपक्षीयते । पञ्चदश्यामापूर्य्यते । चन्द्रमस एवैनं तत् । मात्राᳬ सायुज्यᳬ सलोकतां गमयन्ति । अथ यत् सप्तदशेन स्तुवते । सप्तदशेनैव तद्यजमानमाददते । तᳬ सप्तदशेनैव हरन्ति ॥ ५ ॥

यावती सप्तदशस्य मात्रा । प्रजापतिर्वै सप्तदशः । प्रजापतेरेवैनं तत् । मात्राᳬ सायुज्यᳬ सलोकतां गम-

यन्ति। अथ यदेकविंशेन स्तुवते। एकविंशेनैव त-द्यजमानमाददते। तमेकविंशेनैव हरन्ति। यावत्ये-कविंशस्य मात्रा। असौ वा आदित्य एकविंशः। आ-दित्यस्यैवैनं तत् ॥ ६ ॥

मात्राः सायुज्यं सलोकतां गमयन्ति। ते कुश्यौ। व्यघ्नन्। ते अहोरात्रे अभवताम्। अहरेव सुवर्णाभवत्। रजता रात्रिः। स यदादित्य उदेति। एतामेव तत्सुव-र्णां कुशीमनुसमेति। अथ यदस्तमेति। एतामेव तद्र-जतां कुशीमनुसंविशति॥ पुरुहादौ ह वै काययाधवः। वि-रोचनः स्वं पुत्रमुदास्यत्। स प्रदरोऽभवत्। तस्मात् प्रदरादुदकं नाचमेत् ॥ ७ ॥

आदित्यः पञ्चदशस्य मात्रा स्तुवते पञ्चदशेनैव त-द्यजमानमाददते सप्तदशेनैव हरन्त्यादित्यस्यैवैनं त-द्विंशति चत्वारि च॥ अनु० १० ॥

एकादशोऽनुवाकः।

ये वै चत्वारः स्तोमाः। कृतं तत्। अथ ये पञ्च। कलिः सः। तस्माच्चतुष्टोमः। तच्चतुष्टोमस्य चतुष्टोमत्वम्। तदा-हुः। कतमानि तानि ज्योतींषि। य एतस्य स्तोमा इ-ति। त्रिवृत्पञ्चदशः सप्तदश एकविंशः ॥ १ ॥

एतानि वाव तानि ज्योतीꣳषि। य एतस्य स्तोमाः। सोऽब्रवीत्। सप्तदशेन ह्रियमाणो व्यलेशिषि। भिषज्यतमेति। तदश्विनौ धानाभिरभिषज्यतां। पूषा करम्भेण। भारती परिवापेण। मित्रावरुणौ पयस्यया। तदाहुः ॥ २ ॥

यदश्विभ्यान्धानाः। पूष्णः करम्भः। भारत्यै परिवापः। मित्रावरुणयोः पयस्याथ। कस्मादेतेषाꣳ हविषामिन्द्रमेव यजन्तीति। एता ह्येनं देवताइति ब्रूयात्। एतैर्हविर्भिरभिषज्यꣳस्तस्मादिति। तं वसवोऽष्टाकपालेन प्रातःसवनेऽभिषज्यन्। रुद्राएकादशकपालेन माध्यन्दिने सवने। विश्वे देवा द्वादशकपालेन तृतीयसवने ॥ ३ ॥

स यदष्टाकपालान् प्रातःसवने कुर्य्यात्। एकादशकपालान्माध्यन्दिने सवने। द्वादशकपालाꣳस्तृतीयसवने। विलोम तद्यज्ञस्य क्रियेत। एकादशकपालानेव प्रातःसवने कुर्य्यात्। एकादशकपालान्माध्यन्दिने सवने। एकादशकपालाꣳस्तृतीयसवने। यज्ञस्य सलोमत्वाय। तदाहुः। यद्वसूनां प्रातःसवनं॥ रुद्राणां माध्यन्दिनꣳ सवनं। विश्वेषां देवानां तृतीयसवनं। अथ

कस्मादेतेषाꣳ हविषामिन्द्रमेव यजन्तीति। एताह्वं नं देवताइति ब्रूयात्। एतैर्हविर्भिरभिषज्यꣳस्तस्मादिति ॥ ४ ॥

एकविꣳशश्चाहुस्तृतीयसवने प्रातःसवनं पञ्च च ॥ अनु० ११ ॥

द्वादशोऽनुवाकः ।

तस्यावाचोऽवपादादबिभयुः। तमेतेषु सप्तसु छन्दःस्वश्रयन्। यदश्रयन्। तच्छ्रायन्तीयस्य श्रायन्तीयत्वं। यदवारयन्। तद्वारवन्तीयस्य वारवन्तीयत्वं। तस्या वाचएवावपादादबिभयुः। तस्माएतानि सप्तचतुरुत्तराणि छन्दाꣳस्युपादधुः। तेषामतिचीर्ण्यर्यरिच्यन्त। न चीर्ण्युदभवन् ॥ १ ॥

स बृहतीमेवास्पृशत्। द्वाभ्यामक्षराभ्यां। अहोराचाभ्यामेव। तदाहुः। कतमा सा देवाक्षरा बृहती। यस्यां तत्प्रत्यतिष्ठत्। द्वादश पौर्णमास्यः। द्वादशाष्टकाः। द्वादशामावास्याः। एषा वाव सा देवाक्षरा बृहती ॥ २ ॥

यस्यां तत्प्रत्यतिष्ठदिति। यानि च छन्दाꣳस्यत्यरिच्यन्त। यानि च नोदभवन्। तानि निर्वीर्य्याणि हीनान्यमन्यन्त। साब्रवीद्बृहती। मामेव भूत्वा। मा-

मुपसꣳश्रयतेति। चतुर्भिरक्षरैरनुष्टुग्बृहतीन्नोदभवत्। चतुर्भिरक्षरैः पङ्क्तिर्बृहतीमत्यरिच्यत। तस्यामेतानि चत्वार्य्यक्षराण्यपच्छिद्यादधात् ॥ ३ ॥

ते बृहतीएव भूत्वा। बृहतीमुपसमश्रयतां। अष्टाभिरक्षरैरुष्णिग्बृहतीन्नोदभवत्। अष्टाभिरक्षरैस्त्रिष्टुग्बृहतीमत्यरिच्यत। तस्यामेतान्यष्टावक्षराण्यपच्छिद्यादधात्। ते बृहतीएव भूत्वा। बृहतीमुपसमश्रयतां। द्वादशभिरक्षरैर्गायत्री बृहतीन्नोदभवत्। द्वादशभिरक्षरैर्जगती बृहतीमत्यरिच्यत। तस्यामेतानि द्वादशाक्षराण्यपच्छिद्यादधात् ॥ ४ ॥

ते बृहतीएव भूत्वा। बृहतीमुपसमश्रयतां। सोऽब्रवीत् प्रजापतिः। छन्दाꣳसि रथो मे भवत। युष्माभिरहमेतमध्वानमनुसञ्चराणीति। तस्य गायत्री च जगती च पक्षावभवतां। उष्णिक्च त्रिष्टुप्च प्रत्यौ। अनुष्टुप्च पङ्क्तिश्च धुर्य्यौ। बृहत्येवोद्धिरभवत्। सएतं छन्दोरथमास्थाय॥ एतमध्वानमनुसमचरत्। एतꣳ ह्वै छन्दोरथमास्थाय। एतमध्वानमनुसञ्चरति। येनैषएतत्सञ्चरति। यएवं विद्वान्त्सोमेन यजते। यउचैनमेवं वेद ॥ ५ ॥

अभवन्वाव सा देवाक्षरा बृहत्यदधाद्द्वादशाक्षरा-ण्यपच्छिद्यादधादास्थाय षट् च ॥ अनु० १२ ॥

अग्नेः कृत्तिका यत्पुण्यं देवस्य सवितुर्ब्रह्मवादिनः कत्यृतमेव देवावाआयुपइन्द्रोदधीचोदेवासुराः स प्रजापतिः स समुद्रोये वै चत्वारस्तस्यावाचोद्वादश॥ अग्नेः कृत्तिका देवगृहा वाऋतमेवर्ध्यामेव तिस्रः परा-चीर्यै वै चत्वारोनवपञ्चाशत् ॥ हरिः ओम् ॥

इति पञ्चमोऽध्यायः ॥

---

हरिः ॐ ।

प्रथमाष्टके षष्ठाध्याये

प्रथमोऽनुवाकः ।

अनुमत्यै पुरोडाशमष्टाकपालं निर्वपति। ये प्रत्य-ञ्चः शम्यायाअवशीयन्ते । तन्नैर्ऋतमेककपालं। इयं वाअनुमतिः।इयं निर्ऋतिः। नैर्ऋतेन पूर्व्वेण प्रचरति। पाप्मानमेव निर्ऋतिं पूर्व्वान्निरवदयते। एककपालो भवति। एकधैव निर्ऋतिं निरवदयते। यदहुत्वा गा-र्हपत्यईयुः ॥ १ ॥

रुद्रोभूत्वाग्निरनूत्थाय। अध्वर्य्युञ्च यजमानञ्च ह-न्यात्। वीहि स्वाहाहुतिं जुषाणइत्याह। आहुत्यैवै-नꣳ शमयति। नार्त्तिमार्च्छत्यध्वर्य्युर्न यजमानः। एको-ल्मुके नयन्ति। तद्धि निर्ऋत्यै भागधेयं। इमां दिशं नयति। एषा वै निर्ऋत्यै दिक्। स्वायामेव दिशि निर्ऋतिं निरवदयते ॥ २ ॥

स्वकृतइरिणे जुहोति प्रदरे वा। एतद्वै निर्ऋत्याआ-यतनं। स्वएवायतने निर्ऋतिं निरवदयते। एष ते नि-र्ऋते भागइत्याह। निर्दिशत्येवैनां। भूते ह विष्मत्यसी-त्याह। भूतिमेवोपावर्त्तते। मुञ्चेममꣳहसइत्याह। अꣳ-हसएवैनं मुञ्चति। अङ्गुष्ठाभ्यां जुहोति ॥ ३ ॥

अन्ततएव निर्ऋतिं निरवदयते। कृष्णं वासः कृष्ण-तूषं दक्षिणा। एतद्वै निर्ऋत्यै रूपं। रूपेणैव निर्ऋतिं निरवदयते। अप्रतीक्षमायन्ति। निर्ऋत्याअन्तर्हित्यै। स्वाहा नमोयइदं चकारेति पुनरेत्य गार्हपत्ये जुहोति। आहुत्यैव नमस्यन्तोगार्हपत्यमुपावर्त्तन्ते। आनुमतेन प्रचरति। इयं वाअनुमतिः ॥ ४ ॥

इयमेवास्मै राज्यमनुमन्यते। धेनुर्दक्षिणा। इमा-मेव धेनुं कुरुते। आदित्यं चरुन्निर्वपति। उभयीष्वेव

प्रजास्वभिषिच्यते। दैवीषु च मानुषीषु च। वरोदक्षिणा। वरोहि राज्यꣳ समृद्ध्यै। आग्नावैष्णवमेकादशकपालं निर्वपति। अग्निः सर्व्वादेवताः ॥ ५ ॥

विष्णुर्यज्ञः। देवताश्चैव यज्ञञ्चावरुन्धे। वामनो वही दक्षिणा। यद्वही। तेनाग्नेयः। यद्वामनः। तेन वैष्णवः समृद्ध्यै। अग्नीषोमीयमेकादशकपालं निर्वपति। अग्नीषोमाभ्यां वाइन्द्रोवृत्रमहन्निति। यदग्नीषोमीयमेकादशकपालं निर्वपति ॥ ६ ॥

वार्त्रघ्नमेव विजित्यै। हिरण्यं दक्षिणासमृद्ध्यै। इन्द्रो वृत्रꣳहत्वा। देवताभिश्चेन्द्रियेण च व्यार्ध्यत। सएतमैन्द्राग्नमेकादशकपालमपश्यत्। तं निरवपत्। तेन वै स देवताश्चेन्द्रियञ्चावारुन्धे। यदैन्द्राग्नमेकादशकपालं निर्वपति। देवताश्चैव तेनेन्द्रियञ्च यजमानोऽवरुन्धे। ऋषभोवही दक्षिणा ॥ ७ ॥

यद्वही। तेनाग्नेयः। यदृषभः। तेनैन्द्रः समृद्ध्यै। आग्नेयमष्टाकपालं निर्वपति। ऐन्द्रं दधि। यदाग्नेयोभवति। अग्निर्वै यज्ञमुखं। यज्ञमुखमेवर्धिं परस्ताद्धत्ते। यदैन्द्रं दधि ॥ ८ ॥

इन्द्रियमेवावरुन्धे। ऋषभोवही दक्षिणा। यद्वही।

तेनाग्नेयः। यद्दपभः। तेनैन्द्रः समृध्यै। यावतीर्वै प्रजा ओषधीनामहुतानामाश्नन्। ताः पराभवन्। आग्रयणं भवति हुताद्याय। यजमानस्यापराभावाय॥ ९॥

देवावाओषधीषाजिमयुः। ताइन्द्राग्नीउदजयतां। तावेतमैन्द्राग्नं द्वादशकपालं निरवपतां। यदैन्द्राग्नो भवत्युज्जित्यै। द्वादशकपालोभवति। द्वादशमासाः संवत्सरः। संवत्सरेणैवास्माअन्नमवरुन्धे। वैश्वदेवश्चरुर्भवति। वैश्वदेवं वाअन्नं। अन्नमेवास्मै स्वदयति॥ १०॥

प्रथमजोवत्सोदक्षिणा समृध्यै। सौम्यं श्यामाकं चरुं निर्वपति। सोमोवाअकृष्टपचस्य राजा। अकृष्टपच्यमेवास्मै स्वदयति। वासोदक्षिणा। सौम्यं हि देवतया वासः समृध्यै। सरस्वत्यै चरुं निर्वपति। सरस्वते चरुं। मिथुनमेवावरुन्धे। मिथुनौ गावौ दक्षिणा समृध्यै॥ एति वाएष यज्ञमुखादृध्याः। योऽग्नेर्देवतायाएति। अष्टावेतानि हवींषि भवन्ति। अष्टाक्षरा गायत्री। गायत्रोऽग्निः। तेनैव यज्ञमुखादृध्याअग्नेर्देवतायैनैति॥ ११॥

ईयुर्निरवदयतेऽङ्गुष्ठाभ्यां जुहोत्यनुमतिर्देवता निर्व-

पति वह्नी दक्षिणा यदैन्द्रं दध्यपराभावाय स्वदयति गावौ दक्षिणा समृध्यै षट् च ॥ अनु० १ ॥

द्वितीयोऽनुवाकः ।

वैश्वदेवेन वै प्रजापतिः प्रजा असृजत। ताः सृष्टा न प्राजायन्त। सोऽग्निरकामयत। अहमिमाः प्रजनयेयमिति। स प्रजापतये शुचमदधात्। सोऽशोचत् प्रजामिच्छमानः। तस्माद्यञ्च प्रजा भुनक्ति यञ्च न। तावुभौ शोचतः प्रजामिच्छमानौ। तास्वग्निमप्यसृजत्। ता अग्निरध्यैत् ॥ १ ॥

सोमो रेतोऽदधात्। सविता प्राजनयत्। सरस्वती वाचमदधात्। पूषापोषयत्। ते वा एते त्रिः संवत्सरस्य प्रयुज्यन्ते। ये देवाः पुष्टिपतयः। संवत्सरो वै प्रजापतिः। संवत्सरेणैवास्मै प्रजाः प्राजनयत्। ताः प्रजा जाता मरुतोऽघ्नन्। अस्मानपि न प्रायुक्षतेति ॥ २ ॥

स एतं प्रजापतिर्मारुतः सप्तकपालमपश्यत्। तं निरवपत्। ततो वै प्रजाभ्योऽकल्पत। यन्मारुतो निरूप्यते। यज्ञस्य क्लृप्त्यै। प्रजानामघाताय। सप्तकपालो भवति। सप्त गणा वै मरुतः। गणश एवास्मै विशं कल्पयति। स प्रजापतिरशोचत् ॥ ३ ॥

परो मात्रया तनुवा वृधान । न ते महित्वमन्वश्नुवन्ति । उभे ते विद्मरजसी पृथिव्या विष्णो देव त्वं । परमस्य वित्से ॥ २ ॥

विचक्रमे त्रिर्देवः । आ ते महो यो जातएव । अभिगोत्राणि । अभिस्पृधो मिथतीररिषण्यन् । अमित्रस्य व्यथया मन्युमिन्द्र । आभिर्विश्वा अभियुजो विषूचीः । आर्याय विशोवतारीर्दासीः । अयं शृण्वेअधजयन्नुतघ्नन् । अयमुत प्रकृणुते युधागाः । यदा सत्यं कृणुते मन्युमिन्द्रः ॥ ३ ॥

विश्वं दृढं भयत एजदस्मात् । अनु स्वधामक्षरं नापोअस्य । अवर्द्धत मध्यआना व्यानां । सध्रीचीनेन मनसा तमिन्द्र ओजिष्ठेन । हन्मनाहं नभिद्यून् । मरुत्वन्तं वृषभं वावृधानं । अकवारिं दिव्यं शासमिन्द्रं । विश्वासाहमवसे नूतनाय । उग्रं सहोदामिह तं हुवेम । जनिष्ठा उग्रः सहसे तुराय ॥ ४ ॥

मन्द्रओजिष्ठो बहुलाभिमानः । अवर्द्धन्निन्द्रं मरुतश्चिदत्र । माता यद्वीरं दधनद्धनिष्ठा । क्व स्यावो मरुतः स्वधासीत् । यन्मामेकं समधत्ता हि हत्ये । अहं ह्युग्रस्तविषस्तु विष्मान् । विश्वस्य शत्रोरनमं वधस्नैः ।

वृत्रस्य त्वाश्वसथा दीषमाणाः। विश्वे देवा अजहुर्ये स-
खायः। मरुद्भिरिन्द्र सख्यं ते अस्तु ॥ ५ ॥

अथेमा विश्वाः पृतना जयासि। वर्धी वृत्रं मरुत-
इन्द्रियेण। स्वेन भामेन तविषो बभूवान्। अहमेता-
मनवे विश्वश्चन्द्राः। सुगा अपश्चकर् वज्रबाहुः। स यो
वृषा वृष्णियेभिः समोकाः। महो दिवः पृथिव्याश्च
सम्राट्। सतो न सत्त्वा हव्यो भरेषु। मरुत्वान्नो भव-
त्विन्द्र ऊती। इन्द्रो वृत्रमतरद्वृत्रतूर्य्ये ॥ ६ ॥

अनाधृष्यो मघवा शूर इन्द्रः। अन्वेनं विशो अमदन्त
पूर्वीः। अयꣳ राजा जगतश्चर्षणीनां। सएव वीरः स
उ वीर्य्यावान्। सएकराजो जगतः परस्याः। यदा वृत्र-
मतरच्छूर इन्द्रः। अथाभवद्दमिताभिक्रतूनां। इन्द्रो
यज्ञं वर्द्धयन् विश्ववेदाः। पुरोडाशस्य जुषताꣳ हविर्नः।
वृत्रं तीर्त्वा दानवं वज्रबाहुः ॥ ७ ॥

दिशो हꣳहदृꣳहिता दृꣳहणेन। इमं यज्ञं वर्द्धयन्
विश्ववेदाः। पुरोडाशं प्रतिगृभ्णात्विन्द्रः। यदा वृत्रम-
तरच्छूर इन्द्रः। अथैकराजो अभवज्जनानां। इन्द्रो
देवाञ्छम्बरहत्य आवत्। इन्द्रो देवानामभवत् पुरो-
गाः। इन्द्रो यज्ञे हविषा वावृधानः। वृत्रतूर्णो अभ-

यꣳ शर्म्म यꣳ सत्। यः सप्त सिन्धूꣳ रदधात् पृथिव्यां॥ यः सप्त लोकानकृणोद्दिशश्च। इन्द्रो हविष्मान्त्सगणो मरुद्भिः। वृत्रतूर्णो यज्ञमिहोपयासत्॥ ८॥

ववर्थ वित्सइन्द्रस्तु रायास्तु वृत्रतूर्यं वज्रबाहुः पृथिव्यां त्रीणि च॥ अनु० ३॥

चतुर्थोऽनुवाकः।

इन्द्रस्तरस्वानभिमातिहोग्रः। हिरण्यवाशीरिषिरः सुवर्षाः। तस्य वयꣳ सुमतौ यज्ञियस्य। अपि भद्रेऽसौ मनसे स्याम। हिरण्यवर्णो अभयं कृणोतु। अभिमातिहेन्द्रः पृतनासु जिष्णुः। स नः शर्म्म त्रिवरूथं वियꣳ सत्। यूयं पातस्वस्तिभिः सदानः। इन्द्रꣳस्तुहि वज्रिणꣳ स्तोमपृष्ठं। पुरोडाशस्य जुषताꣳ हविर्नः॥ ॥ १॥

हत्वाभिमातीः पृतनाः सहस्वान्। अथाभयं कृणुहि विश्वतो नः। स्तुहि शूरं वज्रिणमप्रतीत्तं। अभिमातिहनं पुरुहूतमिन्द्रं। यएकइच्छतपतिर्जनेषु। तस्मा इन्द्राय हविराजुहोत। इन्द्रो देवानामधिपाः पुरोहितः। दिशां पतिरभवद्वाजिनीवान्। अभिमातिहा-

तविपः स्तुविष्मान्। अस्मभ्यं चित्रं वृषणं रयिं दात् ॥ २ ॥

यद्रमे द्यावापृथिवी महित्वा। बलेनाहंहदभिमातिहेन्द्रः। स नो हविः प्रतिग्रभ्णातु रातये। देवानां देवो निधिपा नो अव्यात्। अनवस्ते रथं वृष्णे यत्ते। इन्द्रस्य नु वीर्याण्यहन्नहिं। इन्द्रो यातोवसि तस्य राजा। शमस्य च शृङ्गिणो वज्रबाहुः। सेदुराजाक्षेति चर्षणीनां। अरान्न नेमिः परिता बभूव ॥ ३ ॥

अभिसिध्मो अजिगादस्य शत्रून्। वितिग्मेन वृषभेणापुरोभेत्। सं वज्रेणासृजदृत्रमिन्द्रः। प्र स्वां पति*-मतिरच्छाशदानः। विष्णुं देवं वरुणमूतये भगं। मेदसा देवा वपया यजध्वं। तानो यज्ञमागतं विश्वधेना। प्रजावदस्मे द्रविणे ह धत्तं। मेदसा देवा वपया यजध्वं। विष्णुञ्च देवं वरुणञ्च रातिं ॥ ४ ॥

तानो अमीवा अपबाधमानौ। इमं यज्ञं जुषमाणावुपेतं। विष्णू वरुणायुवमध्वराय नः। विशे जनाय महि शर्म्म यच्छतं। दीर्घप्रयज्यू हविषा वृधाना। ज्योतिषा रातीर्दहतं तमांसि। ययोरोजसा स्कभिता र-

* मतिमिति B. C. D. E. पुस्तकेषु पाठः।

जाꣳसि। वीर्य्येभिर्वीरतमा शचिष्ठा। या पत्येते अप्रतीत्ता सहोभिः। विष्णू अगन्वरुणा पूर्व्वहूतौ॥ ५॥

विष्णू वरुणावभिशस्तिपावा। देवा यजन्त हविषा घृतेन। आपामीवाꣳ सेधतꣳ रक्षसश्च। अथाधत्तं यजमानाय शंयोः। अꣳहोमुचा वृषभा सुप्रतूर्ती। देवानां देवतमा शचिष्ठा। विष्णू वरुणा प्रतिहर्य्यतन्नः। इदं नरा प्रयतमूतये हविः। मही नु द्यावापृथिवी इह ज्येष्ठे। रुचा भवताꣳ शुचयद्भिरर्कैः॥ ६॥

यत्सीं वरिष्ठे बृहती विमिन्वन्। नृवद्ध्योक्षा पप्रथानेभिरेवैः। प्रपूर्वजे पितरा नव्यसीभिः। गीर्भिः कृणुध्वꣳ सदने ऋतस्य। आनो द्यावापृथिवी दैव्येन। जनेन यातमहि वां वरूथं। स इत्स्वपा भुवनेष्वास। य इमे द्यावापृथिवी जजान। उर्वी गभीरे रजसी सुमेके। अवꣳशे धीरः शच्या समैरत्॥ ७॥

भूरिं द्वे अचरन्ती चरन्तं। पद्वन्तं गर्भमपदी दधाते। नित्यन्न सूनुं पित्रोरुपस्थे। तं पिपृतꣳ रोदसी सत्यवाचं। इदं द्यावापृथिवी सत्यमस्तु। पितर्मातर्यदिहोपब्रुवे वां। भूतं देवानामवमे अवोभिः। विद्यामेषं वृजनं जीरदानुं। ऊर्वी पृथ्वी बहुले दूरेअन्ते। उप-

ह्वुवे नमसा यज्ञेअस्मिन्॥ दधाते ये सुभगेसु प्रतूर्तौ।
द्यावा रक्षतं पृथिवी नो अम्वात्। याजाता श्रोपधयो-
ऽतिविश्वाः परिष्ठाः। या ओपधयः सोमराज्ञीरश्वाव-
तीᳪ सोमवतीं। ओपधीरिति मातरोऽन्यावोअन्या-
मवतु ॥ ८ ॥

हविर्नोदाद्दभूव रातिं पूर्व्वह्लतावकरैरदस्मिन् पञ्च
च ॥ अनु० ४ ॥

पञ्चमोऽनुवाकः।

शुचिन्नु स्तोमᳪ अथदृचं। उभा वामिन्द्राग्नी प्रचर्प-
णिभ्यः। आहचहणा गीर्भिर्विप्रैः। ब्रह्मणस्पते त्वम-
स्य यन्ता। सूक्तस्य बोधितनयञ्च जिन्व। विश्वं तद्भद्रं
यदवन्ति देवाः। बृहद्ददेम विदथे सुवीराः। सईᳪ
सत्येभिः सखिभिः शुचद्भिः। गोधाय संविधनसैरत-
र्दत्। ब्रह्मणस्पतिर्ह्रपभिर्वराहैः ॥ १ ॥

घर्म्मस्वेदेभिर्द्रविणं व्यानट्। ब्रह्मणस्पतेरभवद्यथा
वशं। सत्यो मन्युर्महि कर्म्मा करिष्यतः। योग उदाजत्
सद्दिवेविचाभजत्। महीवरीतिः शवसासरत् पृथक्।
इन्धानोअग्निं वनवद्दनुष्यतः। कृतब्रह्माशू शुवद्रात-

हव्यदूत्। जातेन जातमतिस्रत्प्रसृꣳसते। यं यं युजं कृणुते ब्रह्मणस्पतिः। ब्रह्मणस्पते सुयमस्य विश्वहा॥ ॥ २ ॥

रायः स्याम रथ्यो विवस्वतः। वीरेषु वीराꣳ उपपृङ्ग्धि नस्त्वं। यदीशानो ब्रह्मणा वेषि मे हवं। सइज्जनेन सविशा सजन्मना। सपुत्रैर्वाजम्भरते धना नृभिः। देवानां यः पितरमाविवासति। श्रद्धामना हविषा ब्रह्मणस्पतिं। यास्ते पूषन्नावो अन्तः। शुक्रं ते अन्यसूपे माआशाः। प्रपथे पथामजनिष्ट पूषा॥ ३ ॥

प्रपथे दिवः प्रपथे पृथिव्याः। उभे अभिप्रियतम सधस्थे। आच पराच चरति प्रजानन्। पूषा सुबन्धुर्दिव आ पृथिव्याः। इडस्पतिर्मघवादस्म वर्चाः। तं देवासो अददुः सूर्यायै। कामेन कृतं तव सꣳस्वञ्चं। अजाश्वः पशुपावाजबस्त्यः। धियं जिन्वो विश्वे भुवने अर्पितः। अष्ट्रां पूषा शिथिरामुद्वरीवृजत्॥ ४ ॥

सञ्चक्षाणो भुवना देवईयते। शुचीवो हव्या मरुतः शुचीनां। शुचिꣳ हिनोम्यध्वरꣳ शुचिभ्यः। ऋतेन सत्यमृतसाप आयन्। शुचिजन्मानः शुचयः पावकाः। प्रचित्रमर्कं गृणते तुराय। मारुताय स्वतवसे भरध्वं।

ये सहांꣳसि सहसा सहन्ते। रेजते अग्ने पृथिवी मखेभ्यः। अꣳसेष्वा मरुतः खादयो वः ॥ ५ ॥

वक्षःसु रुक्मा उपशिश्रियाणाः। विविद्युतो न वृष्टिभी रुचानाः। अनु स्वधामायुधैर्यच्छमानाः। या वः शर्म शशमानाय सन्ति। त्रिधातूनि दाशुषे यच्छताधि। अस्मभ्यं तानि मरुतो वियन्त। रयिं नो धत्त वृषणः सुवीरं। इमे तुरं मरुतो रामयन्ति। इमे सहः सहस आनमन्ति। इमे शꣳसं वनुष्यतो नियान्ति ॥ ६ ॥

गुरुद्वेषो अररुषे दधन्ति। अरा इवेदचरमा अहेव। प्र प्रजायन्ते अकवा महोभिः। पृश्नेः पुत्रा उपमासो रभिष्ठाः। स्वया मत्या मरुतः संमिमिक्षुः। अनु ते दायि मह इन्द्रियाय। सत्रा ते विश्वमनु वृत्रहत्ये। अनु क्षत्रमनु सहो यजत्र। इन्द्र देवेभिरनु ते नृषह्ये। य इन्द्र शुष्मो मघवन्तो अस्ति ॥ ७ ॥

शिक्षा सखिभ्यः पुरुहूत नृभ्यः। त्वꣳ हि दृढा मघवन् विचेताः। अपावृधि परिवृत्तिन्नराधः। इन्द्रो राजा जगतश्चर्षणीनां। अधिक्षमि विषुरूपं यदस्ति। ततो ददातु दाशुषे वसूनि। चोदद्राध उपस्तुतश्चिदर्वाक्। तमु ष्टुहि यो अभिभूत्योजाः। वन्वन्नवातः पुरु-

हूतइन्द्रः। आषाढमुग्रꣳ सहमानमाभिः॥ गीर्भिर्वर्द्ध वृषभं चर्षणीनां। स्थूरस्य रायो बृहतो यईशे। तमु-ष्टवाम विदथेष्विन्द्रं। यो वायुना जयति गोमतीषु। प्रधृष्णुया नयति वस्योअच्छ। आते शुष्मो वृषभएतु पश्चात्। ओत्तरा दधरागा पुरस्तात्। आ विश्वतो अभिसमेत्वर्वाङ्। इन्द्र द्युम्नꣳ सुवर्वद्धे ह्यस्मे॥ ८॥

वराहैर्विश्वहाजनिष्ट पूषोदरीवृजत् खादयोवः पा-न्त्यस्त्याभिर्नव च॥ अनु० ५॥

षष्ठाऽनुवाकः।

आ देवो यातु सविता सुरत्नः। अन्तरिक्षप्रावहमा-नोअश्वैः। हस्ते दधानो नर्या पुरूणि। निवेशयञ्च प्रसुवञ्च भूम। अभीवृतं कृशनैर्विश्वरूपं। हिरण्यशम्यं यजतो बृहन्तं। आस्थाद्रथꣳ सविता चित्रभानुः। कृ-ष्णारजाꣳसि तविषीं दधानः। सद्यानो देवः सविता सवाय। आसा विषद्वसुपतिर्वसूनि॥ १॥

विश्रयमाणोअमतिमुरूचीं। मर्त्तभोजनमधरास तेन। विजनाञ्छ्यावाः शितिपादो अख्यन्। रथꣳ हि-रण्य प्रउगं वहन्तः। शश्वद्विशः सवितुर्दव्यस्य। उपस्थे

विश्वा भुवनानि तस्थुः। विसुपर्णो अन्तरिक्षाण्यख्यत्। गभीरवेपा असुरः सुनीथः। क्वेदानीं॑ सूर्य्यः कश्चिकेत। कतमां द्यां॑ रश्मिरस्या ततान॥ २॥

भगं धियं वाजयन्तः पुरन्धिं। नराशं॑सोऽग्नास्पतिर्नोऽअव्यात्। आयेवामस्य सङ्गथे रयीणां। प्रिया देवस्य सवितुः स्याम। आनो विश्वेअस्क्रागमन्तु देवाः। मित्रोऽअर्य्यमा वरुणः सजोषाः। भुवन् यथा नो विश्वे वृधासः। करन्त्सुषाहा विथुरन्नशवः। शन्नोदेवा विश्वदेवा भवन्तु। शं॑ सरस्वती सह धीभिरस्तु॥ ३॥

शमभिषाचः शमुरातिषाचः। शन्नो दिव्याः पार्थिवाः शन्नोअप्याः। ये सवितुः सत्यसवस्य विश्वे। मित्रस्य व्रते वरुणस्य देवाः। तेऽसौ भगं वीरवन्नोमदघ्नः। दधातन द्रविणं चित्रमस्मे। अग्ने पाहि दृत्यं वारिषेण्यः। देवां॑ अच्छा ब्रह्म कृतागणेन। सरस्वतीं मरुतोअश्विनापः। यक्षि देयान् रत्नधेयाय विश्वान्॥ ॥ ४॥

द्यौः पितः पृथिवि मातरध्रुक्। अग्ने भ्रातर्वसवो मृडतानः। विश्वआदित्या अदिते सजोषाः। अस्मभ्य॑ शर्म्म बहुलं वियन्त। विश्वे देवाः शृणुतेम॑ हवं मे।

येअन्तरिक्षे यउपद्यविष्ठ। येअग्निजिह्वा उतवा यजत्राः। आसद्यास्मिन् बर्हिषि मादयध्वं। आवां मित्रावरुणा हव्यजुष्टिं। नमसा देवा ववसावदृत्यां ॥ ५ ॥

अस्माकं ब्रह्म पृतनासु सह्या। अस्माकं वृष्टिर्दिव्यासु पारा। युवं वस्त्राणि पीवसा वसाथे। युवोरच्छिद्रामन्तवो ह सर्गाः। अवातिरतमनृतानि विश्वा। ऋतेन मित्रावरुणा सचेथे। तत्सुवां मित्रावरुणा महित्वं। ईर्मातस्थुषीरहभिर्दुदुह्रे। विश्वाः पिन्वथ स्वसरस्य धेनाः। अनुवामेकः पविराववर्त्ति ॥ ६ ॥

यद्वꣳहिष्ठं नातिविदे सुदानू। अच्छिद्रꣳ शर्म्म भुवनस्य गोपा। तेनो नो मित्रावरुणाववीष्टं। सिषासन्तो जीगिवाꣳसः स्याम। आनो मित्रावरुणा हव्यदातिं। घृतैर्गव्यूतिमुक्षतमिडाभिः। प्रतिवामत्र वरमाजनाय। पृणीतमुद्नो दिव्यस्य चारोः। प्रबाहवा सिसृतं जीवसे नः। आनो गव्यूतिमुक्षतं घृतेन ॥ ७ ॥

आनोजने श्रवयतं युवाना। श्रुतं मे मित्रावरुणा हवेमा। इमा रुद्राय स्थिरधन्वने गिरः। क्षिप्रेषवे देवाय स्वधाम्ने। अषाढाय सहमानाय मीढुषे। तिग्मायुधाय भरता शृणोतन। त्वा दत्तेभीरुद्र शन्तमे-

भिः। शतꣳ हि माअशीय भेषजेभिः। व्यस्मद्द्वेषो वितरं व्यꣳहः। व्यमीवाꣳश्चातयस्वा विषूचीः ॥ ८ ॥

अर्हन् बिभर्षि मा नस्तोके। आते पितर्मरुताꣳ सुम्नमेतु। मा नः सूर्य्यस्य सन्दृशो युयोथाः। अभिनो वीरो अर्व्वति क्षमेत। प्रजायेमहि रुद्र प्रजाभिः। एवाबभ्रो वृषभ चेकितान। यथा देव न हृणीषे न हꣳसि। हावनश्रूर्नो रुद्रेह बोधि। बृहद्वदेम विदथे सुवीराः। परिणो रुद्रस्य हेति स्तुहि श्रुतं॥ मीढुष्टमार्हन् बिभर्षि। त्वमग्ने रुद्र आवो राजानं ॥ ९ ॥

वसूनि तताना स्तु विश्वान्वृत्यां ववर्त्ति घृतेन विषूचीः श्रुतं द्वे च ॥ अनु० ६ ॥

सप्तमोऽनुवाकः।

सूर्य्यो देवीमुषसꣳ रोचमानामर्य्यः। न योषामभ्येति पश्चात्। यत्रानरो देवयन्तो युगानि। वितन्वते प्रतिभद्राय भद्रं। भद्रा अश्वा हरितः सूर्य्यस्य। चित्रा एदग्वा अनुमाद्यासः। नमस्यन्तो दिव आपृष्ठमस्थुः। परि द्यावापृथिवी यन्ति* सद्यः। तत्सूर्य्यस्य देवत्वं तन्महित्वं। मध्याकर्त्तोर्विततꣳ सञ्जभार ॥ १ ॥

* सन्तीति (?) पुस्तकपाठः।

यदेदयुक्त हरितः सधस्थात् । आद्रात्री वासस्तनुते सिमस्मै । तन्मित्रस्य वरुणस्याभिचक्षे । सूर्य्यो रूपं कृणुते द्योरुपस्थे । अनन्तमन्यद्रुशदस्य* पाजः । कृष्णमन्यद्धरितः सम्भरन्ति । अद्या देवा उदिता सूर्य्यस्य । निरꣳहसः पिपृतान्निरवद्यात् । तन्नो मित्रो वरुणो मामहन्ताम् । अदितिः सिन्धुः पृथिवी उत द्यौः ॥ २ ॥

दिवो रुक्म उरुचक्षा उदेति । दूरेअर्थस्तरणिर्भ्राजमानः । नूनं जनाः सूर्य्येण प्रसूताः । आयन्नर्थानि कृणवन्नपाꣳसि । शन्नो भव चक्षसा शन्नो अह्ना । शं भानुना शꣳहिमा शं घृणेन । यथा शमस्मै शमसद्दुरोणे । तत्सूर्य्य द्रविणं धेहि चित्रं । चित्रं देवानामुदगादनीकं । चक्षुर्मित्रस्य वरुणस्याग्नेः ॥ ३ ॥

आप्रा द्यावापृथिवी अन्तरिक्षं । सूर्य्य आत्मा जगतस्तस्थुषश्च । त्वष्टा दधत्तन्नस्तुरीयं । त्वष्टा वीरं पिशङ्गरूपः । दशेमं त्वष्टुर्जनयन्त गर्भं । अतन्द्रासो युवतयो बिभर्त्रं । तिग्मानीकꣳ स्वयशसं जनेषु । विरोचमानं परिषीन्नयन्ति । आ विष्ट्यो वर्द्धते चारुरासु । जिह्मानामूर्द्ध्वः स्वयशा उपस्थे ॥ ४ ॥

---

* रुशदस्येति B. C. D. पुस्तकपाठः ।

उभे त्वष्टुर्बिभ्यतुर्जायमानात्। प्रतीची सिꣳहं प्रति-जोषयेते। मित्रो जनान् प्रसमित्र। अयं मित्रो नमस्यः सुशेवः। राजा सुक्षत्रो अजनिष्ट वेधाः। तस्य वयꣳ सुमतौ यज्ञियस्य। अपि भद्रेऽसौ मनसे स्याम। अनमीवास इडया मदन्तः। मितज्ञवो वरिवन्ना* पृथिव्याः। आदित्यस्य व्रतमुपक्ष्यन्तः ॥ ५ ॥

वयं मित्रस्य सुमतौ स्याम। मित्रं नईꣳशिम्या गोषु गव्यवत्। स्वाधियो विदथेअप्स्वजीजनन्। अरेजयताꣳ रोदसी पाजसा गिरा। प्रतिप्रियं यजतं जनुषामवः। महाꣳ आदित्यो नमसोपसद्यः। यातयज्जनो गृणते सुशेवः। तस्माएतत्पन्यतमा यजुष्टं। अग्नौ मित्राय हविराजुहोत। आवाꣳ रथो रोदसीवद्बधानः† ॥
॥ ६ ॥

हिरण्ययो वृषभिर्यात्वश्वैः। घृतवर्त्तनिः पविभीरुचानः। इषां वोढा नृपतिर्वाजिनीवान्। सपप्रथानो अभिपञ्च भूम। त्रिबन्धुरो मनसा यातु युक्तः। विशोयेन गच्छथो देवयन्तीः। कुत्राचिद्यामममश्विना दधाना। स्वश्वा यशसा यातमर्वाक्। दस्रानिधिं मधु-

---

* वारमन्नेति B. C. पुस्तकपाठः। † वद्बधान इति B.C. D. पुस्तकपाठः।

मन्तं पिबाथः । विवाꣳ रथौ बध्वायादमानः ॥ ७ ॥

अन्तान्दिवो बाधते वर्त्तनिर्भ्यां । युवोः श्रियं परियोषा वृणीत । सूरो दुहिता परितक्मियायां । यद्देवयन्तमवथः शचीभिः । परिघ्रꣳ सवां मनावां वयोगां । यो हस्यवाꣳ रथिरावस्तउस्राः । रथो युजानः परियाति वर्त्तिः । तेन नः शंयोरुषसोव्युष्टौ । न्यश्विना वहतं यज्ञे अस्मिन् । युवं भुज्युमवविद्धꣳ समुद्रे ॥ ८ ॥

उदूहथुरर्णसो अस्रिधानैः । पतत्रिभिरश्रमैरव्यथिभिः । दꣳसनाभिरश्विना पारयन्तां । अग्नीषोमा योअद्य वां । इदं वचः सपर्य्यति । तस्मै धत्तꣳ सुवीर्य्यं । गवां पोषꣳ स्वश्वियं । योअग्नीषोमा हविषा सपर्य्यात् । देवद्रीचा मनसा यो घृतेन । तस्य व्रतꣳ रक्षतं पातमꣳहसः ॥ ९ ॥

विशे जनाय महि शर्म्म यच्छतं । अग्नीषोमाय आहुतिं । यो वां दशाद्धविष्कृतिं । सप्रजया सुवीर्य्यं । विश्वमायुर्व्यश्नवत् । अग्नीषोमा चेति तद्वीर्य्यं वां । यदमुष्णीतमवसं पणिं गोः । अवातिरतं प्रथयस्य शेषः । अविन्दतं ज्योतिरेकं बहुभ्यः । अग्नीषोमाविमꣳसुमेऽग्नीषोमा हविषः प्रस्थितस्य ॥ १० ॥

जभार द्यौरग्नेरुपस्थ उपक्षयन्तो वद्धधानो यादमानः समुद्रेऽह्न्सः प्रस्थितस्य ॥ अनु० ७ ॥

अष्टमोऽनुवाकः ।

अहमस्मि प्रथमजाऋतस्य । पूर्वं देवेभ्योअमृतस्य नाभिः । यो मा ददाति सइदेवमावाः । अहमन्नमन्नमदन्तमद्मि । पूर्व्वमग्नेरपि दहत्यन्नं । यत्तौ हासाते अहमुत्तरेषु । व्यात्तमस्य पशवः सुजम्भं । पश्यन्ति धीराः प्रचरन्ति पाकाः । जहाम्यन्यं न जहाम्यन्यं । अहमन्नं वशमिच्चरामि ॥ १ ॥

समानमर्थं पर्य्येमि भुञ्जत् । कोमामन्नं मनुष्योदयेत । पराके अन्नं निहितं लोकएतत् । विश्वैर्द्देवैः पितृभिर्गुप्तमन्नं । यदद्यते लुप्यते यत्परोप्यते । शततमी सा तनूर्मे बभूव । महान्तौ चरू सकृद्दुग्धेन पप्रौ । दिवञ्च पृश्निं पृथिवीञ्च साकं । तत् संपिबन्तो नमिनन्ति वेधसः । नैतद्भूयो भवति नो कनीयः ॥ २ ॥

अन्नं प्राणमन्नमपानमाहुः । अन्नं मृत्युं तमु जीवातुमाहुः । अन्नं ब्रह्माणो जरसं वदन्ति । अन्नमाहुः प्रजननं प्रजानां । मोघमन्नं विन्दते अप्रचेताः । सत्यं

ब्रवीमि वध इत्स तस्य । नार्यमणं पुष्यति नो सखायं । केवलाघो भवति केवलादी । अहं मेघस्तनयन् वर्षन्नस्मि । मामदन्त्यहमद्म्यन्यान् ॥ ३ ॥

अहꣳ सदमृतो भवामि । मदादित्या अधि सर्वे तपन्ति । देवीं वाचमजनयन्त यद्वाग्वदन्ती । अनन्तामन्तादधिनिर्मितां महीं । यस्यां देवा अदधुर्भोजनानि । एकाक्षरा द्विपदाꣳ षट्पदाञ्च । वाचं देवा उपजीवन्ति विश्वे । वाचं देवा उपजीवन्ति विश्वे । वाचं गन्धर्वाः पशवो मनुष्याः । वाचीमा विश्वा भुवनान्यर्पिता ॥ ४ ॥

सा नो हवं जुषतामिन्द्रपत्नी । वागक्षरं प्रथमजा ऋतस्य । वेदानां मातामृतस्य नाभिः । सा नो जुषाणोपयज्ञमागात् । अवन्ती देवी सुहवा मे अस्तु । यामृषयो मन्त्रकृतो मनीषिणः । अन्वैच्छन्देवास्तपसा श्रमेण । तां देवीं वाचꣳ हविषा यजामहे । सा नो दधातु सुकृतस्य लोके । चत्वारि वाक्परिमिता पदानि ॥ ५ ॥

तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहिता नेङ्गयन्ति । तुरीयं वाचो मनुष्या वदन्ति । श्रद्धयाग्निः समिध्यते । श्रद्धया विन्दते हविः । श्रद्धां भगस्य

मूर्द्धनि । वचसा वेदयामसि । प्रियꣳ श्रद्धे ददतः । प्रियꣳ श्रद्धे दिदासतः । प्रियं भोजेषु यज्वसु ॥ ६ ॥

इदं म उदितं कृधि । यथा देवा असुरेषु । श्रद्धामुग्रेषु चक्रिरे । एवं भोजेषु यज्वसु । अस्माकमुदितं कृधि । श्रद्धां देवा यजमानाः । वायुगोपा उपासते । श्रद्धाꣳ हृदय्ययाकूत्या । श्रद्धया हूयते हविः । श्रद्धां प्रातर्हवामहे ॥ ७ ॥

श्रद्धां मध्यन्दिनं परि । श्रद्धाꣳ सूर्य्यस्य निम्रुचि । श्रद्धे श्रद्धापयेह मा । श्रद्धा देवानधिवस्ते । श्रद्धा विश्वमिदं जगत् । श्रद्धां कामस्य मातरं । हविषा वर्द्धयामसि । ब्रह्मजज्ञानं प्रथमं पुरस्तात् । विसीमतः सुरुचो वेन आवः । सबुध्निया उपमा अस्यविष्ठाः ॥ ८ ॥

सतश्च योनिमसतश्च विवः । पिता विराजामृषभो रयीणां । अन्तरिक्षं विश्वरूप आविवेश । तमर्कैरभ्यर्चन्ति वत्सं । ब्रह्मसन्तं ब्रह्मणा वर्द्धयन्तः । ब्रह्मदेवानजनयत् । ब्रह्म विश्वमिदं जगत् । ब्रह्मणः क्षत्रं निर्म्मितं । ब्रह्म ब्राह्मण आत्मना । अन्तरस्मिन्निमे लोकाः ॥ ॥ ६ ॥

अन्तर्विश्वमिदं जगत् । ब्रह्मैव भूतानां ज्येष्ठं । तेन

कोऽर्हति स्पर्द्धितुं। ब्रह्मन्देवास्त्रयस्त्रिंशत्। ब्रह्मन्निन्द्रप्रजापती। ब्रह्मन् ह विश्वा भूतानि। नावीवान्तः समाहिता। चतस्र आशाः प्रचरन्त्वग्नयः। इमं नो यज्ञं नयतु प्रजानन्। घृतं पिन्वन्नजरं सुवीरं ॥ १० ॥

ब्रह्म समिद्भवत्याहुतीनां। आ गावो अग्मन्नुत भद्रमक्रन्। सीदन्तु गोष्ठे रणयन्त्वस्मे। प्रजावतीः पुरुरूपा इह स्युः। इन्द्राय पूर्वीरुषसो दुहानाः। इन्द्रो यज्वने पृणते च शिक्षति। उपेद्ददाति नस्वं मुषायति। भूयो भूयो रयिमिदस्य वर्द्धयन्। अभिन्ने खिल्ले निदधाति देवयुं। न ता नशन्ति न ताअर्वा ॥ ११ ॥

गावो भगो गाव इन्द्रो मेअच्छात्। गावः सोमस्य प्रथमस्य भक्षः। इमा या गावः सजनास इन्द्रः। इच्छामीद्धृदा मनसा चिदिन्द्रं। यूयं गावो मेदयथा कृशं चित्। अश्रीलं चित् कृणुथात् सुप्रतीकं। भद्रं गृहं कृणुथ भद्रवाचः। बृहद्वो वय उच्यते सभासु। प्रजावतीः सूयवसं रुशन्तीः। शुद्धा अपः सुप्रपाणे पिबन्तीः ॥ मा वस्तेन ईशतमाघशंसः। परि वो हेती रुद्रस्य वृञ्ज्यात्। उपेदमुपपर्चनं। आसु गोषूपपृच्यतां। उपर्षभस्य रेतसि। उपेन्द्र तव वीर्ये ॥ १२ ॥

चरामि कनीयोन्यानर्पिता पदानि यज्ञेसु हवामहे विष्ठालोकाः सुवीरमर्वा पिबन्तीः पट् च॥ अनु०८॥

नवमोऽनुवाकः ।

ता सूर्याचन्द्रमसा विश्वभृत्तमा महत् । तेजो वसुमद्राजतो दिवि । सामात्मा नाचरतः सामचारिणा । ययोर्व्रतं न ममे जातु देवयोः । उभावन्तौ परियातअर्म्या । दिवो न रश्मीᳫस्तनुतो व्यर्णवे । उभा भुवन्ती भुवना कविक्रतू । सूर्यानचन्द्राचरतो हतामती । पतीद्युमद्विश्वविदा उभा दिवः । सूर्या उभा चन्द्रमसा विचक्षणा ॥ १ ॥

विश्ववारा वरिवो भा वरेण्या । तानोऽवतं मतिमन्ता महिव्रता । विश्ववपरी प्रतरणातरन्ता । सुवर्विदा दृशये भूरिरश्मी । सूर्या हि चन्द्रा वसुत्वेष दर्शता । मनस्विनो भानुचरतो नु सं दिवं । अस्य श्रवो नद्यः सप्तबिभ्रति । द्यावा क्षामा पृथिवी दर्शतं वपुः । अस्मे सूर्या चन्द्रमसाभिचक्षे । श्रद्धे कमिन्द्रचरतो विचर्त्तुरं ॥ २ ॥

पूर्व्वापरं चरतो माययैतो । शिशू क्रीडन्तौ परियातोअध्वरं । विश्वान्यन्यो भुवनाभिचष्टे । ऋतूनन्यो

विदर्धज्जायते पुनः। हिरण्यवर्णाः शुचयः पावका यासाꣳ राजा। यासां देवाः शिवेन मा चक्षुषा पश्यत। आपो भद्राआदित्पश्यामि। नासदासीन्नो सदासीत् तदानीं। नासीद्रजो नोव्योमा परोयत्। किमावरीवः कुहकस्य शर्मन्॥ ३॥

अम्भः किमासीद्गहनं गभीरं। न मृत्युरमृतं तर्हि न। रात्रिया अह्नआसीत् प्रकेतः। आनीदवातꣳ स्वधया तदेकं। तस्माद्धान्यं न परः किञ्चनास। तमआसीत् तमसा गूढमग्रे प्रकेतं। सलिलꣳ सर्व्वमा इदं। तुच्छेनाभ्वपिहितं यदासीत्। तमसस्तन्महिनाजायतैकं। कामस्तदग्रे समवर्त्तताधि॥ ४॥

मनसो रेतः प्रथमं यदासीत्। सतो बन्धुमसति निरविदन्। हृदि प्रतीष्या कवयो मनीषा। तिरश्चीनो विततो रश्मिरेषां। अधस्विदासीइदुपरि स्वदासीइत्। रेतोधा आसन्महिमान आसन्। स्वधा अवस्तात् प्रयतिः परस्तात्। कोअद्धा वेद कइह प्रोचत्। कुतआजाता कुतइयं विसृष्टिः। अर्वाग्देवाअस्य विसर्जनाय॥ ५॥

अथाको वेदयत आ बभूव। इयं विसृष्टिर्यत आ

बभूव। यदि वा दधे यदि वा न। योऽअस्याध्यक्षः परमे व्योमन्। सो अङ्ग वेद यदि वा न वेद। किꣳस्विद्वनं क उ स वृक्षआसीत्। यतो द्यावापृथिवी निष्टतक्षुः। मनीषिणो मनसा पृच्छतेदु तत्। यदध्यतिष्ठद्भुवनानि धारयन्। ब्रह्मवनं ब्रह्म सवृक्षआसीत् ॥ ६ ॥

यतो द्यावापृथिवी निष्टतक्षुः। मनीषिणो मनसा विब्रवीमि वः। ब्रह्माध्यतिष्ठद्भुवनानि धारयन्। प्रातरग्निं प्रातरिन्द्रꣳ हवामहे। प्रातर्मित्रावरुणा प्रातरश्विना। प्रातर्भगं पूषणं ब्रह्मणस्पतिं। प्रातः सोममुत रुद्रꣳ हुवेम। प्रातर्जितं भगमुग्रꣳ हुवेम। वयं पुत्रमदितेर्यो विधर्त्ता। आध्रश्चिद्यं मन्यमानस्तुरश्चित् ॥ ॥ ७ ॥

राजा चिद्यं भगं भक्षीत्याह। भग प्रणेतर्भग सत्यराधः। भगे मां धियमुदवददन्नः। भगप्राणो जनय गोभिरश्वैः। भग प्रनृभिर्नृवन्तः स्याम। उतेदानीं भगवन्तः स्याम। उतप्रपित्व उत मध्ये अह्नां। उतोदितामघवन्त्सूर्यस्य। वयं देवानाꣳ सुमतौ स्याम। भगएव भगवाꣳअस्तु देवाः ॥ ८ ॥

तेन वयं भगवन्तः स्याम। तं त्वा भग सर्व्वइज्जो

हवीमि। स नो भग पुरएता भवेह। समध्वरायोषसो नमन्त। दधिक्रावेव शुचये पदाय। अर्वाचीनं वसुविदं भगं नः। रथमिवाश्वा वाजिनआवहन्तु। अश्वावतीर्गोमतीर्न उषासः। वीरवतीः सदमुच्छन्तु भद्राः। घृतं दुहाना विश्वतः प्रपीनाः॥ यूयं पातस्वस्तिभिः सदानः॥ ८॥

विचक्षणा विचत्तुरꣳ शर्मन्नधिविसर्जनाय ब्रह्मवनं ब्रह्म सवृक्षआसीत्तुरश्चिद्देवाः प्रपीना एकञ्च॥ अनु० ९॥

पीवान्नन्ते शुक्रासः सोमो धेनुमिन्द्रस्तरस्वान्छुचिमा देवो यातु सूर्यो देवीमहमस्मि ता सूर्याचन्द्रमसा नव॥ ९॥

पीवान्नामग्ने त्वं पारयानाधृष्यः शुचिन्नु स्तोमं विश्रयमाणो दिवोरुक्मोन्नं प्राणं ता सूर्याचन्द्रमसा नवसप्ततिः॥ ७९॥ हरिः ॐ॥

इति द्वितीयकाण्डः॥

# माधवीये वेदार्थप्रकाशे
# तैत्तिरीय-ब्राह्मणभाष्यम्।



## आद्यकाण्डे प्रथमप्रपाठके

### प्रथमोऽनुवाकः।

श्रीगणेशाय नमः।

हरिः ॐ।

वागीशाद्याः सुमनसः सर्व्वार्थानामुपक्रमे।
यन्नत्वा कृतकृत्याः स्युस्तन्नमामि गजाननम्॥ १॥
यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्म्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्॥ २॥
यत्कटाक्षेण तद्रूपं दधद्बुक्कमहीपतिः।
आदिशन्माधवाचार्य्यं वेदार्थस्य प्रकाशने॥ ३॥
ये पूर्व्वोत्तरमीमांसे ते व्याख्यायातिसङ्ग्रहात्।
कृपालुर्माधवाचार्य्यो वेदार्थं वक्तुमुद्यतः॥ ४॥
व्याख्याता सुखबोधाय तैत्तिरीयकसंहिता।
तद्ब्राह्मणं व्याकरिष्ये सुखेनार्थविबुद्धये॥ ५॥

यद्यपि संहितायां "इषेत्वोर्ज्जेत्वा" इत्यादीनां दर्शपूर्णमासमन्त्राणामादौ समाम्नातत्वात् तद्व्याख्यानरूपे ब्राह्मणे पौरोडाशिककाण्डमादौ पठितव्यन्तथापि दर्शपूर्णमासयोराहवनीयाद्यग्निसापेक्षत्वादग्नीनां चाधानसाध्यत्वात् प्रथमकाण्डस्याद्ये प्रपाठकेऽग्न्याधानविधिरुच्यते। यद्यपि 'कृत्तिकास्वग्निमादधीत' इत्य-

यद्यपि आधानब्राह्मणस्य उपसङ्क्रमस्तथापि संहितायां ग्रहकाण्डे शुक्रामन्थिग्रहप्रचारार्थानां मन्त्राणामनुक्तत्वेनात्र वक्तव्यत्वात् तेषा-ञ्चाशासनीयफलप्रतिपादकत्वेन मङ्गलरूपत्वादाद्यानुवाके तान् परिशिष्टान् मन्त्रानभिदधानोऽर्थान्मङ्गलाचरणं सम्पादयति । 'ब्रह्म सन्धत्तं'' इत्यादिना ॥ ब्रह्मशब्दो जगत्कारणे परमात्मनि मुख्यतया वेदे प्रयुज्यते। तथाचैतरेयिणः स्वकीयोपनिषदि समा-मनन्ति 'प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म' इति। (३अ०।३क०)। तैत्ति-रीयास्तु 'सत्यं ज्ञानमनन्तं ब्रह्म' इति। (२वल्ली।१अ०) वाजसनेयि-नस्तु 'विज्ञानमानन्दं ब्रह्म' इति*। एवं सति ब्रह्मशब्दप्रतिपादके-ऽस्य वर्णराशके परब्रह्मणि सहसा बुद्धिस्थत्वादर्थान्मङ्गलाचरणं सम्पद्यते। तस्य ब्रह्मणः प्रतिपादकत्वेन वेदोऽपि ब्रह्मशब्दस्यार्थः । ततो ग्रन्थादौ वेदपुरुषोऽनुस्मृतो भवति। तादृशस्य वेदाध्ययना-ध्यापनयोर्मुख्याधिकारसम्पादिका ब्राह्मणजातिरपि ब्रह्मशब्द-स्यार्थ, सोऽयमत्र मन्त्रे विवक्षितः । उत्तरवाक्यगतक्षत्रशब्दसाह० चर्य्यात्। एवं सत्यत्र प्रतिपाद्यत्वेनाविवक्षितोऽपि परमात्मा सह-सा प्रतीयमानो विघ्नपरिहारादिरूपं मङ्गलं सम्पादयति। यथा ब्राह्मणभोजनार्थमानीयमानस्य दधिकुम्भस्य दर्शनेन ग्रामा-न्तरे जिगमिषूणां मङ्गलं तद्वत् । तस्मादाद्यानुवाके 'ब्रह्म सन्धत्तं' इत्यादि मन्त्राणामाम्नानं युक्ततरम् । मन्त्रविनियोगं चापस्तम्बो दर्शयति। अपरेणोत्तरेण वेदेर्ग्रहावरत्नी चासन्धत्ते ॥ "ब्रह्म सन्धत्तं तन्मे जिन्वतम्। क्षत्रꣳ सन्धत्तं तन्मे जिन्वतम्।

---

* एतत् प्रमाणं वाजसनेयसंहितायां न दृश्यते ।

इषꣳ सन्धत्तं तां मे जिन्वतम्। ऊर्ज्जꣳ सन्धत्तं तां मे जिन्वतम्। रयिꣳ सन्धत्तं तां मे जिन्वतम्। पुष्टिꣳ सन्धत्तं तां मे जिन्वतम्। प्रजाꣳ सन्धत्तं तां मे जिन्वतम्। पशून् सन्धत्तं तान्मे जिन्वतं" इति॥ अथाध्वर्य्युः शुक्रपात्रं प्रतिप्रस्थाता मन्थिपात्रञ्चादाय उत्तरे वेदेः पश्चाद्भागेऽवस्थापयतः स्वहस्तस्थिते पात्रे परस्परसंसृष्टे कुरुतः। यद्वा स्वकीयावरत्नी परस्परसंसृष्टौ कुरुतः। हे ग्रहौ युवां 'ब्रह्म' यजमानसम्बन्धिनीं ब्राह्मणजातिं 'सन्धत्तं' स्वोचितधर्मराहित्यं यथा न भवति तथा सम्पादयतम्। किञ्च मे तद्ब्रह्म मदीयां ब्राह्मणजातिं 'जिन्वतं' प्रीणयतम्। एवमपि सर्व्वत्र योज्यम्॥ 'क्षत्रं' देशाधिपतिस्वामिगता क्षत्रियजातिः। 'इड्' इत्यन्नम्। 'ऊर्ज्जं' क्षीरादिरसः। 'रयिं' धनम्। 'पुष्टिः' शरीरपोषः। 'प्रजाः' पुत्रपौत्रादिः। 'पशवः' गवादयः॥

कल्पः। 'स्तुतोऽसि जनधाः। देवास्त्वा शुक्रपाः प्रणयन्तु' इति। 'शुक्रमध्वर्य्युरादत्ते' इति पूर्व्वोक्तग्रहसन्धानात् प्रागेवेदमुपादानम्। पाठक्रमादर्थक्रमस्य बलवत्त्वात्॥ हे शुक्रग्रह त्वमस्माभिः स्तुतोऽसि। हे 'जनधाः' जनानां धारयितः। 'शुक्रपाः' ये देवाः शुक्रपात्रस्थस्य सोमस्य पातारस्ते त्वां प्रकर्षेणाहवनीयसमीपे नयन्तु॥ १॥

कल्पः। 'सुवीराः प्रजाः प्रजनयन् परीहि। शुक्र शुक्रशोचिषा' इति। 'दक्षिणेनाध्वर्य्युः प्रतिपद्यते' इति पात्रं हस्तेन गृहीत्वा हविर्धानस्य पूर्व्वद्वारि निर्गत्योत्तरवेदेर्दक्षिणेन मार्गेण पूर्व्वस्यां दिश्यध्वर्य्युर्गच्छति। हे शुक्रग्रह 'शुक्रशोचिषा' भास्व-

रदीप्त्या युक्त । 'सुवीराः' शोभनवीरमनुष्ययुक्ताः 'प्रजाः' पुत्र-पौत्रादिकाः 'प्रजनयन्' उत्पादयन् उत्तरवेदेः परितो गच्छ ॥

कल्पः । 'स्तुतोऽसि जनधाः । देवास्त्वा मन्थिपाः प्रणयन्तु' इति । 'मन्थिनं प्रतिप्रस्थाता' इति । 'आदत्ते' इत्यनुवर्त्तते । हे मन्थिग्रह त्वमस्माभिः स्तुतोऽसि । हे 'जनधाः' जनानां धार-यितः, मन्थिपात्रस्थस्य सोमस्य पातारो ये देवास्ते त्वां प्रकर्षे-णाहवनीयसमीपे नयन्तु ॥

कल्पः । 'सुप्रजाः प्रजाः प्रजनयन् परीहि । मन्थी मन्थिशो-चिषा' इति । उत्तरेण प्रतिप्रस्थाता'इति । 'प्रतिपद्यते' इत्यनुव-र्त्तते । हे ग्रह, त्वं 'मन्थी' मन्थिनामको ग्रहो भूत्वा 'मन्थिशोचि-षा' मन्थ्याख्यस्य तव तेजसा युक्तः, शोभनापत्योपेताः 'प्रजाः' भ्रातृबन्ध्वादियुक्ताः 'प्रजनयन्' उत्पादयन् 'परीहि' उत्तर-वेदेरुत्तरभागे परीत्य पूर्व्वस्यां दिशि गच्छ ॥

कल्पः । अग्रेणोत्तरवेदिं ग्रहावरत्नी चासञ्जत्तः । 'सङ्ग-च्छानौ दिव आ पृथिव्यायुः । सन्धत्तं तन्मे जिन्वतम् । प्राणꣳ सन्धत्तं तन्मे जिन्वतम् । अपानꣳ सन्धत्तं तन्मे जिन्वतम् ॥ २ ॥

व्यानꣳ सन्धत्तं तन्मे जिन्वतम् । चक्षुः सन्धत्तं तन्मे जिन्वतम् । श्रोत्रꣳ, मनः, वाचꣳ, सन्धत्तं तां मे जिन्वतम्' इति । हे शुक्रामन्थिनौ युवां 'सञ्जग्मानौ' परस्परं सङ्गतौ ऐकमत्यङ्गतौ 'आ दिवो' द्युलोकसहितया पृथिव्या च सङ्गतावस्मदीयमायुः 'सन्धत्तं' सम्यग् धारयतमभिवर्द्धयतमित्यर्थः । 'प्राणः' ऊर्द्ध्व-गामी वायुः । 'अपानो' अधोगामी वायुः । 'व्यानो' मध्यवायुः ।

चक्षुःश्रोत्रे मनोवाक् च इत्येतानीन्द्रियाणि, एतेषु सर्व्वेषु पूर्व्व-वद्व्याख्येयम् ॥ 'ब्रह्म सन्धत्तं' इत्यत्रोत्तरवेदेः पश्चात् सन्धानम् इह तु पुरस्तादिति विशेषः ॥

कल्पः । अथैनावध्वर्य्युरभिमन्त्रयते । 'आयुःस्थ आयुर्मे ध-त्तम् । आयुर्यज्ञाय धत्तम् । आयुर्यज्ञपतये धत्तम् । प्राणस्थः प्राणं मे धत्तम् । प्राणं यज्ञाय धत्तम्' ॥ ३ ॥

'प्राणं यज्ञपतये धत्तम् । चक्षुःस्थश्चक्षुर्मे धत्तम् । चक्षुर्यज्ञाय धत्तम् । चक्षुर्यज्ञपतये धत्तम् । श्रोत्रꣳस्थः श्रोत्रं मे धत्तम् । श्रोत्रं यज्ञाय धत्तम् । श्रोत्रं यज्ञपतये धत्तम् । तौ देवौ शुक्रामन्थिनौ । कल्पयतं दैवीर्विशः । कल्पयतं मानुषीः' ॥

'इषमूर्जमस्मासु धत्तम् । प्राणान् पशुषु । प्रजां मयि च यज-माने च' इति । हे शुक्रामन्थिनौ, युवाम् 'आयुःस्थः' आयुषः स्वा-मिनौ, भवथः । अतो 'मे' ममाध्वर्य्योरायुर्धत्तम् । तथा यज्ञस्या-प्यायुर्धत्तम् । समाप्तिरेव यज्ञस्यायुः । तथा 'यज्ञपतये' यजमा-नस्याप्यायुरभिवर्द्धयतम् । एवं प्राणादिषु योज्यम् । 'तौ' युवां प्राणादिस्वामिनौ 'शुक्रामन्थिनौ' ग्रहद्वयाधिपती देवौ 'दैवी-र्विशः' देवसम्बन्धिनीः प्रजाः 'कल्पयतम्' अस्मदनुकूलाः कुरुतम् ॥ तथा मनुष्यजातियुक्ताः प्रजाश्चास्मदनुकूलाः कुरुतम् ॥ ४ ॥

किञ्च 'इषं' व्रीह्याद्यन्नम् 'ऊर्ज्जं' क्षीरादिरसञ्चास्मासु स्थापयतम् । 'पशुषु' गवादिषु चिरजीवनहेतून् प्राणान् स्था-पयतम् । 'मयि' अध्वर्य्यौ चास्मिन् यजमाने च 'प्रजां' पुत्रपौ-त्रादिरूपां स्थापयतम् ।

कल्पः । अप्रोक्षितौ शकलौ बहिर्वेदेर्निरस्यतः 'निरस्तौ शण्डामर्कौ सहामुना' इति । 'निरस्तः षण्ड' इति वा, अध्वर्युर्दयं मनसा ध्यायन् 'निरस्तो मर्क इति' प्रतिप्रस्थातेति । अत्र द्विवचनान्तो मन्त्रः शाखान्तरगतः । योऽयं शण्डाख्योऽसुरपुरोहितः सोऽयं यज्ञभूमेर्वेदेर्वहिर्निष्काशितः । यश्च मर्काख्योऽसुरपुरोहितः सोऽपि वहिर्निष्काशितः । इत्याभ्यां मन्त्राभ्यां उभावप्रोक्षितौ काष्ठशकलौ वहिर्निरस्यतः ॥

कल्पः । तौ प्रोक्षिताभ्यां शकलाभ्यामभिधाय प्रोक्षिताभ्यामधस्तात् पांशूनपध्वंसयतः "अपनुत्तौ शण्डामर्कौ सहामुना" इति । अयञ्च मन्त्रार्थक्रमानुसारेण शकलनिरसनमन्त्रात् प्रागेव द्रष्टव्यः । पात्रयोरधस्तनपांशुरूपेणावस्थितौ शण्डामर्कावमुनासाहित्येन सहापनुत्तौ निराकृतौ ॥

कल्पः । प्रोक्षितावाधत्तः । 'शुक्रस्य समिदसि' इत्यध्वर्युः 'मन्थिनः समिदसि' इति प्रतिप्रस्थातेति अप्रोक्षितौ शकलौ वहिर्निरस्य प्रोक्षितौ शकलावग्नावाधत्तः । हे शकल, त्वं शुक्रग्रहस्य समिन्धनहेतुरसि । तथा हे शकल, त्वं मन्थिग्रहस्य समिन्धनहेतुरसि ।

कल्पः । शुक्रामन्थिनौ प्रतिनिगद्य होमः । 'स प्रथमः सङ्कृतिर्विश्वकर्मा । स प्रथमो मित्रो वरुणो अग्निः । स प्रथमो बृहस्पतिश्चिकित्वान् । तस्मा इन्द्राय सुतमाजुहोमि' इति ॥ ५ ॥

इतरग्रहेषु होतृप्रयुक्तवषट्कारेणैव होमः । न त्वध्वर्योर्मन्त्रपाठोऽस्ति, इह त्वेनं मन्त्रं प्रतिनिगद्य होमः कर्त्तव्यः । 'स'

इन्द्रः 'प्रथमो' देवानां मध्ये मुख्यः 'सङ्कृतिः' समीचीनाकृतिः, जगद्रक्षणरूपव्यापारो यस्यासौ वा सङ्कृतिः। विश्वानि कर्म्माणि जगद्रक्षणहेतुभूतानि असुरयुद्धादीनि यस्यासौ 'विश्वकर्म्मा' स एव मुख्य इन्द्रो मूर्त्तिविशेषान् धृत्वा मित्रादिरूपः सम्पन्नः। स एवेन्द्रः 'चिकित्वान्' सर्व्वज्ञानकुशलो वृहस्पतिरपि सम्पन्नः। तस्मै तादृशायेन्द्राय सुतमभिषुतमिमं सोमं सर्व्वतो जुहोमि। अत्र विनियोगसङ्ग्रहः।

'अध्वर्य्युश्च प्रतिप्रस्थाता चादाय ग्रहावुभौ।
ब्रह्मशुक्रामन्थिपात्रं सन्धत्ते वेदिपश्चिमे॥
स्तुतो ग्रहावाददीत सुवीर्य्यातो दिशोर्द्वयोः।
सञ्जग्म वेदेः पुरतः सन्धत्तः पूर्व्वतो ग्रहौ॥
आयुर्मन्त्रपतेऽध्वर्य्युर्निरस्तः शकलौ त्यजेत्।
अपपांशुमपध्यस्य शुक्रामन्थिद्वयावुभौ॥
प्रोक्षितौ शकलौ क्षिप्त्वा स प्रेति ग्रहयोर्ऊतिः।
स्तुतः शुचिर्निरस्तेति द्वयं द्वयमुदीरितम्॥
आद्यानुवाके कथिता मन्त्रा एते त्रयोदश॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुर्ब्राह्मणे आद्यकाण्डस्य प्रथमप्रपाठके प्रथमोऽनुवाकः॥ १॥

अथ द्वितीयोऽनुवाकः।

प्रथमानुवाके सोमयागशेषभूताः शुक्रामन्थिग्रहप्रचारमन्त्रा उक्ताः। अथाधानप्रकरणमारभ्यते। तत्रास्मिन्ननुवाके कालविशेषं विधत्ते।

'कृत्तिकास्वग्निमादधीत । एतद्वाग्नेर्नक्षत्रम् । यत् कृत्तिकाः । स्वायामेवैनं देवतायामाधाय । ब्रह्मवर्चसी भवति' इति । अग्नि-चयनकाण्डे बाहुला नितत्निरित्याद्याः कृत्तिकान्ता यस्मिन् दिने चन्द्रेण संयुज्यन्ते तस्मिन् दिने तासु कृत्तिकासु चन्द्र-योगं प्राप्तासु अग्न्याधानं कुर्य्यात् । यदेतत् कृत्तिकासम्पातरूपं तदग्निसम्बन्धि नक्षत्रम् । अतएवान्यत्राम्नातं'कृत्तिका नक्षत्रमग्नि-र्देवता' इति । अत आधेयस्याग्नेः कृत्तिकास्वाधाने सति स्वरू-पभूतायामेव देवतायामाधानं कृतं भवति । अग्नेर्ब्राह्मणाभि-मानित्वात् । तत्प्रसादेनाधीतश्रुताध्ययनरूपब्रह्मवर्चससम्पन्नो भवति । प्रकारान्तरेण प्रशंसति । 'मुखं वा एतं नक्षत्राणां यत् कृत्तिकाः । यः कृत्तिकास्वग्निमाधत्ते । मुख्य एव भवति' इति । 'कृत्तिकाः' इति यत् तदेतन्नक्षत्राणां मध्ये 'मुखं' प्रथमं नक्षत्रम् । अतएव नक्षत्रप्रतिपादकेऽप्यनुवाके आदौ पठ्यते । 'कृत्तिकानक्ष-त्रमग्निर्देवता' इति । एकत्र अग्नेः कृत्तिकाः शुक्रं परस्तात्' इति । अन्यत्र 'अग्निर्नः पातु कृत्तिका नक्षत्रं देवमिन्द्रियं' इत्येतत् । तदे-तत् सर्व्वमन्त्रानुवाकेषु इष्टिविधायकेऽप्यनुवाके एतदीयैवेष्टिरा-दावाम्नाता । 'अग्निर्वा अकामयत अन्नादो देवानां स्यामिति' । स एतमग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निरवपत्' इति । अतो मुखभूतासु कृत्तिकास्वादधानः पुमान् सर्व्वेषु स्वयं मुख्यो भवति । अस्मिन् पक्षे गुणमुक्त्वा दोषमपि कश्चिद्दर्शयति । 'अथो खलु' ॥ १ ॥

'अग्निनक्षत्रमित्यपचायन्ति । गृहान् ह दाहुको भवति' इति ।

पूर्वोक्तगुणवैलक्षण्यद्योतनायाथोशब्दः। अभिज्ञाः खल्वग्निदेवताकमिदं नक्षत्रमित्येवं निन्दन्ति। तस्मिन्नक्षत्रे आदधानस्य यजमानस्य गृहान् सोऽग्निर्दाहुको' दहनशीलो भवति।

अथ निर्दोषं नक्षत्रं विधत्ते। 'प्रजापती रोहिण्यामग्निमसृजत। तं देवा रोहिण्यामादधत। ततो वै ते सर्व्वान्रोहानरोहन्। तद्रोहिण्यै रोहिणित्वम्। यो रोहिण्यामग्निमाधत्ते। ऋध्नोत्येव। सर्व्वान्रोहान्रोहति' इति॥ रुह्यन्ते प्राप्यन्त इति रोहाः कामास्ते च यस्यां रुह्यन्ते सा रोहिणी। 'ऋध्नोत्येव' समृद्धो भवत्येव। समृद्धिरेव 'सर्व्वान्' इत्यनेन विशदीकृता॥

नक्षत्रान्तरं विधत्ते। 'देवा वै भद्राः सन्तोऽग्निमाधित्सन्त, [२] तेषामनाहितोऽग्निरासीत्। अथैभ्यो वामं वस्वपाक्रामत्। ते पुनर्व्वस्वोरादधत। ततो वै तान् वामं वसूपावर्त्तत। यः पुरा भद्रः सन् पापीयान्त्स्यात्। स पुनर्व्वस्वोरग्निमादधीत। पुनरेवैनं वामं वसूपावर्त्तते। भद्रो भवति' इति। 'भद्राः' धनसम्पन्नाः 'आधित्सन्त' आधातुमैच्छन् धनगर्वेण श्रद्धाराहित्यादग्निः सम्यगाहितो न स्यात्। अनन्तरं तेन विकलानुष्ठानेन तदीयं 'वामं' वननीयं मणिमुक्तादिकं धनं तेभ्योऽपगतम्। ततः 'ते' देवाः श्रद्धालवो भूत्वा पुनर्वसू नक्षत्रौ तारकाविशेषौ यस्मिन् दिने चन्द्रेण युक्तौ तस्मिन् दिनेऽग्निं सम्यगाधाय तद्धनं पुनर्लब्धवन्तः। 'ततोऽप्यन्योऽपि पूर्व्वं धनिकः सन् केनापि निमित्तेन पश्चात् 'पापीयान् स्यात्' अत्यन्तनिर्धनो

भवेत्। स पुनर्वस्वोरग्निमाधाय पूर्व्ववद्धनं प्राप्य सर्व्वेषां मध्ये 'भद्रः' पूज्यो भवति॥

अथ नक्षत्रान्तरं विधत्ते। 'यः कामयेत दानकामा मे प्रजाः स्युरिति। स पूर्व्वयोः फल्गुन्योरग्निमादधीत [ ३ ] 'अर्य्यम्णो वा एतन्नक्षत्रम् यत् पूर्व्वे फल्गुनी। अर्य्यमेति तमाहुर्यो ददाति। दानकामा अस्मै प्रजा भवन्ति' इति। सर्व्वाः प्रजा 'मे' मह्यं धनं दातुमिच्छन्त्विति 'यो' यजमानः कामयेत सोऽयं पूर्व्वयोः फल्गुन्योराधाय प्रजाभिर्द्दत्तं धनं लभते। एतच्च नक्षत्रमर्य्यमदेवताकम्। 'फल्गुनीनक्षत्रमर्य्यमा देवता' इत्यन्यत्राम्नानात्। अरीन् यमयति धनदानेन वशीकरोतीत्यर्य्यमा धनस्य दाता॥

नक्षत्रान्तरं विधत्ते। 'यः कामयेत भगी स्यामिति। स उत्तरयोः फल्गुन्योरग्निमादधीत। भगस्य वा एतन्नक्षत्रम्। यदुत्तरे फल्गुनी। भग्येव भवति' इति। ऐश्वर्य्यादिगुणषट्ककामः। तथा च स्मर्य्यते

"ऐश्वर्य्यस्य समग्रस्य धर्म्मस्य यशसः श्रियः।
ज्ञानवैराग्ययोश्चैव षणां भग इतीरितम्" इति॥

तत् कामं उत्तरयोः फल्गुन्योराधाय तत् फलं प्राप्नोति। उत्तरफल्गुन्योर्भगदेवताकत्वमन्यत्राम्नातम्। 'फल्गुनीनक्षत्रं भगो देवता' इति॥

अथ नक्षत्रान्तरं विधत्ते। 'कालकञ्जा वै नामासुरा आसन् [ ४ ] 'ते सुवर्गाय लोकायाग्निमचिन्वन्त। पुरुष इष्ट-

कामुपादधात् पुरुष इष्टकाम्। स इन्द्रो ब्राह्मणोब्रुवाण इष्टकामुपाधत्त। एषा मे चित्रा नामेति। ते सुवर्गं लोकमाप्रारोहन्। स इन्द्र इष्टकामावृहत्। तेवाकीर्य्यन्त। येवाकीर्य्यन्त। त ऊर्णनाभयोऽ- भवन्। द्वावुदपतताम् [ ५ ] तौ दिव्यौ श्वानावभवताम्। यो भ्रातृव्यवान्त्स्यात्। स चित्रायामग्निमादधीत। अवकीर्य्यैव भ्रातृव्यान्। ओजोबलमिन्द्रियं वीर्य्यमात्मन्धत्ते' इति। कालकञ्जशब्दोऽसुरविशेषनामधेयम्। ते चासुरा यदा स्वर्गार्थं अग्निं चेतुं प्रारभन्त, तदानीमेकैकोऽसुर एकैकामिष्टकामुपादधात्। तानसुरान् जेतुकाम इन्द्रो वेषान्तरं कृत्वा ब्राह्मणोऽहमिति ब्रुवाणः मध्ये प्रविश्य काञ्चिदिष्टकामुपाधत्त। तदानीं मनसि 'एषा मे' मदीयेष्टका चित्रा इति नामधेयेन युक्ता अपेक्षितविचित्रफलप्रदातृत्वात् इत्यमन्यत। तेन चाग्निचयनेनासुराः स्वर्गमारोढुं प्रारभन्त। तदानीं स इन्द्रः स्वकीयां तामिष्टकां चितेरुद्धृतवान्। चितिभ्रंशेन मार्गमध्य एवासुराः प्रभ्रष्टाः। ते चोर्णनाभिनामकाः लूताकीटाः प्राभवन्। तेन कीटेन संसृष्टं तन्तुजालमूर्णशब्देनोच्यते। तस्मिन्नूर्णे सूत्रजाले स्थिता अभयो भीतिरहिता आसते। ते ह्याधारयोः काष्ठयोर्मध्ये आकाशे तन्तुजालं सृष्ट्वा तत्र निर्भयास्तिष्ठन्तीत्येतत् सर्व्वं लोकप्रसिद्धम्। ऊर्णनाभय इति पदद्वयं मिलित्वा एकं नामधेयम्। 'तनूनपात्' इति पदद्वयं यथैकस्याग्नेर्नाम तद्वत्। तेषामसुराणां मध्ये द्वावसुरौ श्रद्धातिशयात् स्वर्गं प्राप्ता-

विति भ्रंशात्तत्र देवलोके श्रानावभूताम्। यस्मादग्नेन्द्रश्चित्रा-भिरिष्टकाभिस्तानसुरान् विनाशितवान्, तस्माद्यजमानश्चि-त्रानक्षत्रेऽग्निमाधाय भ्रातृव्यान् विनाश्य स्वस्मिन्नोजआदिकं स्थापयति। 'ओजः' बलहेतुरष्टमो धातुः। 'बलं' प्रसि-द्धम्। 'इन्द्रियं' चक्षुरादिकम्। 'वीर्य्यं' तदीयव्यवहारपा-टवम्॥

इत्थं नक्षत्राणि विधायाधिकारिविशेषादृतून् विधत्ते। "व-सन्ते ब्राह्मणोऽग्निमादधीत। वसन्तो वै ब्राह्मणस्यर्त्तुः। स एवै-नमृतावाधाय। ब्रह्मवर्चसी भवति। मुखं वा एतदृतूनाम् [६] 'यद्वसन्तः। यो वसन्ताग्निमाधत्ते। मुख्य एव भवति। अथो योनिमन्तमेवैनं प्रजातमाधत्ते। ग्रीष्मे राजन्य आदधीत। ग्रीष्मो वै राजन्यस्यर्त्तुः। स एवैनमृतावाधाय। इन्द्रियावी भवति। शरदि वैश्य आदधीत। शरद्वै वैश्यस्यर्त्तुः [७] स एवैन-मृतावाधाय। पशुमान् भवति" इति॥ 'वसन्तः' वसन्तर्त्तौः तस्य च ब्राह्मणस्य प्राथम्यसाम्यात् स्वस्वामिभावात् स्वकीयर्त्त्व-तावादधानस्य ब्राह्मणस्य स्वोचितं ब्रह्मवर्चसमेव फलम्। किञ्च। 'मधुश्च माधवश्च वासन्तिकावृतू' इत्याम्नानात्। मुखत्वं प्राथम्यं वसन्तस्याप्यवगन्तव्यम्। अपि च। यथा स्त्रीणां ऋतुविशेषे प्र-वृत्तः पुरुषः प्रजननसमर्थो भवति, तथाप्यृतुविशेषे 'योनिमन्तं' प्रजननसामर्थ्यवन्तं प्रादुर्भूतं प्रजातं चाग्निमाधत्ते॥ एवं ग्रीष्म-शरदाख्ययोरपि व्याख्येयम्॥

पूर्व्वं काम्य आधाने पूर्व्वोत्तरफल्गुनीनक्षत्रद्वयं विहितम्।

इदानीन्तु नित्य आधाने नक्षत्रमेकं निषिध्येतरद्विधत्ते। "न पूर्व्वयोः फल्गुन्योरग्निमादधीत। एषा वै जघन्या रात्रिः संवत्सरस्य। यत् पूर्व्वे फल्गुनी। पृष्ठत एव संवत्सरस्याग्निमाधाय। पापीयान् भवति। उत्तरयोरादधीत। एषा वै प्रथमा रात्रिः संवत्सरस्य। यदुत्तरे फल्गुनी। मुखत एव संवत्सरस्याग्निमाधाय। वसीयान् भवति' इति। फाल्गुनमासे येयं पूर्णिमा तत्र प्राप्तं यत् पूर्व्वफल्गुनीनक्षत्रं तद्युक्ता रात्रिः पूर्व्वसंवत्सरस्य समाप्तिस्थानीया। अतस्तत्रादधानः संवत्सरस्य 'पृष्ठतः' पृष्ठभागेऽनुष्ठानाद्दरिद्रो भवति। उत्तरफल्गुनीनक्षत्रे भाविसंवत्सरादित्वात् तत्रादधानः संवत्सरप्रारम्भ एवाधायात्यन्तधनिको भवति।

पक्षान्तरं विधत्ते। 'अथो खलु। यदैवैनं यज्ञ उपनमेत्। अथादधीत। सैवास्यर्द्धिः" इति॥ अन्येऽभिज्ञा एवमाहुः खलु यस्मिन्नेव काले 'एनं' पुरुषं सोमयज्ञः प्राप्नुयात्, सोमयागं करिष्याम्यहमिति बुद्धिरुदियात्, तदानीमेवादधीत। न तु नक्षत्रादिकं परीक्षितव्यम्। सैव सोमयागबुद्धिरेवास्य पुरुषस्य नक्षत्रादिकृतत्तद्विहितकालसमृद्धिः। अतएव सूत्रकारेणोक्तम्। "सोमेन यक्ष्यमाणो नर्त्तुर्न नक्षत्रम्" इति। अत्र मीमांसातृतीयाध्यायस्य षष्ठपादे चिन्तितम्।

"आधानं किं प्रकृत्यर्थं वह्निमात्रेण वा युतम्।
संस्कृताग्निप्रणाल्यैतत् पर्ववत्प्रकृतौ स्थितम्॥
लौकिकाकारमात्रत्वे विफलत्वात् क्रतौ युतिः।

पर्णस्याहवनीयादौ शास्त्रीयेऽस्तु स्वतन्त्रता" ॥

अनारभ्याधीतं पर्णमयीत्वम् । यथा जुहूः प्रसिद्धा प्रकृतौ निविष्टा तथैवाग्निप्रणाख्या तत्संस्काररूपमाधानं प्रकृतौ निविशत इति चेत् । मैवं, वैषम्यात् । द्विविधो हि जुह्वा आकारः लौकिकः शास्त्रीयश्च । अरत्निमात्रदैर्घ्यंहंसमुखत्वबिलत्वादिरूपो दृश्यमानो लौकिकः । अपूर्व्वीयत्वाकारस्तु शास्त्रीयः । तयोरपूर्व्वीयत्वं क्रतुप्रवेशमन्तरेण नास्ति । तत्र यदि लौकिकाकारमात्रे पर्य्यवस्येत् तदा पर्णमयीत्वं विफलं भवेत् । काष्ठान्तरेणापि तदाकारस्य सुसम्पादकत्वात् । अतोऽपूर्व्वीयत्वाय पर्णता क्रतौ प्रविष्टा । आहवनीयादीनां लोक एव शास्त्रीयाकारः । स च विधिबलादाधानेनैव जन्यते नान्यथा । तस्मादाधानस्य क्रतुप्रवेशं विनैव शास्त्रीयाहवनीयाद्याकारसम्पादनार्थत्वादग्निमात्रेण तत् संयुज्यते । तथासति पर्णवैषम्यात् प्रकृतावप्रविश्याग्नीनुत्पाद्य क्रतुवत्स्वातन्त्र्येणावतिष्ठते । ततो लौकिकपापसम्पादितसुवर्णव्रीह्यादिवदाधानसम्पादितानां स्वतन्त्राणामेवाहवनीयाद्यग्नीनां पश्चाद्वाक्यैः क्रतुषु विनियोगोऽस्तु । तत्रैवान्यच्चिन्तितम् ।

"आधानं पवमानादेरिष्टेरङ्गं न वा भवेत् ।
अग्नीनामिष्टिशेषत्वात् तद्द्वाराऽस्य तदङ्गता ॥
अनारभ्य विधानात्तु नाङ्गं कस्यचिदाहितम् ।
अग्न्यर्थत्वात्तत्समेष्टिरग्नयस्त्वग्निहोत्रगाः" ॥

इदमाम्नायते । "अग्नये पवमानायाष्टाकपालं निर्वपेदग्नये

पावकायाग्नये शुचये" इति। 'वसन्ते ब्राह्मणोऽग्निमादधीत' इति च। तत्राधानं पवमानादीनामिष्टीनामङ्गम्भवेत्, कुतः दर्शपूर्णमासविकृतिषु पवमानादीष्टिषु चोदकप्राप्तानामाहवनीयाद्यग्नीनां? इष्ट्यङ्गत्वे सति अग्निद्वारा तत्संस्काररूपस्याधानस्यापि तदङ्गताया अनिर्वार्य्यत्वादिति चेत्। मैवम्। न ह्येतदाधानं कस्यचित्क्रतोः प्रकरणे पठितं किन्त्वनारभ्याधीतम्। अतो न कस्याप्येतदङ्गम्, किन्त्वाधानवदिष्टीनाम्। अग्निसंस्कारार्थत्वात् परस्परं नास्त्यङ्गाङ्गिभावशङ्का॥ ननु पवमानेऽप्यङ्गत्वाभावे अग्निसंस्कारवैयर्थ्यादग्निद्वारा तदङ्गत्वं युक्तमिति चेन्न। संस्कृतानामग्नीनामग्निहोत्राद्युत्तरक्रतुषु तत्तद्वाक्यैर्विनियोगावगमात्। तस्मान्नाधानमङ्गम्। द्वितीयाध्यायस्य तृतीयपादे चिन्तितम्।

"वसन्ते विप्र आदध्यात् तत्रैवोपनयीत तम्।
अनुवादः प्रापणं वाऽनुवादः कालसिद्धये॥
अन्तरेणाग्निविद्याभ्यां कर्म्मानुष्ठित्यसम्भवात्।
कृष्णे आधानोपनीती प्राप्ता विप्रादयस्ततः॥
लौकिकाग्नेः पुस्तकाच्च तत्सिद्धेर्नास्ति कल्पनम्।
कालविप्रादिसंयुक्तं अतोऽप्राप्तं विधीयते"॥

"वसन्ते ब्राह्मणोऽग्निमादधीत। ग्रीष्मे राजन्यः। शरदि वैश्यः" इति श्रूयते। वसन्ते ब्राह्मणमुपनयीत। ग्रीष्मे राजन्यं, शरदि वैश्यम्, इति च। तत्र वसन्तादिकालविशेषं विधातुं ब्राह्मणादयोऽनूद्यन्ते। न च तेषां प्राप्त्यभावः। क्रत्वनुष्ठानान्य-

थानुपपत्त्या क्लृप्तत्वात्। न ह्याहुत्याधारभूतमग्निं अनुष्ठानप्रकारज्ञापिकां विद्याञ्च विना कर्म्मानुष्ठानं सम्भवति। अग्निश्च नाधानमन्तरेणास्तीति ब्राह्मणादिकर्तृकमाधानं कल्पयति । विद्या चोपनयनपूर्व्वकाध्ययनमन्तरेण न सम्भवतीति ब्राह्मणाद्युपनयनं कल्पयन्तीति तत्राप्तिरिति चेत् । मैवम्। लौकिकाग्नौ होतुं पुस्तकपाठेनाधिगन्तुञ्च शक्यत्वेनाधानोपनयनयोरकल्पने ब्राह्मणादीनामप्राप्तेः । तस्माद्वसन्तादिकालविशिष्टब्राह्मणादिकर्तृकेनाधानोपनेचा विधीयते। षष्ठाध्यायस्य प्रथमपादे चिन्तितम्।

"पुंसोरेकस्य वाऽऽधानं वसानावित्यतो द्वयोः ।
एष चौमविधिर्द्वित्वं दम्पत्योरेकता ततः" ॥

आधाने श्रूयते "चौमे वसानावग्निमादधीयातां" इति । तत्र वसानाविति पुल्लिङ्गवद्द्विवचनम्। उभयोः पुंसोराधानेऽधिकार इति चेत् । मैवम्। चौमस्याप्राप्तस्य विधेयतया पुंद्वित्वस्यापि विधाने वाक्यभेदान्न तद्विधीयते। किन्तु दम्पत्योः सहाधिकारेण प्राप्तं द्वित्वमनूद्यते। पतिश्च पत्नी चेति विगृह्य. पतिशब्दस्यैकशेषात् पुल्लिङ्गद्विवचनमविरुद्धम्। तस्मादाधानेऽधिकारिणः पुंस एकत्वमेव ।

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे आद्यकाण्डे प्रथमप्रपाठके द्वितीयोऽनुवाकः ॥
॥ २ ॥

अथ तृतीयोऽनुवाकः।

द्वितीयानुवाके आधानार्थे नक्षत्रादिकालोऽभिहितः। तृतीये देवयजनार्थाः सम्भारा उच्यन्ते। यदुक्तं सूत्रकारेण। "प्राचीनप्रवणं देवयजनमुद्धृत्य" इति। तदिदं विधत्ते। "उद्धन्ति। यदेवास्या अमेध्यम्। तदपहन्ति" इति। भूमेरूर्द्ध्वभागं खनित्रादिना खनेत्। तेन निष्ठीवनादिनिमित्तं यदमेध्यं तदपहृतं भवति। उद्धननमन्त्रस्तु 'उद्धृत्यमानं' इत्यादि। स चोपरितनप्रपाठकादौ आम्नातत्वात्। तत्रैव व्याख्यास्यते। एवमुत्तरेष्वपि विधिषु द्रष्टव्यम्।

अथ विधत्ते, "अपो वोक्षति शान्त्यै" इति। उद्धननकृता भूमेर्वेदना जलेन शाम्यति। 'आपो वै शान्ता' इति अन्यत्रोपशमहेतुत्वश्रवणात्।

विधत्ते। "सिकतानि वपति। एतद्वा अग्नेर्वैश्वानरस्य रूपम्। रूपेणैव वैश्वानरमवरुन्धे" इति। सिकतानां तद्रूपत्वं वैश्वानरस्य रूपमिति मन्त्रादवगन्तव्यम्। सिकतादयो द्रव्यविशेषा देवयजनभूमौ प्रक्षेपणीयाः सम्भाराः। अतएव सूत्रकारेणोक्तम्। 'सप्त पार्थिवान् सम्भारानाहरति। एवं वानस्पत्यान्' इति। तत्र पार्थिवेषु सिकतारूप एकः सम्भार उक्तः।

द्वितीयं सम्भारं विधत्ते। 'ऊषां निवपति। पुष्टिर्वा एषा प्रजननम्। यदूषाः' [ १ ] पुष्ट्यामेव प्रजननेऽग्निमाधत्ते। अथो सञ्ज्ञान एव। सञ्ज्ञानꣳ ह्येतत् पशूनाम्। यदूषाः' इति। पशवो ह्यूषरक्षेत्रोत्पन्नं तृणादिकं रसान्तरयुक्तत्वादाद-

रेण भक्षयित्वा पुष्टाः सन्तोऽपत्यानुत्पादयन्ति । तस्मादूषा लवणाम्भसा मिश्रितास्तस्यावयवा इति यावत् । सैषा पुष्टिः प्रजननञ्च । तस्मादूषनिवपेन तदुभयप्राप्तिः । अपि च सञ्ज्ञाने प्रदेश एवाग्निराहितो भवति । एतच्चोषरक्षेत्रं पशूनां सञ्ज्ञानम् । पशवो ह्याघ्राणेन तत् संस्थानं जानन्ति । तस्मादूषा आधानस्य स्थाने निवपनीयाः ।

एवं निवपनकाले ध्यानविशेषं विधत्ते । "द्यावापृथिवी सहास्ताम् । ते वियती अब्रूताम् । अस्त्वेव नौ सहयज्ञियमिति । यदमुष्या यज्ञियमासीत् । तदस्यामदधात् । त ऊषा अभवन्' [ २ ] यदस्या यज्ञीयमासीत् । तदमुष्यामदधात् । तददश्चन्द्रमसि कृष्णम् । ऊषान्निवपन्नदो ध्यायेत् । द्यावापृथिव्योरेव यज्ञियेऽग्निमाधत्ते' इति । सृष्टिकाले द्यावापृथिव्यौ मध्यगतान्तरिक्षव्यवधानरहिते अभूतां तदा प्राणिनामवकाशार्थमीश्वरानुज्ञया परस्परवियोगं गते । वियोगकाले च स्नेहातिशयात् परस्परमेवाब्रूताम् । आवयोर्यज्ञयोग्यं यत् सारमस्ति तत् सहैव तिष्ठतु । भूसारस्य दिवो वियोगो माभूत् । द्युसारस्य च भूमेर्वियोगो माभूदिति । ततोऽमुष्या दिवः सम्बन्धि यद्यज्ञियं सारं तदस्यां पृथिव्यां सा द्यौ स्थापयते । ते च द्युलोकसारांशा एते दृश्यमाना भूम्यवयवादूषरूपा अभवन् । तस्यां पृथिव्यां यज्ञियं सारमासीत् । तदमुष्यां दिवि भूमिरस्थापयत् । तच्च स्थापितं भूसारं अदो दृश्यमानं चन्द्रमसि कलङ्करूपं कृष्णं, तस्माद्भूसारत्वादूषाणां निवपनकाले तत् कृष्णरूपमत्र तिष्ठति

इति ध्यायेत्। तथा सति द्युलोकसम्बन्धिन्यूषे भूलोकसम्बन्धिनि कृष्णे चाग्निराहितो भवति।

अथ तृतीयं सम्भारं विधत्ते। "अग्निर्देवेभ्यो निलायत। आखू रूपं कृत्वा। स पृथिवीं प्राविशत्। स ऊतीः कुर्व्वाणः पृथिवीमनुसमचरत्। तदाखुकरीषमभवत् [ ३ ] यदाखुकरीषꣳ सम्भारो भवति। यदेवास्य तत्र न्यक्तम्। तदेवावरुन्धे' इति। अग्निः कदाचित् केनापि निमित्तेन देवेभ्योऽपरक्तः सन् मूषिको भूत्वा तदीयं रूपञ्च सम्पूर्णं कृत्वा निलीनो देवैरदृश्यो भूत्वा, स च पृथिवीं प्रविष्टो बिलानि कुर्व्वाणोऽनुक्रमेण भूमेरन्तरेव समचरत्। यद्बिलनिर्म्माणे निःसारितं पांशुरूपं तदेतदाखुकरीषं, तस्मिन् सम्भृते सति तत्र निगूढं यदग्नेस्तेजस्तत् सर्व्वं प्राप्नोति॥

अथ चतुर्थसम्भारं विधत्ते। "ऊर्जं वा एतꣳ रसं पृथिव्या उपदीका उद्दिहन्ति। यद्वल्मीकं। यद्वल्मीकवपासम्भारो भवति। ऊर्जमेव रसं पृथिव्या अवरुन्धे। अथो श्रोत्रमेव। श्रोत्रꣳ ह्येतत् पृथिव्याः। यद्वल्मीकः' इति॥ ४॥ 'उपदीकाः' पिपीलिकासमाना आर्द्रीकृतमृत्तिकोपचयचमा जन्तवः, ते हि पृथिव्याः सम्बन्धिनमूर्ज्जशब्दाभिधेयं रसं पृथिव्याः सकाशादूर्द्ध्वमानीयोपचिन्वन्ति। तत्सम्भारेण भूसारं प्राप्नोति। अपि च श्रोत्रेन्द्रियसामर्थ्यमपि प्राप्नोति। वल्मीकस्य पृथिवीश्रोत्रत्वात्। एतद्वेदनं प्रशंसति। "अबधिरो भवति। य एवं वेद" इति॥

अथ पञ्चमं सम्भारं विधत्ते । "प्रजापतिः प्रजा असृजत । तासामन्नमुपाक्षीयत । ताभ्यः सूदमुपप्राभिनत् । ततो वै तासामन्नं नाक्षीयत । यस्य सूदः सम्भारो भवति । नास्य गृहेऽन्नं क्षीयते' इति । पुरा कदाचित् प्रजापतिः सृष्टानां प्रजानां यदन्नं तद्भुज्यमानमुपक्षीणमभूत् ततः प्रजार्थं "सूदम्" ग्रीष्मजलप्रदेशावस्थितं कर्द्दममुपानीय प्राभिनत् । तेषु तेषु पृथ्वीप्रदेशेषु पृथक् पृथक् प्रसारितवान् । ततस्तत्र तत्र सस्योत्पत्तौ सत्यां तासां प्रजानामन्नमक्षीणमभूत् । अतस्तत्सम्भारेण गृहेऽन्नमक्षयं भवति ॥

अथ षष्ठं सम्भारं विधत्ते । "आपो वा इदमग्रे सलिलमासीत् । तेन प्रजापतिरश्राम्यत् [ ५ ] कथमिदꣳ स्यादिति । सोऽपश्यत् । पुष्करपर्णं तिष्ठत् । सो ऽमन्यत । अस्ति वै तत् । यस्मिन्निदमधितिष्ठतीति । स वराहो रूपं कृत्वोपन्यमज्जत् । स पृथिवीमध आर्च्छत् । तस्या उपहत्योदमज्जत् । तत् पुष्करपर्णेऽप्रथयत् । यदप्रथयत् [ ६ ] तत् पृथिव्यै पृथिवित्वम् । अभूद्वा इदमिति । तद्भूम्यै भूमित्वम् तां दिशोनु वातः समवहत् । ताꣳ शर्कराभिरदृꣳहत् । शं वै नोऽभूदिति । तच्छर्कराणाꣳ शर्करत्वम् । यद्वराहविहतꣳ सम्भारो भवति । अस्यामेवाछम्बट्कारमग्निमाधत्ते । शर्करा भवन्ति धृत्यै [ ७ ] अथो शन्त्वाय" इति । इदमिदानीं दृश्यमानं गिरिनदीसमुद्रादिकं स्थावरं मनुष्यगवादिकं जङ्गमञ्च सृष्टेः पूर्व्वं ईदृशं नासीत् । किन्तु सलिलं, सलगतौ औणादिक इलच् । इदं दृश्यमानं

जगत् सलिलङ्कारणेन सङ्गतं अविभागापन्नम्। यद्वा 'इमे वै लोकाः सरिरं' इति श्रुतेः। सरिरशब्देन लोका उच्यन्ते। रलयोरभेदात् सलिलरूपमासीत्। तत्राप्याप एव, न तु भूमिस्वरूपम्। तदानीं प्रजापतिस्तेन सिसृक्षितजगन्निमित्तेनाश्राम्यत्। पर्य्यालोचनैरूपं तपोऽकुरुत। कथं नामेदं सर्व्वं जगद्भवेत् इति विचार्य्य तस्य सलिलस्य मध्ये दीर्घनालाग्रेऽवस्थितमेकं पद्मपत्रमपश्यत्। तच्च दृष्ट्वा मनस्येवमतर्कयत्। यस्मिन्नाधार इदं सनालं पद्मपत्रमधिश्रित्य तिष्ठति तद्वस्तु किंचिदधस्तादस्त्येव इति तर्कयित्वा च स प्रजापतिर्वराहो भूत्वा तदीयं रूपं च सम्यक् कृत्वास्य पद्मपत्रनालस्य समीपे जलमध्ये निमग्नोऽभूत्। मग्नश्चासावधस्ताद् भूमिं प्राप्तवान्। तस्या भूमेः सकाशात् कियतीमथार्द्रां मृदं स्वदंष्ट्रया पृथक्कृत्य सलिलस्योपर्य्युन्मज्जनं कृतवान्। तच्च मृद्रूपं तस्मिन् पुष्करपर्णे प्रसारितवान्। यस्मादियं मृत्तिका प्रथिता तस्मात् पृथ्वीनाम सम्पन्नम्। ततः सन्तुष्ट इदं स्थावरजङ्गमाधारभूतं वस्त्वभूदित्युवाच। ततो भवति इति व्युत्पत्त्या भूमिनाम सम्पन्नम्। तामार्द्रभूमिमनु लक्ष्य शोषयितुञ्चतस्रो दिशोऽप्यनुप्रजापतिसङ्कल्पाद्वायुः सम्प्रवृत्तः। शुष्यन्तीं तां भूमिं स प्रजापतिः शर्कराभिःक्षुद्रपाषाणैर्दृढीचकार। कृत्वा च 'नोऽस्माकं शं सुखमभू'दित्युवाच। तस्मात् कारणाच्छं सुखं कृतमाभिरिति व्युत्पत्त्या शर्करेति नाम सम्पन्नम्। यस्माद्वराहेणानीताया मृदः ईदृशो महिमा, तस्माद्वराहेण भूमौ विहितं खनितं अस्यां मृत्स्वरूपं सम्भर-

णीयं, तथा सत्यां भूम्यामेव वैयर्थ्यं यथा न भवति तथाग्नि-माधत्ते। यस्माच्छर्कराभिर्भूमिर्दृढीकृता तस्मादत्रापि 'धृत्यै' दार्ढ्याय शर्करा प्रक्षेप्तव्या। अथो अपि च 'शन्त्वाय' सुखसिद्ध्ये शर्कराः कार्य्याः॥

अथ सप्तमं सम्भारं विधत्ते। "सरेता अग्निराधेय इत्याहुः। आपो वरुणस्य पत्नय आसन्। ता अग्निरभ्यध्यायत्। ताः सम-भवन्। तस्य रेतः परापतत्। तद्धिरण्यमभवत्। यद्धिरण्यमु-पास्यति। सरेतसमेवाग्निमाधत्ते' इति। या अब्देवता वरु-णस्य भार्य्याः ताः कामुकोऽग्निर्ध्यात्वा सम्भोगं कृतवान्। त-दानीं च्युतस्य तस्य रेतो भूमौ पतित्वा हिरण्यमभूत्। अतोऽत्र हिरण्ये प्रक्षिप्ते सति सरेतस्कोऽग्निराहितो भवति। एतस्य हिरण्यस्य प्रक्षेपस्थानं विधत्ते।

"पुरुष इन्वैस्वाद्रेतसो बीभत्सत इत्याहुः' [८] उत्त-रत उपास्यत्यबीभत्सायै' इति। इन्वा इति निपातद्वयं मि-लित्वा प्रसिद्धिमाचष्टे। लोके सर्व्वोऽपि पुरुषः स्वकीयं रेतो हस्तेन स्पृष्टं जुगुप्सते। तदेतत् प्रसिद्धमित्यभिज्ञा आहुः। त-स्मादत्राग्निस्थापनप्रदेशं विहायोत्तरस्मिन् पार्श्वे हिरण्यं प्रक्षि-पेत्। तच्चाबीभत्सायै सम्पद्यते। यदुक्तं सूत्रकारेण। "द्वेष्याय रजतं प्रयच्छति" इति।

तदिदं विधत्ते। "अति प्रयच्छति। आर्त्तिमेवातिप्रय-च्छति" इति। देवयजने प्रक्षिप्तं सुवर्णं अतिक्रम्यान्यद्रजतं प्रय-च्छेत्। तथा सति स्वात्मानमतिक्रम्यान्यस्मै द्वेष्याय स्वकीयामा-

र्त्तिं दत्तवान् भवति। तदेवं पार्थिवाः सम्भारा अभिहिताः।

अथ वानस्पत्येषु सप्तसु सम्भारेषु प्रथमं सम्भारं विधत्ते। "अग्निर्देवेभ्यो निलायत। अश्वो रूपं कृत्वा। सोऽश्वत्थे संवत्सरमतिष्ठत्। तदश्वत्थस्याश्वत्थत्वम्। यदाऽश्वत्थः सम्भारो भवति। यदेवास्य तत्र न्यक्तम्। तदेवावरुन्धे' इति॥ कदाचिदग्निर्देवेभ्योऽपक्रम्याश्वो भूत्वा तदीयं रूपं सम्यक् अश्वत्थवृक्षे निरूढः संवत्सरमात्रमतिष्ठत्। अश्वस्तिष्ठत्यस्मिन्निति व्युत्पत्त्या तस्य वृक्षस्याश्वत्थनाम सम्पन्नम्। तस्मादश्वत्थसम्भारेण तत्र निगूढमग्नेस्तेजः प्राप्नोति॥

द्वितीयं सम्भारं विधत्ते। "देवा वा ऊर्ज्जं व्यभजन्त। तत उदुम्बर उदतिष्ठत्। ऊर्ग्वा उदुम्बरः। यदौदुम्बरः सम्भारो भवति। ऊर्जमेवावरुन्धे" इति। देवाः सर्व्वे कदाचिदत्रोपविश्यान्नरसं विभक्तवन्तः। तदा तस्मिं स्थाने पतितादन्नरसात् उदुम्बरवृक्ष उदतिष्ठत्। तस्मादन्नरसस्यैवोदुम्बरत्वात् तत्सम्भारेणान्नरसम्प्राप्नोत्येव।

अथ तृतीयं सम्भारं विधत्ते। "तृतीयस्यामितो दिवि सोम आसीत्। तं गायत्र्याऽहरत्। तस्य पर्णमच्छिद्यत। तत्पर्णोऽभवत्। तत्पर्णस्य पर्णत्वम् [१०] 'यस्य पर्णमयः सम्भारो भवति। सोमपीथमेवावरुन्धे' इति। इतो भूलोकादारभ्यागणनायामन्तरिक्षमतिक्रम्य परतो वर्त्तमाना या द्यौः तृतीया तस्यां सोमवल्ली स्थिता। तञ्च सोमं गायत्री देवता, तत्रत्यैः सोमरक्षकैः सह युद्धं कृत्वा समाहरत्।

अयञ्च वृत्तान्तः कद्रूश्च वै सुपर्णी चेत्यनुवाके प्रपञ्चितः । सद्दषा समानीयमानस्य तस्य सोमस्यैकं पर्णं छिन्नं सद्भूमौ पतित्वा पलाशवृक्षोऽभवत् । पर्णजन्यत्वात् तस्य वृक्षस्य पर्ण नाम सम्पन्नम् । सोमजन्यस्य तस्य सम्भरणेन सोमपानमेव प्राप्नोति ॥

पुनरपि तमेव सम्भारं प्रशंसति । "देवा वै ब्रह्मन्नवदन्त । तत्पर्ण उपाशृणोत् । सुश्रवा वै नाम । यत्पर्णमयः सम्भारो भवति । ब्रह्मवर्चसमेवावरुन्धे' इति । देवाः कचिदेकान्ते पलाशवृक्षच्छायायामुपविश्य परस्मिन् ब्रह्मणि संवादं कृतवन्तः । तत् सर्व्वं समीपे स्थितः पलाशवृक्षोऽशृणोत् । शोभनं वस्तु श्रुतवान् इति व्युत्पत्त्या सुश्रवा इति तस्य नाम सम्पन्नम् । तस्मात् परं ब्रह्म श्रुतवतो वृक्षस्य सम्भरणेन ब्रह्मवर्चसमेव प्राप्नोति ॥

अथ चतुर्थं सम्भारं विधत्ते । "प्रजापतिरग्निमसृजत । सोऽबिभेत्प्रमाधक्ष्यतीति । तꣳ शम्याऽशमयत् [ ११ ] 'तच्छम्यै शमित्वम् । यच्छमीमयः सम्भारो भवति । शान्त्या अप्रदाहाय" इति । प्रजापतिरग्निं सृष्ट्वा मामयमग्निः प्रधक्ष्यतीति भीतः शमीशाखया ज्वालामशमयत् । शमयत्यनेनेति व्युत्पत्त्या शमीति नाम सम्पन्नम् । अतस्तत्सम्भारः पूर्व्वं विद्यमानस्य दाहस्य उपशान्त्यै । इतः परमदाहाय च सम्पद्यते ॥

अथ पञ्चमं सम्भारं विधत्ते । "अग्नेः सृष्टस्य यतः । विकङ्कतं भा आर्च्छत् । यद्वैकङ्कतः सम्भारो भवति । भा एवावरुन्धे' इति । प्रजापतिना सृष्टोऽग्निस्त्वरया गच्छन् विकङ्कतवृक्ष-

मपश्यत्, तदा तदीयं तेजो वृत्तं प्राप्नोत्। अतस्तत्सम्भारे सति सा एव दीप्तिरेवावरुन्धे।

अथ षष्ठं सम्भारं विधत्ते। "सहृदयोऽग्निराधेय इत्याहुः। मरुतोऽद्भिरग्निमतमयन्। तस्य तान्तस्य हृदयमाच्छिन्दन्। साशनिरभवत्। यदशनिहतस्य वृत्तस्य सम्भारो भवति। सहृदयमेवाग्निमाधत्ते" इति। मरुतः कदाचिदग्निना सह विरोधे सति तमग्निमद्भिरशक्तिमजनयन्नित्यर्थः। 'अतमयन्' ग्लानिं प्रापयन्। ततो निःशक्तेरग्नेर्हृदयमाच्छिन्दन्। तस्य हृदयमशनिरूपेणोदभूत्। तस्मादशनिहतस्य वृत्तस्य सम्भारेण सहृदयोऽग्निराहितो भवति॥ १२॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुर्ब्राह्मणे आद्यकाण्डे प्रथमप्रपाठके तृतीयोऽनुवाकः॥ ३॥

## अथ चतुर्थोऽनुवाकः।

तृतीये देवयजनदेशे प्रक्षेप्तव्याः सम्भारा उक्ताः, अथ चतुर्थे तैः सम्भारैर्युक्तेष्वायतनेषु वह्न्याधानमभिधीयते। यदुक्तं सूत्रकारेण। "प्राचीनप्रवणं देवयजनमुद्धत्य तस्मिन्नुदीचीनवंशं शरणं करोति। तस्याग्रेण मध्यमं वंशं गार्हपत्यायतनं भवति। तस्मात् प्राचीनमष्टासु प्रक्रमेषु ब्राह्मणस्याहवनीयायतनमेकादशसु राजन्यस्य द्वादशसु वैश्यस्य चतुर्विंशत्यामपरिमिते वा यावता वा चक्षुषा मन्यते। तस्मान्नातिदूरमाधेय इति सर्व्वेषामविशेषेण श्रूयत इति"॥

तत्रैकं पक्षं विधत्ते। "द्वादशसु विक्रामेष्वग्निमादधीत। द्वादशमासाः संवत्सरः। संवत्सरादेवैनमवरुध्याधत्ते" इति। विक्रामः प्रक्रमः। स च द्विविधः। तथाचोक्तम्। "प्रक्रमो द्विपदस्त्रिपदो वा" इति। गार्हपत्याद् द्वादशसु विक्रामेषु समाप्तेषु आहवनीयायतनं कृत्वा तत्राग्निमादध्यात्। सङ्ख्यासाम्येन मासद्वारा संवत्सरबलादेनमग्निमवरुध्य आधानङ्कृतवान्॥

पक्षान्तरं विधत्ते। "यद्वादशसु विक्रामेष्वादधीत। परिमितमवरुन्धीत। चक्षुर्निमित आदधीत। इयद्वादश विक्रामा३ इति। परिमितञ्चैवापरिमितञ्चावरुन्धे" इति। द्वादशसु विक्रामेष्वाधाने सति देशस्य पादेन परिमितत्वात् फलमपि परिमितमेव भवति। तस्माद्देशो न पादेन परिमातव्यः, किन्तु चक्षुषा दृष्ट्वा प्रायेणैतावान् देशो द्वादशविक्रामः सम्भवतीति निश्चयित्वादादधीत। एवं सति पादेन परिमितत्वाभावान्न परिमितदोषो भविष्यति। चक्षुषा परिमितत्वात् तदीयगुणश्च भवति॥

चाक्षुषनिश्चयद्योतनार्था श्रुतिः। इममेव पक्षं पुनः प्रशंसति। "अनृतं वै वाचा वदति। अनृतं मनसा ध्यायति [१] चक्षुर्वै सत्यम्। अद्रा३गित्याह। अदर्शमिति। तत्सत्यम्। यश्चक्षुर्निमितेऽग्निमाधत्ते। सत्य एवैनमाधत्ते" इति। वाङ्मनसयोरनृतविषयत्वमपि क्वचित् दृष्टम्। चक्षुस्तु पुरोवर्त्तिवस्तुनो याथार्थ्यमेव पश्यतीति तत् सत्यस्वरूपम्। अतएव लोकेऽपि दूरदेशवृत्तान्तं पुरुषमुखादाकर्ण्य किन्त्वमेव दृष्टवान् वृत्ता-

न्तमसीत्येवं सत्यत्वनिश्चयाय पृच्छन्ति। विचारार्थे स्रुतिः। सोऽप्यहमेव दृष्टवानस्मीति यदा ब्रूते तदा तत्सत्यमिति निश्चिन्वन्ति। तस्माच्चक्षुर्निमितस्य सत्यत्वात् सत्यदेशेऽग्निराहितो भवति। यत्तु लोके शुक्तिरजतादिदर्शनं तच्च काचकामलादिदोषकृतमिति न कदाचिदपि चक्षुः सत्यं व्यभिचरति॥

इदानीं प्रसङ्गादाहिताग्नेः कञ्चिद्धर्मं दर्शयति। "तस्मादाहिताग्निर्नानृतं वदेत्। नास्य ब्राह्मणो नाश्वान् गृहे वसेत्। सत्ये ह्यस्याग्निराहितः" इति। यस्माच्चक्षुर्निमितत्वेन सत्यभूते देशेऽयमग्निराहितस्तस्मादाहिताग्निः सत्यमेव वदेत्। नत्वनृतम्। सत्यानृतयोरेकत्र विरोधात्। गृहस्थस्य गृहे ब्राह्मणस्यानश्नतो यो निवासः सोऽप्यनृतसमानः, तस्मात्तं ब्राह्मणं भोजयेदेव।

देशविशेषं विधाय कालविशेषं विधत्ते। "आग्नेयी वै रात्रिः [२] आग्नेयाः पशवः। ऐन्द्रमहः। नक्तं गा र्हपत्यमादधाति। पशूनेवावरुन्धे। दिवाहवनीयम्। इन्द्रियमेवावरुन्धे" इति। रात्रावग्नेः प्रकाशाधिक्याद्रात्रिराग्नेयी। एतच्चाग्निहोत्रब्राह्मण उपपादितम्। "अग्निं वा आदित्यः सायं प्रविशति। तस्मादग्निर्दूरान्नक्तं ददृशे" इति। अग्नेः पशुप्रदत्वात् पशूनामाग्नेयत्वम्। एतच्चाग्न्युपस्थानब्राह्मणे देवैरभिहितम्। "इममेवाग्निꣳ स्तवाम स नः स्तुतः पशून् पुनर्दास्यति" इति। तेऽग्निमस्तुवन् स एभ्यः स्तुतो रात्रिया अध्यहरभि पशून् निरार्जदिति। एवमिन्द्रस्याहःसम्बन्धो ब्राह्मणान्तराद् द्रष्टव्यः। तस्माद्रात्रो गार्हपत्याधानेन पशून् प्राप्नोति अहन्याहवनीयाधानेन इन्द्रियं प्राप्नोति॥

अहन्यपि विशेषं विधत्ते। "अर्धोदिते सूर्य्यआहवनीय-माादधाति । एतस्मिन् वै लोके प्रजापतिः प्रजा असृजत । प्रजा एव तद्यजमानः सृजते। अथो भूतञ्चैव भविष्यच्चावरुन्धे" [३] इति। लोक्यतेऽवगम्यते इति व्युत्पत्त्या लोकशब्दः काल-परः। अर्द्धोदयकाले प्रजानां सृष्टत्वात् तत्राधानं प्रजार्थं भवति। अपि च उदयस्यासम्पूर्णत्वात् भूतमतीतं रात्रिरूपञ्च भविष्यदागाम्यहश्चेत्युभयं प्राप्तं भवति॥

अथाधातव्यानामग्नीनां क्रमं निर्णेतुमाहवनीयस्य प्राथम्यं निराचष्टे।"इडा वै मानवी यज्ञानुकाशिन्यासीत्। साऽशृणोत्। असुराअग्निमादधतइति। तदगच्छत्। त आहवनीयमग्र आ-दधत। अथ गार्हपत्यम्। अथान्वाहार्य्यपचनम्। साऽब्रवीत्। प्र-तीच्येषाꣳ श्रीरगात्। भद्रा भूत्वा पराभविष्यन्तीति [४] यस्यैवमग्निराधीयते। प्रतीच्यस्य श्रीरेति। भद्रो भूत्वा पराभ-वति" इति। इडानाम गोरूपा काचिद्देवता। सा च मनु-सम्बन्धिनी। तत्सम्बन्धश्च मानवी घृतपदी मैत्रावरुणीति इडो-पाकानस्य ब्राह्मणे स्पष्टमाम्नातम्। मानवीत्याह मनुर्ह्येतामग्रे-ऽपश्यदिति। सा चेडा 'यज्ञानुकाशिनी' यज्ञतत्त्वप्रकाशनसमर्था आसीत्। सा कदाचिदसुराणामग्न्याधानवार्त्तां श्रुत्वा द्रष्टुं गता। दृष्ट्वा मनोः पार्श्वे समागत्यैवमुवाच "असुराः प्रथमं पूर्व्वदिगवस्थितमाहवनीयमाधाय ततः पश्चिमदिगवस्थितं गा-र्हपत्यमाहितवन्तः। अनन्तरं दक्षिणाग्निम्। तथा चाधानसुकृतेन किञ्चित्कालं धनिका भूत्वा पश्चाद्विनाशं प्राप्स्यन्ति। एतेषां प-

श्चिमाभिमुखत्वेन प्रवृत्तत्वादेतेषां श्रीरपि प्रतीची प्रतिकूलगमना सती तेभ्योऽसुरेभ्यो निवर्त्तयिष्यते" इति ॥ अतोऽसुरवदिदानीन्तनस्य आहिताग्नेरपि अन्ते पराभवो भवति।

अथान्वाहार्य्यपचनस्य प्राथम्यं निराचष्टे। "साऽमृणोत्। देवा अग्निमादधत इति । तदगच्छत्। तेऽन्वाहार्य्यपचनमग्र आदधत। अथ गार्हपत्यम् अथाहवनीयम्। साऽब्रवीत् [५] प्राचेषाꣳ श्रीरगात् । भद्रा भूत्वा सुवर्गं लोकमेष्यन्ति। प्रजान्तु न वेत्स्यन्त इति। यस्यैवमग्निराधीयते। प्राच्यस्य श्रीरेति। भद्रो भूत्वा सुवर्गं लोकमेति। प्रजान्तु न विन्दते" इति। पूर्व्ववद्व्याख्येयम्। अत्र गार्हपत्यादूर्द्धं प्राङ्मुखप्रवृत्तेर्देवानां श्रीरपि प्राचीं प्रवृत्ता। प्रकृष्टं पूर्व्वदिगवस्थितं स्वर्गं अञ्चति गच्छतीति प्राची। तस्माद्देवानां स्वर्गप्राप्तिर्भविष्यति किन्तु प्रजाहेतोर्गार्हपत्यस्य पूर्व्वमाधानाभावात् प्रजां न लप्स्यन्ते। एवं तादृगाधानकर्त्तरि यजमानेऽपि द्रष्टव्यम्॥

अथ गार्हपत्यस्य प्राथम्यं विधत्ते। "साब्रवीदिडा मनुम्। तथा वा अहं तवाग्निमाधास्यामि। यथा प्रप्रजया पशुभिर्मिथुनैर्जनिष्यसे [६] प्रत्यस्मिँल्लोके स्थास्यसि। अभि सुवर्गं लोकं जेष्यसीति। गार्हपत्यमग्र आदधात्। गार्हपत्यं वा अनु प्रजाः पशवः प्रजायन्ते। गार्हपत्येनैवास्मै प्रजां पशून् प्राजनयत्। अथान्वाहार्य्यपचनं। तिर्य्यङ्ङिव वा अयं लोकः। अस्मिन्नेव तेन लोके प्रत्यतिष्ठत्। अथाहवनीयम्। तेनैव सुवर्गं लोकमभ्यजयत् [७] यस्यैवमग्निराधीयते । सप्रजया पशुभिर्मिथुनैर्जायते ।

प्रत्यस्मिंल्लोके तिष्ठति । अभि सुवर्गं लोकं जयति'' इति । गार्ह-
पत्यस्य प्रजापशुस्वामित्वात् तस्य प्रथमाधानेन तत्प्राप्तिः । गा-
र्हपत्यस्य दक्षिणभागे स्थितो योऽयमन्वाहार्य्यपचनः तस्य ति-
र्य्यक्त्वेन वर्त्तमानस्य ऊर्द्धगमनाभावेन मनुष्यलोकसदृशत्वात्
तदाधानेन मनुष्यलोके प्रतिष्ठा तत ऊर्द्धमाहवनीयाधानाय
प्राङ्मुखप्रवृत्तेः स्वर्गस्य च प्राग्वर्त्तित्वात् तत्प्राप्तिः ॥

अथाधिकारिभेदेनाधानमन्त्रविशेषान् विधत्ते । "यस्य वा
अयथादेवतमग्निराधीयते । आ देवताभ्यो वृश्च्यते । पापीयान्
भवति । यस्य यथादेवतम् । न देवताभ्य आवृश्च्यते । वसीयान्
भवति । भृगूणां त्वाङ्गिरसां व्रतपते व्रतेनादधामीति भृग्व-
ङ्गिरसामादध्यात् । आदित्यानां त्वा देवानां व्रतपते व्रते-
नादधामीत्यन्यासां ब्राह्मणीनां प्रजानाम् । वरुणस्य त्वा राज्ञो
व्रतपते व्रतेनादधामीति राज्ञः । इन्द्रस्य त्वेन्द्रियेण व्रतपते
व्रतेनादधामीति राजन्यस्य । मनोस्त्वा ग्रामण्यो व्रतपते व्रते-
नादधामीति वैश्यस्य । ऋभूणां त्वा देवानां व्रतपते व्रतेनाद-
धामीति रथकारस्य । यथादेवतमग्निराधीयते । न देवताभ्य-
आवृश्च्यते । वसीयान् भवति''इति [८] यस्य पुरुषस्य याभिमा-
निनी देवता तामनतिक्रम्याधानं तस्य पुरुषस्याधानं यथादेव-
तमाधानमित्युच्यते । तदतिक्रमे सति देवताद्रोहो दारिद्र्यञ्च
भवति । अनतिक्रमे तु देवताप्रसादो धनसम्पत्तिश्च भवति ।
ये मनुष्या भृगुगोत्रोत्पन्ना ये चाङ्गिरसगोत्रोत्पन्नाः* तेषामु-

* अङ्गिरोगोत्रोत्पन्नाः इति B पुस्तकपाठः ।

भयेषां तत्प्रतिपादकेन 'भृगूणाम्' इति मन्त्रेणाधानम्। "हे व्रतपते" कर्म्मस्वामिन्नग्ने भृगूणामङ्गिरसांश्च सम्बन्धिना "व्रतेन" कर्म्मविशेषेण निमित्तभूतेन "त्वामादधामि" इहायतने स्थापयामीति मन्त्रार्थः। एवमुत्तरत्रापि योज्यम्। गोत्रान्तर्गतानां ब्राह्मणानामादित्या एव देवताः। अभिषिक्तस्य राज्ञो वरुणो देवता इतरस्य क्षत्रियस्य इन्द्रो देवता। "इन्द्रियेण व्रतेन" इन्द्रियाभिवृद्धिहेतुना कर्म्मणेत्यर्थः। वैश्यस्य ग्रामनिर्व्वाहको मनुर्देवता। "रथकारः" अनुलोमजः सङ्कीर्णजातिः। तस्य ऋभवो देवता। एतैर्मन्त्रैर्यथादेवतमाधानं सम्पद्यते॥

अत्र मीमांसा षष्ठाध्यायस्य प्रथमपादे चिन्तितम्।

"विप्रादिर्नैव रथकृदन्यो वायस्तु योगतः।
रूढेर्वर्णान्तरं तस्याधाने वर्षर्त्तुरुच्यते"॥

आधाने श्रूयते। "वर्षासु रथकार आदधीत" इति। तत्र रथं करोतीति व्युत्पत्त्या त्रैवर्णिको रथकार इति चेत्। मैवम्। सङ्कीर्णजातिविशेषे रूढत्वात्। वैश्यायां क्षत्रियादुत्पन्नो माहिष्यः। शूद्रायां वैश्यादुत्पन्ना करणी। तस्यां करण्यां माहिष्यादुत्पन्नो रथकारः। तथा च याज्ञवल्क्यः।

"माहिष्येण करण्यां तु रथकारः प्रजायते" इति॥

तस्य च रथकारस्याधानकालो वर्षर्त्तुः॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे आद्यकाण्डे प्रथमप्रपाठके चतुर्थोऽनुवाकः॥ ४ ॥

## अथ पञ्चमोऽनुवाकः ।

चतुर्थे त्रयाणामाहवनीयादीनामाधानमुक्तं, पञ्चमे तत्रैव कञ्चिद्विशेषं पवमानहवींषि चाभिदधाति ।

तत्रादौ व्याहृतिमन्त्रान् विधत्ते । "प्रजापतिर्वाचः सत्यमपश्यत् । तेनाग्निमाधत्त । तेन वै स आर्ध्नोत् । भूर्भुवः सुवरित्याह । एतद्वै वाचः सत्यम् । य एतेनाग्निमाधत्ते । ऋध्नोत्येव । अथो सत्यप्राशूरेव भवति । अथो य एवं विद्वानभिचरति । स्तृणुत एवैनम्" [१]इति । वाचः सम्बन्धि यत् सत्यं अवश्यम्भावि फलसाधनं मन्त्ररूपं तच्छास्त्रमुखेन दृष्ट्वा प्रजापतिस्तेनाग्निमाधाय समृद्धोऽभूत् । "किं तत्सत्यम्" इति पृच्छद्भ्यः शिष्येभ्यो "भूर्भुवः सुवः" इति मन्त्रस्वरूपं प्राह । एतस्य वाक्सम्बन्धि सत्यत्वात् एतेनाग्निमादधानः समृद्धो भवति । अपि चासौ सत्यप्राशूर्भवत्येव । प्रकर्षेणाश्नुते व्याप्यतेऽभिमतमनेनेति प्राशूः पराक्रमः । सत्यः कदाचिदप्यविसंवादी प्राशूः, अपि च एवं व्याहृतिमहिमानं विद्वान् शत्रुं मारयितुमभिचरन्नेनं हिनस्त्येव ॥

सामर्थ्यप्रदर्शनेन व्याहृतित्रयं प्रशंसति । "भूरित्याह । प्रजा एव तद्यजमानः सृजते । भुवइत्याह । अस्मिन्नेव लोके प्रतितिष्ठति । सुवरित्याह । सुवर्गएव लोके प्रतितिष्ठति" इति । योऽयं भूरिति मन्त्रमुच्चारयति असौ तन्मन्त्रसामर्थ्येन प्रजाः पुत्रपौत्रादिका उत्पादयति । एवमुत्तरयोरपि योज्यम् ।

सामान्येन विहितं व्याहृतित्रयं पुनर्विशेषाकारेण विधत्ते ।

त्रिभिरक्षरैर्गार्हपत्यमादधाति। त्रय इमे लोकाः। एष्वेवैनं लोकेषु प्रतिष्ठितमाधत्ते। सर्व्वैः पञ्चभिराहवनीयम् [२] सुवर्गाय वा एष लोकायाधीयते। यदाहवनीयः। सुवर्ग एवास्मै लोके वाचः सत्यꣳ सर्व्वमाप्नोति" इति। भूर्भुव इत्येतानि त्रीण्यक्षराणि तैराधीयमानः त्रित्वसाम्याल्लोकत्रये प्रतिष्ठितोऽग्निराहितो भवति। भूर्भुवः सुवरिति पञ्चाक्षराणि तैराधीयमानस्याहवनीयस्य स्वर्गार्थत्वात् स्वर्गे वाक्सम्बन्धि कृत्स्नं सत्यमस्मै प्राप्नोति॥

अथ तत् त्रयं पञ्चकं च मिलित्वा प्रशंसति। "त्रिभिर्गार्हपत्यमादधाति। पञ्चभिराहवनीयम्। अष्टौ सम्पद्यन्ते। अष्टाक्षरा गायत्री। गायत्रोऽग्निः। यावानेवाग्निः। तमाधत्ते" इति [३] अग्नेर्मुखजत्वेन गायत्रीसम्बन्धित्वम्। यदुक्तं सूत्रकारेण "गार्हपत्ये प्रणयनीयमाश्वत्थमिध्ममादीपयति सिकताश्चोपयमनीरुपकल्पयते तमुद्यच्छति" इति॥

तदेतद्विधत्ते। "प्रजापतिः प्रजा असृजत। ता अस्मात् सृष्टाः पराचीरायन्। ताभ्यो ज्योतिरुदगृह्णात्। तं ज्योतिः पश्यन्तीः प्रजा अभिसमावर्त्तन्त। उपरीवाग्निमुद्गृह्णीयादुद्धरन्। ज्योतिरेव पश्यन्तीः प्रजा यजमानमभिसमावर्त्तन्ते" इति। प्रजापतिना सृष्टाः प्रजाः 'पराञ्चः' पुनरावृत्तिरहिता यदा गताः तदा प्रजापतिः ताभ्यो ज्योतिरुदगृह्णात्। अन्धकारे पलायमानानां प्रजानां दर्शनार्थं किञ्चिद्दीपमूर्द्ध्वमुद्धृतवान्। ताश्च प्रजा ज्योतिर्दृष्ट्वा तं प्रजापतिमभिलक्ष्य समावृताः। अतो गार्हपत्या-

दाहवनीयं प्रत्यग्निमुद्धरन् ऊर्द्धमेव गृह्णीयात् न त्वधो धारयेत्। तेन सर्व्वाः प्रजाः ज्योतिः पश्यन्त्यो यजमानं प्रत्यावर्त्तन्ते। यदुक्तं सूत्रकारेण "प्राञ्चोऽश्वाः प्रथमा अभिप्रव्रजन्ति" इति॥

तदेतद्विधत्ते। "प्रजापतेरक्ष्यश्वयत्। तत्परापतत्। तदश्वोऽभवत्। तदश्वस्याश्वत्वम् [४] एष वै प्रजापतिः। यदग्निः। प्राजापत्योऽश्वः। यदश्वं पुरस्तान्नयति। स्वमेव चक्षुः पश्यन् प्रजापतिरनूदेति" इति। पुरा कदाचित् प्रजापतेरक्षिगोलकं केनापि व्याधिनोच्छूनं भूत्वा भूमौ पतितं सदश्वरूपेणोद्भूत्। अश्वयदयमिति व्युत्पत्त्या तस्याश्वनाम सम्पन्नम्। अग्निश्च प्रजापतिसृष्टत्वात् प्रजापतिरेव। अश्वस्योक्तरीत्या प्राजापत्यः। तस्मादाहवनीयं प्रति गच्छन्नश्वं पुरस्तान्नयेत्। तथा सति स्वकीयमेव चक्षुः पश्यन् प्रजापतिरूपोऽग्निरनुगच्छति।

एतदेवाश्वस्य पुरोगमनं पुनः प्रशंसति। "वज्री वा एषः। यदश्वः। यदश्वं पुरस्तान्नयति। जातानेव भ्रातृव्यान् प्रणुदते" इति। वज्रिवद्युद्धे विनाशहेतुत्वादश्वो वज्री। स च पुरस्तान्नीयमानः यजमानस्य पूर्व्वमुत्पन्नान् भ्रातृव्यान् विनाशयति। वज्रसमानदन्तोपेतत्वाद्वास्य वज्रित्वम्। एतदेवाभिप्रेत्याग्निब्राह्मणे समाम्नातम्। "वज्री वा एष यदश्वो दद्भिरन्यतो दद्भ्यो भूयान्" इति॥

आहवनीयपर्य्यन्तं नीतस्याश्वस्य तेनैव पथा पुनरावृत्तिं विधत्ते। "पुनरावर्त्तयति [५] जनिष्यमाणानेव प्रतिनुदते" इति।

आहवनीयात् पुनरावृत्त्या भविष्यतः शत्रून् प्रतिबध्नाति। यदुक्तं सूत्रकारेण "पूर्व्ववाडश्वो भवति" इति॥

तदिदं विधत्ते। "न्याहवनीयो गार्हपत्यमकामयत। नि गार्हपत्य आहवनीयम्। तौ विभाजं नाशक्नोत्। सोऽश्वः पूर्व्ववाड् भूत्वा। प्राञ्चं पूर्व्वमुदवहत्। तत्पूर्व्ववाहः पूर्व्ववाट्त्वम्। यदश्वं पुरस्तान्नयति। विभक्तिरेवैनयोः सा। अथो नानावीर्य्यावेवैनौ कुरुत" इति [६] पुरा कदाचिदाहवनीयो "गार्हपत्यं नितरामकामयत" गार्हपत्यधर्म्मं धृतवानित्यर्थः। गार्हपत्यश्च नितरामाहवनीयधर्म्मं धृतवान्। ततः तौ उभावग्नी सङ्कीर्णधर्म्मतया प्रजापतिर्विभाजं विभक्तुं नाशक्नोत्। ततस्तद्विभागाय स्वयं पूर्व्ववाडश्वो भूत्वा धर्म्मसाङ्कर्य्यं परिहृत्य "प्राञ्चं" प्राग्देशनिवासयोग्यं आहवनीयं पूर्व्वमुदवहत्। पूर्व्वदेशं प्रत्युद्धृत्य नीतवान्। पूर्व्ववाडित्यश्वविशेषः। सेनामध्ये इतरेभ्योऽश्वेभ्यः पूर्व्वं वहतीति वा पूर्व्वस्मिन् वयस्यत्यन्तबाल एव वहतीति वा पूर्व्ववाट्। अतस्तादृशमश्वमत्र पुरस्तान्नयेत्। तस्य च विभागक्षमत्वात् "एनयोः" अग्न्योः सैव "विभक्ति" र्विभागः। पूर्व्वदेशेऽवस्थितः* आहवनीयः पश्चिमदेशेऽवस्थितो गार्हपत्य इति विभागः। अपि च धर्म्मसाङ्कर्य्यपरिहारादेनावुभावग्नी भिन्नवीर्य्यावेव करोति। पत्नीसंयाजहोमाधारत्वलक्षणं वीर्य्यं गार्हपत्यस्यैव। आग्नेयादिहविराधारत्वलक्षणमाहवनीयस्यैव। यदुक्तं सूत्रकारेण "न कर्णदघ्नमित्युद्गृह्णाति"॥

---

* अत्र पूर्वदेशेस्मिन्निति वा पाठः।

तदिदं विधत्ते। "यदुपर्य्युपरि शिरो हरेत्। प्राणान् विच्छिन्द्यात्। अधोधः शिरो हरति। प्राणानां गोपीथाय" इति। हस्तेनोद्धृत्याहवनीयं प्रति नीयमानमग्निं "शिर उपर्य्युपरि" शिरःसमीपवर्त्तिन्यूर्द्ध्वभागे यदि धृत्वा विच्छिद्य हरेत् तदा प्राणान् विच्छिन्देरन्। अतः प्राणरक्षणाय शिरसः समीपवर्त्तिन्यधःप्रदेशे धृत्वा नयेत्। यदुक्तं सूत्रकारेण "जानुदघ्ने धारयमाणस्तृतीयमध्वनोऽग्निꣳ हरति नाभिदघ्ने तृतीयमास्यदघ्ने तृतीयम्" इति॥

तदेतदङ्गुल्याभिनयन् विधत्ते। "इयत्यग्रे हरति। अथेयत्यथेयति। त्रय इमे लोकाः। एष्वेवैनं लोकेषु प्रतिष्ठितमाधत्ते" इति। जानुदघ्ने इव नाभिदघ्नास्यदघ्नयोरपि॥

एतस्मादग्निप्रणयनात् पूर्व्वमग्नेर्विभागं विधत्ते। "प्रजापतिरग्निमसृजत। सोऽबिभेत् प्र मा धक्ष्यतीति [७] तस्य त्रेधा महिमानं व्यौहत्। शान्त्या अप्रदाहाय। यत् त्रेधाग्निराधीयते। महिमानमेवास्य तद्व्यूहति। शान्त्या अप्रदाहाय" इति। अग्निं सृष्ट्वा तदीयदाहात् बिभ्यत् प्रजापतिस्तदीयसामर्थ्यं त्रेधा व्यभजत्। सोऽयं विभागो ज्वालायाः शान्त्यै स्वविषये दाहाभावाय च सम्पन्नः। एवमत्राधिकृतरपि गार्हपत्यादग्नेरेकं भागं आहवनीयार्थमपरं भागं दक्षिणाग्न्यर्थं च विभज्य शान्त्यर्थमप्रदाहार्थं च त्रेधा कुर्य्यात्॥

तत्राहवनीयार्थस्याग्नेराहवनीयायतनं विधत्ते। "पुनरावर्त्तयति। महिमानमेवास्य सन्दधाति" इति। विभागेन योऽग्ने-

र्महिमा शान्तस्तं माहमानं पुनः मन्थातुं विभक्तमाहवनीय-माहवनीयायतने स्थापयेत् ॥

तत्र स्थापने किञ्चिद्विशेषं विधत्ते ।"पशुर्वा एषः। यदश्वः । एष रुद्रः [८] यदग्निः। यदश्वस्य पदेऽग्निमादध्यात्। रुद्राय पशूनपि दध्यात्। अपशुर्यजमानः स्यात्। यन्नाक्रमयेत्। अ-नवरुद्धा अस्य पशवः स्युः । पार्श्वत आक्रमयेत्। यथाहितस्याग्ने-रङ्गारा अभ्यववर्त्तेरन् । अवरुद्धा अस्य पशवो भवन्ति । न रु-द्रायापिदधाति"इति [९] अत्रेदं चिन्त्यते । पुरस्तादानीतमश्वं किमाहवनीयायतनमाक्रमयेन्न वेति। उभयमप्येतदनुपपन्नम्। अश्वस्य पशुत्वात्। अग्नेः क्रूरदेवत्वाच्च। अश्वपदलाञ्छिते प्र-देशेऽग्निस्थापने सति क्रूरदेवाय पशून् समर्पयेत्। ततो यज-मानः पशुरहितः स्यात्। अनाक्रमणे तु यजमानस्य पशवो न सम्भवेयुः। अत उभयदोषपरिहारार्थं आयतनस्य कस्मिं-श्चित्पार्श्वे तमश्वमाक्रमयेत्। स्वायतने स्थापितस्य प्रज्वाल्यमान-स्याग्नेरङ्गारा येन प्रकारेण तदश्वपदमभिलक्ष्य स्वत एव प्रवृत्ता भवन्ति, तथा समीपवर्त्तिप्रदेशमाक्रमयेत्। एवं सति अङ्गा-राणामश्वपदे प्रविष्टत्वात् पशवोऽपि लभ्यन्ते। स्वयं बुद्धिपूर्व्व-कमश्वपदेऽग्नेरप्रतिष्ठापनात् उग्रदेवाय पशवोऽपि समर्पिता न भवेयुः। इत्यमाधानगतो विशेषो निरूपितः॥

अथ पवमानहवींषि विधत्ते। "त्रीणि हवीꣳषि निर्वपति। विराज एव विक्रान्तं यजमानोऽनुविक्रमते" इति। विशेषेण रा-जते इति विराडग्निः, तस्य "विक्रान्तं" सामर्थ्यमनु यजमानोऽपि

"विक्रमते" समर्थो भवति॥ सामान्येन विहितानां हविषां देवताविशेषान् विधत्ते। "अग्नये पवमानाय। अग्नये पावकाय। अग्नये शुचये। यदग्नये पवमानाय निर्वपति। पुनात्येवैनम्। यदग्नये पावकाय। पूत एवास्मिन्नन्नाद्यं दधाति। यदग्नये शुचये। ब्रह्मवर्चसमेवास्मिन्नुपरिष्टाद्दधाति" इति [१०] "पवमानः" स्वयं शुद्धः। "पावकः" अन्यस्य शोधकः "शुचिः" दीप्यमानः। तत्र प्रथमेन यजमानस्य शुद्धिः। द्वितीयेनान्नप्राप्तिः। तृतीयेन फलद्वयस्योपरिष्टाद् ब्रह्मवर्चसप्राप्तिः। अत्र मीमांसातृतीयाध्यायस्य षष्ठपादे चिन्तितम्।

संस्कृते पवमानेष्ट्या वह्नौ सेष्टिर्नवेष्टयः।
वह्नौ तत्संस्कृते कार्य्याश्चोदकस्यानुरोधतः॥
चोदकः पवमानेष्टौ न तां प्रापयितुं प्रभुः।
अनङ्गत्वेष्टसिद्धिभ्यां इष्टयस्तदसंस्कृते॥

पवमानादीष्टिभिराहवनीयाद्यग्नयः संस्क्रियन्ते। संस्कृतेष्वग्निहोत्रदर्शपूर्णमासा हि क्रतवः प्रवर्त्तन्ते। तथा सति विमताः पवमानेष्टयः ताभिरिष्टिभिः संस्कृते वह्नौ कार्य्या इष्टित्वादितरेष्टिवत् चोदकश्चैवं सत्यनुगृहीतो भवति। एताभिरिष्टिभिः संस्कृते वह्नौ प्रकृत्यनुष्ठानादिति प्राप्ते ब्रूमः। यद्यपि पवमानेष्टिर्विकृतिः, तथापि चोदको न तस्यां पवमानेष्टौ पवमानेष्टिभिः संस्कृते वह्नौ तां पवमानेष्टिमतिदेष्टुं प्रभवति। प्रकृतौ प्रयाजादिपवमानेष्टेरङ्गत्वाभावात्। किञ्च एतस्याः पवमानेष्टेः संस्कृताग्निसिद्ध्यर्थं पवमानेष्ट्यन्तराङ्गीकारे तत्रापि तथेत्यन्व-

स्यायामिष्टिरेव न सिद्ध्येत्। तस्मात्ताभिरिष्टिभिरसंस्कृते वह्नौ पवमानेष्टयः कर्त्तव्या लुप्यद्दशमस्य द्वितीये। लुप्यते पवमानेष्टौ निर्वापः क्रियते ऽथवा। लुप्यते साधनाभावात् तेन मुख्यो न लुप्यते। आधानप्रकरणाम्नातायां पवमानेष्टौ निर्वापसाधनं नास्ति अग्निहोत्रस्याधानोत्तरकालीनत्वेन तद्धोमसाधनभूतायाः तस्या अपि तथात्वाप्राप्ते ब्रूमः। मुख्यो निर्वापस्तं प्रति गुणभूताग्निहोत्रहवणी। न हि गुणलोपेन मुख्यो लोप्तुमर्हति। किञ्च आधानकाले स्वरूपेणैव अविद्यमानायामग्निहोत्राहवण्यां साधनत्वं दुरापेतम्। ततः साधनाभावादित्यनुपन्यासः। तस्मान्निर्वापो न लुप्यते। मीमांसापञ्चमाध्यायस्य तृतीयपादे चिन्तितम्।

आहिते पवमानेष्टिसंस्कृते वाग्निहोत्रकम्।
आधानेनाग्निनिष्पत्तेस्तन्मात्रे कर्मसम्भवात्॥
आधानस्यानपेक्षस्य नाग्न्युत्पादकता मता।
समुच्चितस्य हेतुत्वात् कर्म स्यादिष्टिसंस्कृते॥

अग्न्याधानादूर्द्ध्वं विलम्ब्य पवमानेष्टयः क्रियन्ते। द्वादशसु रात्रीष्वनुनिर्वपेदितीष्टिकालविधानात् ताभ्यः पुरा द्वादशसु दिनेष्वग्निहोत्रमनुष्ठेयम्। आधानमात्रेणाहवनीयाद्यग्नेर्निष्पन्नत्वादिति प्राप्ते ब्रूमः। आधानेन पवमानेष्टिनिरपेक्षेण नाहवनीयाद्यग्निरुत्पद्यते। अन्यथा पवमानेष्टिवैयर्थ्यप्रसङ्गात्। न च विकल्पः। आधानमुपजीव्य तस्मादुत्तरकाले तद्विधानात्। तत इष्टिभिः समुच्चित्यैवाधानमग्न्युत्पादकमितीष्टिभिः संस्कृते वह्नौ पश्चादग्निहोत्रानुष्ठानम्।

इति श्रीसायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्ण-यजुर्ब्राह्मणे आद्यकाण्डे प्रथमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

अथ षष्ठोऽनुवाकः ।

पञ्चमे पवमानहवींषि संक्षिप्योक्तानि। अथ षष्ठे तद्विस्तारो हविरन्तराणि दक्षिणाश्चोच्यन्ते। तत्र प्रथमं तावत्पवमानहविषा-न्देवताविशेषस्य पूर्व्वमनुक्तत्वात् तदनुवादेन हविर्विशेषं विधत्ते। "देवासुराः संयत्ता आसन्। ते देवा विजयमुपयन्तः। अग्नौ वामं वसु सन्न्यदधत। इदमु नो भविष्यति। यदि नो जेष्य-न्तीति। तदग्निर्नोत्सहमशक्नोत्। तत् त्रेधा विन्यदधात्। पशुषु तृतीयम्। अप्सु तृतीयम्। आदित्ये तृतीयम् [१] तद्देवाविजित्य। पुनरवारुरुत्सन्त। तेऽग्नये पवमानाय पुरोडाशमष्टाकपालं नि-रवपन्। पशवो वा अग्निः पवमानः। यदेव पशुष्वासीत्। त-त्तेनावारुन्धत। तेऽग्नये पावकाय। आपो वा अग्निः पावकः। यदेवाप्स्वासीत्। तत्तेनावारुन्धत [२] तेऽग्नये शुचये। असौ वा आदित्योऽग्निः शुचिः। यदेवादित्य आसीत्। तत्तेनावारु-न्धत" इति। यदा देवासुराः परस्परं युद्धोद्युक्ताः तदानीं विज-यमपेक्षमाणा देवाः स्वकीयं "वामं" वमनीयं "वसु" धनम् अग्नौ सम्यक् स्थापितवन्तः। तेषामयमभिप्रायः। यद्यस्मानसुरान् जेष्यन्ति तदानीमापत्कालेऽस्माकमिदमेव धनं जीवनाय भ-विष्यतीति। अग्निश्च तान् भाराधिक्येन तद्धनमुद्धृत्य सोढुं नाशक्नोत्। तत् त्रेधा विभज्य पश्वादिषु स्थापितवान्। तदानीं

देवाश्च असुरान् विजित्य पुनः स्वकीयं धनं प्राप्तुमैच्छन्। तदा पश्वाद्यभिमानिदेवतासु स्थापितं धनं बलादवरोद्धुमशक्ताः सन्तः तदुक्तोपायार्थं पवमानगुणकायाग्नये पुरोडाशं निरवपन्। पशवश्च पवमानाग्न्यधीनत्वात् तत्स्वरूपाः, तेन च हविषा पवमानमग्निं तर्पयित्वा पशुष्ववस्थितं धनं स्वीकृतवन्तः। एवं ते देवाः पावकगुणकायाग्नये पुरोडाशं निरवपन्नित्यनुवर्त्तते। अपां पावकाग्न्यधीनत्वात्, तन्मुखेनाप्सु स्थितं प्राप्नुवन्। तथा शुचिगुणकायाग्नये पुरोडाशं निरूप्य तस्याग्नेरादित्यरूपत्वात् आदित्ये स्थापितं धनमवाप्नुवन्। तस्मादेताभ्यो देवताभ्यः प्रत्येकमष्टाकपालं पुरोडाशं निर्वपेदिति द्रव्यविधिरुन्नेयः॥

अथैतेषां हविषामाग्नेयेन हविरन्तरेण सह निर्वापं विधत्ते। "ब्रह्मवादिनो वदन्ति। तनुवो वावैता अग्न्याधेयस्य। आग्नेयो वा अष्टाकपालोऽग्न्याधेयमिति। यत्तं निर्वपेत्। नैतानि। यथात्मा स्यात्[२] नाङ्गानि। तादृगेव तत्। यदेतानि निर्वपेत्। न तम्। यथाङ्गानि स्युः। नात्मा। तादृगेव तत्। उभयानि सह निरुप्याणि। यज्ञस्य सात्मत्वाय" इति। याः पूर्वोक्ताः पवमाना अग्न्यादिदेवतास्तिस्रस्ता अग्न्याधेयरूपस्य देवविशेषस्य शरीराणि। यस्तु ताभ्योऽतिरिक्तः अष्टाकपाल आग्नेयः, सोऽग्न्याधेयस्य स्वरूपभूतः पूर्वोक्तशरीरत्रयस्वामी। एवं सति आग्नेयं निरूप्य पवमानहविषामनिर्वापे अवयवरहितः केवल आत्मैव स्यात्। अथ तानि हवींषि निरूप्य आग्नेयस्य निर्वापो न क्रियेत

तदानीमात्मरहिताः केवला अवयवा एव स्युः । तस्मादाग्नेयेन सह पूर्व्वाणि त्रीणि हवींषि निरूप्याणि। तथा सति यज्ञस्य सावयवत्वं सात्मत्वञ्च सम्पद्यते ॥

अथानुनिर्वाप्यं हविर्विधत्ते। "उभयं वा एतस्येन्द्रियं वीर्य-माप्यते [४] योऽग्निमाधत्ते। ऐन्द्राग्नमेकादशकपालमनुनिर्वपेत्। आदित्यञ्चरुम्। इन्द्राग्नी वै देवानामयातयामानौ। ये एव देवते अयातयाम्नी। ताभ्यामेवास्मा इन्द्रियं वीर्य्यमवरुन्धे। आ-दित्यो भवति। इयं वा अदितिः। अस्यामेव प्रतितिष्ठति" इति। अग्निमादधानस्येन्द्रियवीर्य्यस्य प्राप्त्या भवितव्यम्। अतस्तत्सिद्ध्य-र्थमिन्द्राग्निदेवताकं पुरोडाशमनुनिर्वपेत्। देवानां मध्ये इन्द्रा-ग्न्योरगतसारत्वात् तत्प्रसादेनेन्द्रियवीर्य्यप्राप्तिर्भवति। अगत-सारत्वञ्चानयोर्जेतृत्वादवगन्तव्यम्। जयश्च राजसूयप्रकरणे प-ठ्यते। "देवा वा ओषधीष्वाजिमयुः। ता इन्द्राग्नी उदजय-ताम्" इति। आदित्यचरुनिर्वापेण भूम्यां प्रतितिष्ठति। भूमे-रखण्डनीयत्वेनादितित्वात् ॥

अस्य चरोः सहकारिद्रव्यं घृतं विधत्ते। "धेन्वै वा एतद्रेतः [५] यदाज्यम्। अनडुहस्तण्डुलाः। मिथुनमेवावरुन्धे। घृते भवति। यज्ञस्यालूक्षान्तत्वाय" इति। आज्यस्य धेनुनिष्पाद्य-त्वात्तद्रेतस्त्वम्। तण्डुलानाञ्चानडुहाकृष्टायां भूमौ निष्पाद्यत्वा-त्तद्रेतस्त्वम्। अत उभयमेलने सति मिथुनं सम्पद्यते। तस्माच्चरु-निष्पत्तये घृते तण्डुलाः प्रक्षेप्तव्याः। एतेन घृतेन यज्ञस्य अ-लूक्षान्तत्वं सम्पद्यते। लूक्षो रूक्षः स्नेहरहितः परुषः तद्विपरी-

त्याच्चालूनः तादृशोऽन्तः समीपवर्त्ती द्रव्यविशेषो यज्ञस्य सो-ऽयमलूनान्तस्तस्य भावोऽलूनान्तत्वं तत्सिद्धये घृतस्वीकारः। यदुक्तं सूत्रेण। "चतुर्धा करणकालस्यादित्यश्चरुं ब्रह्मणे परि-हरति तञ्चत्वार आर्षेयाः प्राश्नन्ति॥

तदिदं विधत्ते। "चत्वार आर्षेयाः प्राश्नन्ति। दिशामेव ज्योतिषि जुहोति" इति। योऽयमादित्यश्चरुः तस्यैतत् हवि-र्वञ्चतुर्धाकरणं नास्ति किन्तु ब्रह्मणो हस्ते सर्वं दत्त्वा चत्वार-ऋत्विजः प्राश्नीयुः। तेषां श्रुताध्ययनसम्पन्नत्वार्षेयत्वम्। अतए-वान्यत्राम्नातम्। "आर्षेयो यः शुश्रुवान्"इति। चतुःसङ्ख्यासा-म्येन दिशाञ्चतसृणां सम्बन्धिनि ज्योतिषि हुतं भवति॥

उक्तानां हविषां कालविशेषं विधत्ते। "पशवो वा एतानि हवीꣳषि। एष रुद्रः। यदग्निः [६] यत्सद्य एतानि हवीꣳषि निर्वपेत्। रुद्राय पशूनपि दध्यात्। अपशुर्यजमानः स्यात्। यन्नानुनिर्वपेत्। अनवरुद्धा अस्य पशवः स्युः। द्वादशसु रात्री-ष्वनुनिर्वपेत्। संवत्सरप्रतिमा वै द्वादश रात्रयः। संवत्सरेणैवास्मै रुद्रꣳ शमयित्वा। पशूनवरुन्धे" इति। अत्रेदं विचिन्त्यते। यस्मिन् दिने अग्नय आहितास्तस्मिन् दिने किमेतानि हवीꣳषि निर्वपेत् किं वा नेति। तत्र निर्वापो न युक्तः। एतेषां हविषां पशुसाधनत्वेन पशुरूपत्वात्। आहितस्य चाग्नेः क्रूरदेवत्वात् तस्मै क्रूराय पशुसमर्पणप्रसङ्गात् यजमानोऽप्यपशुः स्यात्। अनिर्वापपक्षे तु पशवो न सम्पादिताः स्युः। अतो दोषद्वय-परिहारायाधानादूर्द्धं द्वादशसु रात्रीषु गतासु पश्चाद्धवींषि

निर्वपेत् । द्वादशसङ्ख्याया नामद्वारेण तासां संवत्सरसदृशत्वादे-
तद्यजमानार्थं संवत्सरेणैवाग्निं शान्तं कृत्वा पशून् प्राप्नोति ॥

तन्निर्वापे कञ्चिद्विशेषं विधत्ते । "यदेकमेकमेतानि हवीꣳषि
निर्वपेत् [७] यथा त्रीण्यावपनानि पूरयेत् । तादृक्तत् । न
प्रजननमुच्छिꣳषेत् । एकं निरूप्य । उत्तरे समस्येत् । तृतीयमे-
वास्मै लोकमुच्छिꣳषति प्रजननाय । तं प्रजया पशुभिरनुप्र-
जायते । अथो यज्ञस्यैवैषाभिक्रान्तिः" इति । एतानि त्रीणि
पवमानहवींषि पृथक् पृथगेव निर्वपेदिति केषाञ्चिन्मन्दानां
पक्षः । तस्मिन् पक्षे यथा लोके त्रीणि वीजावापस्थानानि क्षे-
त्राणि वीजैः पूरितानि भवन्ति, तथा लोकत्रयस्यापि त्रिभि-
र्हविर्भिः पूरितत्वाद्यजमानस्य स्वातन्त्र्येण प्रजोत्पत्तिस्थानं कि-
मपि नावशिष्येत; तस्मात् प्रथममेकं हविः पृथक् निरूप्य द्विती-
यतृतीये हविषी सम्भूय निर्वपेत् । तथा सति निर्वापद्वयेन
लोकद्वयस्यैव पूरितत्वात् तृतीयो लोको यजमानस्य प्रजोत्पा-
दनायावशेषितो भवति । ततस्तं लोकमनु यजमानः प्रजापशु-
समृद्धो भवति । अपिच यत् तृतीयलोकावशेषणं एषा यज्ञस्यै-
वाभिक्रान्तिरभितो व्याप्तिः । प्रजापशुरूपस्य तत्फलस्य निष्प-
न्नत्वात् । यदुक्तं सूत्रकारेण "प्राञ्चोऽग्रप्रथमा अभिप्रव्रजन्ति ।
दक्षिणतो ब्रह्मा रथं रथचक्रं वा प्रवर्त्तयति यावच्चक्रं त्रिः परि-
वर्त्तते" इति ॥

तदेतद्विधत्ते । "रथचक्रं प्रवर्त्तयति । मनुष्यरथेनैव देवरथं
प्रत्यवरोहति" [८] इति । गार्हपत्यादाहवनीयं प्रत्यग्नेः प्रण-

यनकाले रथचक्रस्य प्रवर्त्तनम्। अनेन मनुष्यरथप्रवर्त्तनेन नीयमानाग्न्यर्थं देवरथ एव प्रवर्त्तितो भवति॥

अथ मीमांसामुखेन होमनिर्णयं करोति। "ब्रह्मवादिनो वदन्ति। होतव्यमग्निहोत्रा३ं न होतव्या३मिति। यद्यजुषा जुहुयात्। अयथापूर्व्वमाहुतीर्जुहुयात्। यन्न जुहुयात्। अग्निः पराभवेत्। तूष्णीमेव होतव्यम्। यथापूर्व्वमाहुतीर्जुहोति। नाग्निः पराभवति" इति। नेयं नित्याग्निहोत्रविषया मीमांसा। तस्य पवमानेष्टिभ्य ऊर्द्धं प्रवर्त्तिष्यमाणत्वात्। किन्तु आधानाङ्गमेतत् किञ्चित्कर्म्म पूर्णाहुतेः प्राक् प्रवर्त्तमानत्वात्। पूर्णाहुत्यन्तमग्न्याधानमित्याश्वलायनेनोक्तम्। "अस्य चाधानाङ्गस्याग्निहोत्रस्य मन्त्रेण होमे सति अयथापूर्व्वत्वं प्रसज्येत। तथा हि। अग्निहोत्रशब्दोऽत्र नित्याग्निहोत्रधर्म्मानतिदिशति। नित्याग्निहोत्रे च सूर्य्यो ज्योतिर्ज्योतिः सूर्य्यः स्वाहेति"। अयं अहनि पठितो होममन्त्रः सोऽत्र प्रसक्तः। अहन्येव हूयमानत्वात्। प्रकृतिभूते त्वग्निहोत्रे रात्रावेवोपक्रमात्। 'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा' इति मन्त्रस्य रात्रिहोमाङ्गत्वात्। तेन मन्त्रेण प्रथममनुष्ठाय पश्चात् प्रातःकाले 'सूर्य्यो ज्योतिः' इति मन्त्रेणानुष्ठानमित्येष क्रमः। इह त्वादावेव 'सूर्य्यो ज्योतिः' इति मन्त्रेणानुष्ठानप्रकृतिविलक्षणादयथापूर्व्वत्वम्। अहोमपक्षे तु आधानेनोत्पन्नोऽग्निराहाराभावात् पराभूतोभवेत्। अतो दोषद्वयं परिहर्त्तुं मन्त्रं परित्यज्य तूष्णीमेव होतव्यम्। तथा सति मन्त्रवैपरीत्याभावादयथापूर्व्वत्वदोषो न भवेत्। होमस्यानुष्ठितत्वादग्नेः

पराभवोऽपि न भवति। यदुक्तं सूत्रकारेण। "आग्नेयस्य दक्षिणा-काले दक्षिणां ददात्यजं पूर्णपात्रमुपवर्हणᳲ सार्व्वसूत्रम्" इति अ-ग्नीधे उपवर्हणं ददाति, अश्वं ब्रह्मणेऽध्वर्य्यवे वाऽऽहवनीयदेशेऽन-ड्वाहमध्वर्य्यवेऽपरेण गार्हपत्यं धेनुᳲ होत्रे वासो गावौ मिथुनौ गात्रे नवञ्च रथं ददाति। तानि साधारणानि सर्व्वेषामाद्वा-दशभ्यो ददातीत्युक्त्वाह "काममूर्द्धं देयम्। अपरिमितस्यावरुध्यै" इति विज्ञायत ऊर्द्धमादिष्टदक्षिणाभ्यो वदति "षड् देया द्वादश देयाश्चतुर्विंशति देया इति ताविकल्पयन्त" इति॥

तदेतत् सर्व्वं क्रमेण विधत्ते। "अग्नीधे ददाति [९] अग्नि-मुखानेवर्त्तून् प्रीणाति। उपबर्हणं ददाति। रूपाणामवरुध्यै। अश्वं ब्रह्मणे। इन्द्रियमेवावरुन्धे। धेनुᳲ होत्रे। आशिष एवा-वरुन्धे। अनड्वाहमध्वर्य्यवे। वह्निर्वा अनड्वान्। वह्निरध्वर्युः [१०] वह्निनैव वह्नियज्ञस्यावरुन्धे। मिथुनौ गावौ ददाति। मिथुनस्यावरुध्यै। वासो ददाति। सर्व्वदेवत्यं वै वासः। सर्व्वा एव देवताः प्रीणाति। आद्वादशभ्यो ददाति। द्वादशमासाः संवत्सरः। संवत्सर एव प्रतितिष्ठति। काममूर्ध्वं देयम्। अपरि-मितस्यावरुध्यै" [११] इति। आग्नीध्रेण तत्तदृतावग्नेरिध्यमा-नत्वात् तस्मै दत्तेन द्रव्येणाग्निसहितानामृतूनां प्रीतिः। तस्मै यद्देयमुपबर्हणं शिरसः पृष्ठस्य वा आधारभूतं तस्य कार्पास-शाणोर्णादिमयैः शुक्लनीलपीतादिवर्णैः सर्व्वैः सूत्रैर्निष्पन्नत्वात् तेन रूपाणां प्राप्तिः। अश्वस्य प्रजापतिचक्षुर्जन्यत्वात् तेनेन्द्रिय-प्राप्तिः। दातव्याया धेनोः कामधेनुरूपत्वादाशिषां प्राप्तिः।

अनड्वान् शकटं वहति। अग्निश्च द्रव्यं वहति। अध्वर्य्युरप्यनुष्ठानं वहति। ततः समानत्वात् बलीवर्द्दरूपेणाध्वर्य्युरूपेण च वह्निनैव यज्ञस्य वह्नियज्ञसम्बन्धिहविर्वाहनमग्निं प्राप्नोति। गोमिथुनेन मनुष्यमिथुनप्राप्तिः। वाससः सर्व्वदेवत्यत्वं दीक्षाप्रकरणे 'अग्नेस्तूषाधानम्। वायोर्वातपानम्। इत्यादिवाक्येन प्रतिपादितम्। आद्वादशभ्यो गोभ्य इति शेषः। उक्तदक्षिणाभ्य ऊर्द्ध्वं षड् देया द्वादश देया इत्यादिशाखान्तरोक्तं बहुपक्षानुसारेण स्वाभिमतं यावत्तावद्देयम्। तेनापरिमितफलप्राप्तिः। अत्र मीमांसा एकादशाध्यायस्य चतुर्थपादे चिन्तितम्।

"पवमानेष्टिहविषां तन्त्रं भेदोऽथ वादिमः।
साध्यदेशाद्यभेदाच्च काम्ये भेदोक्तितोऽन्तिमः"॥

आधानप्रकरणे पठ्यते। 'अग्नये पवमानायाष्टाकपालं निर्वपेदग्नये पावकायाग्नये शुचये' इति। तैरेतैर्हविर्भिः साध्यस्याग्नेरेकत्वाद्देशाद्यभेदाच्चाङ्गानां तन्त्रमिति प्राप्ते ब्रूमः। "यं कामयेतोत्तरं वसीयान् श्रेयान्त्स्याम्" इति तस्याग्नये पवमानाय निरूप्याथ "पावकाय शुचये चोत्तरे हविषी समानबर्हिषी निर्वपेद्" इति वचनात् काम्यप्रयोगे प्रथमस्य हविषोऽङ्गभेद उत्तरयोस्तन्त्रम्। नित्यप्रयोगे तु त्रयाणां तन्त्रम्। द्वादशाध्यायस्य चतुर्थपादे चिन्तितम्।

"एका देया समुच्चेयं विकल्पं वाद्य आनतेः।
सौलभ्यादन्तिमो नैरपेक्षात् सङ्ख्यान्तरादपि"॥

आधाने श्रूयते। "एका देया षड् देया द्वादश देया इ-

त्यादि"। तत्र सोमक्रयन्यायेनानतेः सोलभ्यात् समुच्चय इति चेत् नैवम् । सञ्ज्ञानां व्रीह्यादिवत् परस्परनैरपेक्षावगमात् । समुच्चये तु श्रूयमाणाभिः सञ्ज्ञाभिः सञ्ज्ञान्तरस्य दुर्वारत्वाच्च । तस्माद्विकल्पः ।

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्ण-यजुर्ब्राह्मणे आद्यकाण्डे प्रथमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

## अथ सप्तमोऽनुवाकः ।

षष्ठे हविर्विशेषा दक्षिणाश्चोक्ताः । अथ सप्तमे आधानमन्त्रा उच्यन्ते। तत्रादौ गार्हपत्यविषयं मन्त्रमाह । "घर्मः शिरस्त-दयमग्निः। सम्प्रियः पशुभिर्भुवत्। छर्दिस्तोकाय तनयाय यच्छ" इति। घर्मो दीप्तिर्ज्वाला, स च घर्मोऽग्निः शरीरस्य शिरस्थानीयः । तच्च शिरः अयं पुरोवर्त्ती गार्हपत्योऽग्निः, तादृश हे गार्हपत्याग्ने त्वमस्मदीयैः पशुभिः सह "सम्प्रियो भुवत्" सम्यक् प्रीतियुक्तो भव । ततोऽस्मदपत्याय तदीयाप-त्याय च "छर्दिर्यच्छ" तेजो देहि ॥

अथान्वाहार्य्यपचनविषयं मन्त्रमाह। "वातः प्राणस्तदय-मग्निः। सम्प्रियः पशुभिर्भुवत्। स्वदितं तोकाय तनयाय पितुं पच" इति। योऽयमग्निसखो वायुः सोऽग्नेः प्राणः तत् प्राण-रूपं अयमाधीयमानोऽन्वाहार्य्यपचनोऽग्निः। हे अन्वाहर्य्यपचन त्वमस्मदीयैः पशुभिः सह सम्प्रियो भव। अस्मत्पुत्राय तत्-पुत्राय च "स्वदितं" स्वादुयुक्तं "पितुम्" अन्नं "पच" पक्वं कुरु॥

अथाहवनीयदेशं प्रति गमनमन्त्रमाह। "प्राचीमनुप्रदिशं प्रेहि विद्वान्। अग्नेरग्ने पुरो अग्निर्भवेह। विश्वा आशा दीद्यानो विभाहि। ऊर्ज्जन्नो धेहि द्विपदे चतुष्पदे" इति। हे अग्ने त्वं "विद्वान्" मार्गं जानन् "प्राचीं प्रदिशमनु" प्रागाख्यां प्रकृष्टां दिशमनुलक्ष्य "प्रेहि" प्रकर्षेण गच्छ। गत्वा चेहायतने प्रथममाहितस्य गार्हपत्यस्याग्नेः पुरो "अग्निः" पूर्व्वदिग्वर्त्ती वह्निर्भव। ततो "दीद्यानः" प्रकाशमानः "विश्वा आशाः" सर्व्वा दिशो "विभाहि" विशेषेण प्रकाशमानोऽस्मदीयाय "द्विपदे" मनुष्याय "चतुष्पदे" पशवे च ऊर्जं धेहि देहि अन्नरसं सम्पादय।

अथाहवनीयविषयं मन्त्रमाह। "अर्कश्चक्षुस्तदसौ सूर्य्यस्तदयमग्निः। सम्प्रियः पशुभिर्भुवत्। यत्ते शुक्र शुक्रं वर्चः शुक्रा तनूः। शुक्रं ज्योतिरजस्रम्। तेन मे दीदिहि तेन त्वादधे। अग्निनाग्ने ब्रह्मणा" इति। "अर्कः" अर्चमानो मण्डलात्मा वह्निशरीरस्य चक्षुःस्थानीयः तच्चक्षुःस्वरूपं असौ दिवि दृश्यमानः सूर्य्यरूपः स सूर्य्यः "अयम्" आधीयमान आहवनीयोऽग्निः। हे आहवनीय अस्मदीयैः पशुभिः सम्प्रियो भव। हे "शुक्र" दीप्यमानाहवनीय "ते" त्वदीयं यत् "शुक्रं वर्चः" वहिःप्रसृतं दीप्तिरूपं तेजः या च "शुक्रा तनूः" ज्वालारूपं शरीरं यदपि "अजस्रं शुक्रं ज्योतिः" सर्व्वदा वर्त्तमानो भारूपशरीरगतप्रकाशः "तेन" सर्व्वेण "मे दीदिहि" मां प्रकाशय। हे अग्ने ब्रह्मणा परिदृढेन 'अर्कश्चक्षुर्' इति मन्त्रेण तेन पूर्व्वोक्तगुणयुक्तेन अग्निना आहवनीयरूपेण त्वामिहादधे॥

॥

अथाहितस्याग्नेरभिमन्त्रणमन्त्रमाह। "आनशे व्यानशे सर्व्व-मायुर्व्यानशे" इति। अयमग्निः "आनशे" उदराग्निरूपेण भोक्तृ-शरीरं व्याप्तवान्। तथा "व्यानशे" विविधं भोग्यजातं व्याप्तवान्। तथा "सर्व्वमायुर्व्यानशे" अपमृत्युपरिहारेण स सम्पूर्णमायुः सम्पादितवान्॥

कल्पः। अथ यजमानः शिवा जपति। "ये ते अग्ने शिवे तनुवौ। विराट् च स्वराट् च। ते माविशतां ते मा जिन्वताम् [२] ये ते अग्ने शिवे तनुवौ। सम्राट् चाभिभूश्च। ते मा विशतां ते मा जिन्वताम्। ये ते अग्ने शिवे तनुवौ। विभूश्च परिभूश्च। ते मा विशतां ते मा जिन्वताम्। ये ते अग्ने शिवे तनुवौ। प्रभ्वी च प्रभूतिश्च। ते मा विशतां ते मा जिन्वताम्। यास्ते अग्ने शिवास्तनुवः। ताभिस्त्वा दधे" इति। विराडादिभिः प्रभूति-पर्य्यन्तैरष्टाभिः शब्दैरुक्ता अग्नेः शिवाः शान्तास्तनुवः। हे अग्ने ते त्वदीये विराट्स्वराडाख्ये ये शान्ते तनू ते उभे मां प्रविश्य प्रीणयताम्। एवमुत्तरत्रापि। विविधं राजत इति विराट्। स्वयमेव राजत इति स्वराट्। सम्यग्राजत इति सम्राट्। वैरि-णोऽभिभवतीत्यभिभूः। विशिष्टेन रूपेण भवतीति विभूः। परितो भवतीति परिभूः। आज्ञालक्षणत्वेन प्रभुत्वेन युक्ता प्रभ्वी। प्रकृष्टेनैश्वर्य्येणोपेता प्रभूतिः। हे अग्ने या एतास्त्व-दीयाः शिवास्तनुवः ताभिर्युक्तं त्वामिहादधे॥

कल्पः। "यास्ते अग्ने घोरास्तनुवस्ताभिरमुं गच्छ" इति यज-मानो द्वेष्याय प्रदिशतीति। घोरतनवः क्षुत्तृष्णादिरूपाः॥

तथा चारण्यकाण्डे समाम्नातम्। यास्ते अग्ने घोरास्तनुवः क्षुच्च तृष्णेत्यादि। ताभिर्घोराभिस्तनुभिरमुं शत्रुं गच्छ प्रामुहि॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे आद्यकाण्डे प्रथमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

अथ अष्टमोऽनुवाकः।

आधानमन्त्राः सप्तमेऽभिहिताः। अष्टमे तद्ब्राह्मणमुच्यते। तत्र चीनाधानमन्त्रान् विनियुङ्क्ते। "इमे वा एते लोका अग्नयः। ते यदव्यावृत्ता आधीयेरन्। शोचयेयुर्यजमानम्। घर्म्मः शिर इति गार्हपत्यमादधाति। वातः प्राण इत्यन्वाहार्य्यपचनम्। अर्कश्चक्षुरित्याहवनीयम्। तेनैवैनान्व्यावर्त्तयति। तथा न शोचयन्ति यजमानम्" इति। एते त्रयोऽग्नयः त्रित्वसाम्यादिमे त्रयो लोका भवन्ति। ते यदि परस्परमव्यावृत्ताः समुदिता आधीयेरन् तदा दाहाधिक्येन यजमानं सन्तापयेयुः। अतः त्रिभिर्मन्त्रैः पृथगादध्यात्। तेन व्यावृत्ताः सन्तः तापाधिक्याभावाद्यजमानं नैव सन्तापयन्ति॥

अथाधानकाले सामगानं विधत्ते। "रथन्तरमभिगायति गार्हपत्य आधीयमाने। राथन्तरो वा अयं लोकः [१] अस्मिन्नेवैनं लोके प्रतिष्ठितमाधत्ते। वामदेव्यमभिगायति ह्रियमाणे। अन्तरिक्षं वै वामदेव्यम्। अन्तरिक्ष एवैनं प्रतिष्ठितमाधत्ते। अथो शान्तिर्वै वामदेव्यम्। शान्तमेवैनं पशव्यमुद्धरते

बृहदभिगायत आह्वनीय आधीयमाने । बार्हतो वा असौ लोकः । अमुष्मिन्नेवैनं लोके प्रतिष्ठितमाधत्ते" इति । 'अभित्वा शूर नो नुम' इत्यस्यामृच्युत्पन्नं रथन्तरम् । 'कयानश्चित्र आभुवद्' इत्यस्यामृच्युत्पन्नं वामदेव्यम् । 'त्वामिद्धि हवामहे' इत्यस्यामृच्युत्पन्नं बृहत् । रथन्तरादीनां भूरादिलोकभोगहेतुत्वात्तल्लोकरूपत्वम् । अत एतेषां गाने सति तत्तल्लोकेऽग्निः प्रतिष्ठितो भवति । अपि च वामदेव्यस्य उपद्रवशान्तिकरत्वात् पशुप्राप्तिहेतुत्वाच्च एनमुद्ध्रियमाणमग्निं शान्तं पशुसाधनञ्च कृत्वोद्धरति ॥

पुनरपि सामद्वयं विधत्ते । "प्रजापतिरग्निमसृजत [२] सोऽश्वोवारो भूत्वा पराङैत् । तं वारवन्तीयेनावारयत । तद्वारवन्तीयस्य वारवन्तीयत्वम् । श्यैतेन श्येती अकुरुत । तच्छ्यैतस्य श्यैतत्वम् । यद्वारवन्तीयमभिगायते । वारयित्वैवैनं प्रतिष्ठितमाधत्ते । श्यैतेन श्येतीकुरुते" इति । यः प्रजापतिना सृष्टोऽग्निः स वारोऽश्वो भूत्वा पुनरावृत्तिरहितः पलायनमकरोत् । यो हस्तद्वयेन खलिनं गृहीत्वा बलान्निवारणीयः स वारः, तं वारमश्वं पलायमानं वारवन्तीयेन साम्ना प्रजापतिर्निवारयामास । 'अश्वं नत्वा वारवन्तम्' इत्यस्यामृच्युत्पन्नं वारवन्तीयं निवारणहेतुत्वात्तस्य वारवन्तीयं नाम सम्पन्नम् । निवारितमश्वं श्यैतसाम्ना श्येतीकृतवान् स्वाधीनीकृतवानित्यर्थः । 'अभिप्रवः सुराधसम्' इत्यस्यामृच्युत्पन्नं श्यैतम् । स्वाधीनकरणहेतुत्वात्तस्य श्यैतनाम सम्पन्नम् । अतो वारवन्तीयसाम्ना पलायनं निवार्य प्रतिष्ठितमग्निमाधाय श्यैतगानेनाग्निं स्वाधीनं करोति ॥

आधानमन्त्रे शिरःशब्दतात्पर्य्यं दर्शयति। "घर्म्मः शिर इति गार्हपत्यमादधाति। सशीर्षाणमेवैनमाधत्ते [३] उपैन-मुत्तरो यज्ञो नमति" इति। अग्नेः शिरःसहितत्वे सति न्यून-त्वाभावादुत्तरो दर्शपूर्णमाससोमादिरेनं प्राप्नोति॥

सम्प्रियशब्दतात्पर्य्यं दर्शयति। "रुद्रो वा एषः। यदग्निः। स आधीयमान ईश्वरो यजमानस्य पशून् हिꣳसितोः। सम्प्रियः पशुभिर्भुवदित्याह। पशुभिरेवैनꣳ सम्प्रियं करोति। पशूना-महिꣳसायै" इति। आधीयमानस्याग्नेः क्रूरत्वेन पशून् हिंसितुं समर्थत्वादहिंसार्थं पशुभिः सह सम्प्रीतिं मन्त्रेण करोति॥

यच्छेति पदस्याशीरर्थं दर्शयति। "छर्दिस्तोकाय तनयाय यच्छेत्याह। आशिषमेवैतामाशास्ते" इति॥

प्राणशब्दस्य तात्पर्य्यं दर्शयति। "वातः प्राण इत्यन्वाहार्य्य-पचनम् [४] सप्राणमेवैनमाधत्ते" इति॥

स्वदितंपितुंशब्दयोस्तात्पर्य्यं दर्शयति। "स्वदितं तोकाय तनयाय पितुं पचेत्याह। अन्नमेवास्मै स्वदयति" इति॥

प्राचीं प्रेहीति पदद्वयस्य तात्पर्य्यं दर्शयति। "प्राचीमनु प्रदिशं प्रेहि विद्वानित्याह। विभक्तिरेवैनयोः सा। अथो नाना-वीर्य्यावेवैनौ कुरुते" इति। येयं प्राच्यां दिशि गतिरयमेव "एनयोः" आहवनीयगार्हपत्ययोर्विभागः। अपि च विभागे सति पूर्व्वोक्तरीत्या द्वयोः पृथक्सामर्थ्यं भवति॥

धेहीति पदस्याशीरर्थत्वं दर्शयति। "ऊर्ज्जं नो धेहि द्विपदे चतुष्पद इत्याह। आशिषमेवैतामाशास्ते" इति॥

अर्कशब्दस्य तात्पर्य्यं दर्शयति। "अर्कश्चक्षुरित्याहवनीयम्। अर्को वै देवानामन्नम् [५] अन्नमेवावरुन्धे" इति। अर्चनीयत्वव्युत्पत्त्या देवानामन्नकारित्वादन्नप्राप्तिः॥

दीदिहिशब्दस्य समिन्धनार्थत्वं दर्शयति। "तेन मे दीदिहीत्याह। समिन्ध एवैनम्" इति॥

पूर्व्वपक्षहेतुत्वेन मन्त्रस्य किञ्चिद्विनियोगं दर्शयति। "प्राणश्च व्यानश्च इति त्रिरुदिङ्गयति। त्रय इमे लोकाः। एष्वेवैनं लोकेषु प्रतिष्ठितमाधत्ते" इति। हस्ते धृतस्याग्नेस्त्रिवारमूर्द्ध्वचलनेन लोकत्रयप्रतिष्ठा॥

तमेतं दूषयित्वा विनियोगान्तरं दर्शयति। "तत्तथा न कार्य्यम्। वीङ्गितमप्रतिष्ठितमादधीत। उद्धृत्यैवाधायाभिमन्त्र्यः। अवीङ्गितमेवैनं प्रतिष्ठितमाधत्ते" इति। त्रिरूर्द्ध्वचलनेन वीङ्गितं विविधं चालितमप्रतिष्ठितमग्निमाहितवान् भवेत्। तस्मात् तथोर्द्ध्वचलनं न कार्य्यम्, किन्तु हस्ते सकृदुद्धृत्यैवायतने तमग्निमाधाय पश्चात् सोऽग्निरनेन मन्त्रेण मन्त्रणीयः। तथा सति विविधचलनरहितं स्थिरत्वेन प्रतिष्ठितमग्निमाहितवान् भवति॥

विराडादिशब्दानां तात्पर्य्यं दर्शयति। "विराट् च स्वराट् च यास्ते अग्ने शिवास्तनुवस्ताभिस्त्वादध इत्याह। एता वा अग्नेः शिवास्तनुवः। ताभिरेवैनꣳ समर्द्धयति" इति॥

मन्त्रान्तरं विनियुङ्क्ते। "यास्ते अग्ने घोरास्तनुवस्ताभिरमुं गच्छेति ब्रूयाद्यं द्विष्यात्। ताभिरेवैनं पराभावयति" [६]

इति। यं पुरुषमसौ यजमानो द्विष्यात् तं प्रत्येतं मन्त्रं ब्रूयात्। तथा सति ताभिरेव घोराभिस्तनुभिरेनं द्वेष्यं विनाशयति। अथ मीमांसादशमाध्यायस्याष्टमपादे चिन्तितम्।

"उन्नेयो ब्रह्मसामस्य निषेधो विहितस्तुतिः।
विकल्पितो वा प्रहन्योऽपि वपोत्खेद इव स्तुतिः॥
विध्यनन्वयतः स्तोत्रं ब्रह्मोद्गाता तथा सति।
विषयैक्याद्विकल्पोऽत्र षोडशीग्रहवन्मतः॥

आधाने वामदेव्यादिसाम्नां गानानि विहितानि। आधान एवेदमपरमाम्नायते। 'उपवीता वा एतस्याग्नयो भवन्ति यस्याग्न्याधेये ब्रह्मा सामानि गायति' इति। उपशब्दः सामीप्यं ब्रूते। वीता विगताः कालविलम्बमन्तरेण परित्यक्ता इत्यर्थः। अनया निन्दया ब्रह्मणः सामगाननिषेध उन्नीयते। स निषेध उद्गातृविहितं वामदेव्यादि सामगानं स्तौति। ननु ब्रह्मणः सामगानमप्रसक्तमतस्तन्निषेधोऽत्यन्तमसम्भावितत्वाच्छशविषाणवच्छून्यः, न हि वन्ध्यापुत्रो वा तद्वधो वा सम्भावयितुं शक्यते, तथा सति तादृशनिषेधो न कथं स्तुतिरिति चेत्। वपोत्खेदवदिति ब्रूमः। तथा हि। स आत्मनो वपामुदखिददित्यनेनात्यन्तासम्भावितार्थेन यथा प्राजापत्यतूपरस्याजस्य विधिः स्तूयते तद्वदिति प्राप्ते ब्रूमः। नेदं वामदेव्यादि साम विधीनां स्तोत्रं भवितुमर्हति। विधीनामनेकत्वेन स्वस्वसन्निधिपठितैरर्थवादैर्निराकाङ्क्षत्वेन च तदन्वयायोगात्। का तर्ह्यस्य वाक्यस्य गतिरिति चेत्। उच्यते। ब्रह्मशब्दोऽत्र विप्रत्वजातिद्वारेणोद्गा-

तारं ब्रूते। यस्य च गानं प्रसक्तं तस्मिन्निषेधे सति विधिनिषेधाभ्यामेकविषयाभ्यामुद्गातुर्गानं विकल्प्यते। मीमांसा एकादशाध्यायस्य तृतीयपादे चिन्तितम्।

"प्रतिकर्म्म पृथक् कार्य्यमाधानं यदि वा सकृत्।
अन्त्यां तावत् पृथङ्नैवं स्वकालत्वसमत्वतः"॥

वसन्ते ब्राह्मणोऽग्निमादधीतेति विहितमाधानं प्रयाजाद्यङ्गवत् प्रतिकर्म्म पृथक् कार्य्यमिति चेत्, मैवम्। आधानस्य स्वातन्त्र्येण वसन्तादिकाले विहिते तत्तत्कर्म्मकालेषु पृथगनुष्ठानायोगात्। स्वकालेऽनुष्ठितस्य सर्व्वकर्म्मणि सम्बन्धः समानः। न च प्रकरणेनाविशेषो नियन्तुं शक्यः। आधानस्यानारभ्याधीतत्वात्। 'आहवनीये जुहोति' इत्यादिवाक्येन लैष्टिकपाशुकसौमिकदार्विकहोमेषु उपयोगः साधारणः प्रतिपाद्यते। तस्मात् तन्त्रेणानुष्ठेयम्। यद्यप्याधानं नेष्ट्यादिकर्म्मणां साक्षादङ्गं तथापि पृथक्फलाभावादाहवनीयादिद्वारा कर्म्मोपकारित्वाच्चाङ्गत्वमभ्युपेत्येयच्चिन्ता॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे आद्यकाण्डे प्रथमप्रपाठके अष्टमोऽनुवाकः॥ ८॥

## अथ नवमोऽनुवाकः।

अष्टमे आधानमन्त्रव्याख्यानमुक्तम्। अथ नवमे ब्रह्मौदनमुच्यते। तत्रादौ तावद्ब्रह्मौदनात् पराचीनमाधानात् प्राची-

नमाधानात् प्राचीनमग्निमन्थनमुच्यते। यदुक्तं सूत्रकारेण। "ब्राह्मौदनिकाद्भस्मापोह्य तस्मिन् शमीगर्भादग्निं मन्थन्ति" इति॥

तदिदं विधत्ते। "शमीगर्भादग्निं मन्थति। एषा वा अग्नेर्यज्ञिया तनूः। तामेवास्मै जनयति" इति। आधानदिनात् पूर्वेद्युर्ब्रह्मौदनं पक्त्वाऽपरेद्युरुदयात् पूर्वं तस्माद्ब्राह्मौदनिकादग्नेर्भस्मापोह्य तस्मिन् स्थाने शमीवृक्षस्य गर्भगतेनाश्वत्थेन निष्पादितामरणिमवस्थाप्याग्निं मन्थेत्। तस्माच्छमीगर्भादुत्पन्नाया अग्नेस्तनूरेषा यज्ञार्हा अतस्तामेव जनयति॥

अथ ब्रह्मौदनं विधत्ते। "अदितिः पुत्रकामा। साध्येभ्यो देवेभ्यो ब्रह्मौदनमपचत्। तस्या उच्छेषणमददुः। तत्प्राश्नात्। सा रेतोऽधत्त। तस्यै धाता चार्यमा चाजायेताम्। सा द्वितीयमपचत् [१]॥ तस्या उच्छेषणमददुः। तत्प्राश्नात्। सा रेतोऽधत्त। तस्यै मित्रश्च वरुणश्चाजायेताम्। सा तृतीयमपचत्। तस्या उच्छेषणमददुः। तत्प्राश्नात्। सा रेतोऽधत्त। तस्या अꣳशश्च भगश्चाजायेताम्। सा चतुर्थमपचत् [२]॥ तस्या उच्छेषणमददुः। तत्प्राश्नात्। सा रेतोऽधत्त। तस्या इन्द्रश्च विवस्वाꣳश्चाजायेताम्। ब्रह्मौदनं पचति। रेत एव तद्धाति" इति। ब्रह्माणं देवमुद्दिश्य होमार्थं ब्राह्मणानामृत्विजां प्राशनार्थञ्च पच्यमान ओदनो ब्रह्मौदनः। तं कदाचिददितिर्देवी पुत्रकामा सती साध्येभ्यो देवेभ्य उत्पादनीयधात्रादिदेवार्थमपचत्। तदानीमृत्विजो होमं प्राशनञ्च कृत्वा शिष्टमोदनं तस्या अदितये प्रायच्छन्। सा च तदुच्छेषणं

प्राश्य गर्भमाधत्त । तस्माद्गर्भाद् द्वादशादित्यानामादिभूतौ धाताचार्य्यमाचेत्युभौ अजायेताम् । एवमुत्तरेषु त्रिष्वपि पर्य्यायेषु योज्यम् । तस्मादाधित्सुर्ब्रह्मौदनं पचेत् । तेन पुत्रोत्पादकं रेत एव दधाति ॥

ऋत्विजां प्राशनं विधत्ते । "प्राश्नन्ति ब्राह्मणा ओदनम्" इति ॥

तस्मात् प्राशनात् पूर्वं समिदाधानं विधत्ते । "यदाज्यमुच्छिष्यते । तेन समिधोऽभ्यज्यादधाति । उच्छेषणाद्वा अदिती रेतोऽधत्त [३] ॥ उच्छेषणादेव तद्रेतोधत्त" इति । होमशिष्टं समिधं जनसाधनामाज्यंतेनाभ्यक्ताः ।

समिधः प्रशंसति । "अस्थि वा एतत् । यत्समिधः । एतद्रेतः । यदाज्यम् । यदाज्येन समिधोभ्यज्यादधाति । अस्थ्येव तद्रेतसि दधाति" इति । काठिन्यसाम्यात् समिधामस्थित्वम् ।

समित्संख्यां विधत्ते । "तिस्र आदधाति मिथुनत्वाय" इति । सपुत्रयोर्मातापित्रोर्मिथुनरूपयोस्त्रित्वसाम्यम् । अत एवान्यत्राम्नातम् । माता पिता पुत्रस्तदेव तन्मिथुनम्" इति ।

प्रादेशाभिनयेन समिधां परिमाणं विधत्ते । "इयतीर्भवन्ति । प्रजापतिना यज्ञमुखेन सम्मिताः [४] ॥ इयतीर्भवन्ति । यज्ञपुरुषा सम्मिताः । इयतीर्भवन्ति । एतावद्वै पुरुषे वीर्य्यम् । वीर्य्यसम्मिताः" इति । इयत्यः प्रादेशपरिमिताः । प्रजापत्यवतारस्य यज्ञपुरुषस्य मुखं मूर्द्धस्थानमारभ्य चिवुकपर्य्यन्तं प्रादेशपरिमितं भवति । अतस्तत्तुल्यत्वम् । यज्ञपुरुषः

पर्व्वावयवविशेषः पवित्ररूपः। तस्य च प्रादेशपरिमाणं तन्मन्त्रे समाम्नातम्। "चित्रपलाशे दर्भ दद्यान् प्रादेश समित" इति। अतो यज्ञपर्वणा तुल्यत्वम्। किञ्च पुरुषविशेषे * चक्षुःश्रोत्रादिज्ञानेन्द्रियसामर्थ्यं प्रादेशपरिमिते मुखे वर्त्तते। अतस्तेन वीर्य्येण तुल्यत्वम्॥

तासाञ्च समिधां शुष्कत्वं वारयितुं विधत्ते। "आर्द्रा भवन्ति आर्द्रमिव हि रेतः सिच्यत" इति। इवशब्द एवकारार्थः।

समिधां वृक्षविशेषं विधत्ते। "चित्रियस्याश्वत्थस्यादधाति। चित्रमेव भवति" इति। अश्वत्थग्रामोऽश्वत्थचित्रक इत्युच्यते। योऽश्वत्थो ग्रामादेश्चिह्नीभूतस्तदीयाः समिध आदध्यात्। तेन विचित्रमेवैश्वर्य्यं भवति॥

समिदाधानार्थान् ऋग्विशेषान् विधत्ते। "घृतवतीभिरादधाति [५]॥ एतद्वा अग्नेः प्रियं धाम। यद्घृतम्। प्रियेणैवैनं धाम्ना समर्द्धयति। अथो तेजसा" इति। घृतशब्दो यास्वृक्षु स्थिता घृतवत्यः। घृतैर्बोधयतातिथिमित्येवं घृतशब्दस्तत्र श्रूयते। घृतेन ज्वालाभिवृद्धेरग्नेर्घृतप्रियत्वम्। अतस्तेन घृतयुक्तेन मन्त्रेण समिध आदधानः प्रियेण स्थानेन समृद्धो भवति। अपि च तेजसा समृद्धो भवति॥

अधिकारिभेदादृग्व्यवस्थां विधत्ते। "गायत्रीभिर्ब्राह्म-

---

* पुरुषशरीरे इति A पुस्तकपाठः।

णस्यादध्यात्। गायत्रछन्दा वै ब्राह्मणः। स्वस्य छन्दसः प्रत्ययनस्त्वाय। त्रिष्टुग्भीराजन्यस्य। त्रिष्टुप्छन्दा वै राजन्यः। स्वस्य छन्दसः प्रत्ययनस्त्वाय [६]॥ जगतीभिर्वैश्यस्य। जगतीछन्दा वै वैश्यः। स्वस्य छन्दसः प्रत्ययनस्त्वाय" इति। समिधाग्निं "दुवस्यते"त्याद्या गायत्र्यः। "समिध्यमानः प्रथमोऽनु धर्मा" इत्याद्या त्रिष्टुभः। त्वामग्ने समिधानमित्याद्या जगत्यः। एताश्चोपरितनप्रपाठके आम्नायन्ते। गायत्रीब्राह्मणयोरेकमुखत्वसम्बन्धः। अत स्वकीयस्यैव गायत्रीछन्दसः प्रत्ययनस्त्वाय पुनः प्राप्तये गायत्रीभिर्ब्राह्मणस्यादध्यात्। एवमुत्तरयोर्वाक्ययोर्योज्यम्।

समिद्धस्य ब्राह्मौदनिकाग्नेश्चिरावस्थानं विधत्ते। "तꣳ संवत्सरं गोपायेत्। संवत्सरꣳ हि रेतो हितं वर्द्धते" इति। यस्माल्लोके गर्भाशये स्थापितं रेतः संवत्सरं वर्द्धते। तस्मादग्निरूपस्य गर्भस्य वृद्धये संवत्सरमभिरक्षेत्। यदुक्तं सूत्रकारेण। "यद्येनꣳ संवत्सराग्न्याधेयं नोपनमेद्* ब्रह्मौदनं पक्त्वा समिमाधाय यदैवेनमुपनमेदधीत" इति॥

तदिदं विधत्ते। "यद्येनꣳ संवत्सरे नोपनमेत्। समिधः पुनरादध्यात्। रेत एव तद्धितं वर्द्धमानमेति" इति। केनापि द्रव्यराहित्यादिना निमित्तेनास्य यजमानस्याग्न्याधेयप्राप्तिर्यदि न स्यात्तदा संवत्सरगोपिते तस्मिन् ब्राह्मौदनिके-

---

* A नोपनोपनमेद्।

ऽग्नौ समिधं आधाय तत्सिद्धिपर्य्यन्तं गोपायेत्। तेन गर्भाशये स्थापितं रेतः संवत्सरं वर्द्धते। तस्मादग्निरूपस्य गर्भस्य वृद्धये संवत्सरमभिरक्षेत् तेन गर्भाशये स्थापितं वर्द्धमानं रेतः प्राप्नोति।

ब्राह्मौदनिकस्य रक्षणकर्त्तुर्नियमं विधत्ते। "न माꣳसमश्नीयात्। न स्त्रियमुपेयात्" [७] इति॥

व्यतिरेकमुखेन नियमं प्रशंसति। "यन्माꣳसमश्नीयात्। यत्स्त्रियमुपेयात्। निर्वीर्य्यः स्यात्। नैनमग्निरुपनमेत्" इति। अग्न्याधेयं न प्राप्नुयादित्यर्थः।

आधानदिनात् पूर्व्वदिने पुनर्ब्रह्मौदनं विधत्ते। "श्वआधास्यमानो ब्रह्मौदनं पचति। आदित्या वा इत उत्तमाः सुवर्गं लोकमायन्। ते वा इतोयन्तं प्रतिनुदन्ते। एते खलु वावादित्याः। यद्ब्राह्मणाः। तैरेव सन्त्वं गच्छन्ति [८]॥ नैनं प्रतिनुदन्ते" इति। पुरा कदाचिदादित्या इतो भूलोकादुद्गततमाः स्वर्गं प्राप्ताः। तेचान्यं पुरुषमितः स्वर्गं गच्छन्तं प्रतिबध्नन्ति। भूलोकवर्त्तित्वाद् ब्राह्मणा एवादितिसम्बन्धादादित्याः। अनेन ब्रह्मौदनेन तुष्टैस्तैर्ब्राह्मणैरादित्यैः सह स्वर्गं प्राप्तौ सम्मतत्वं गच्छन्ति। तत एनं न प्रतिबध्नन्ति।

तस्य ब्राह्मौदनिकाग्नेः समिन्धनं तस्मिन्नरणिप्रतापनञ्च विधत्ते। "ब्रह्मवादिनो वदन्ति। क्वासः। अग्निः कार्य्यः। यो ऽस्मै प्रजां पशून् प्रजनयतीति। ब्रह्मौदनाꣳ रात्रिमग्निमिन्धीत। तस्मिन्नुपव्युषमरणी निष्टपेत्। यदृषभाय वाशितान्याविच्छा-

यति। तादृगेव तत्” इति। आधातव्यो योऽग्निरसा आ-हिताग्नये प्रजां पशूँश्च सम्पादयति सोऽग्निः क कार्य्यः कुत्र सम्पादनीय इति ब्रह्मवादिनां प्रश्नः। तस्मै तदुत्तरम्। तस्यां रात्रौ निरन्तरं तस्मिन् काष्ठलेशैरग्निं समिध्य तस्मिन् समिद्धे ऽग्नावुषःकालसमीपे मन्थनसाधनमरणिद्वयां निष्टपेत् निः-शेषेण तपेत्। तेन स ब्राह्मौदनिकोऽग्निररण्योः प्रविशति। यथा लोके कस्मैचिद्वृषभाय प्रियाणि वाशितानि किक्किटा-दिशब्दजातानि तदागमनाय विशेषेण सम्पादयति। तदरणी-प्रतापनं तादृगेव इति द्रष्टव्यम्।

अथ देशविशेषे मन्थनं विधत्ते। “अपोदूह्यभस्माग्निं म-न्थति [८]॥ सैव साग्नेः सन्ततिः” इति। ब्राह्मौदनिकाग्नि-सम्बन्धिभस्मान्यपोदूह्य निःसार्य्य तस्मिन् स्थाने तप्ताभ्यामरणी-भ्यामग्निं मन्थेत्। तस्मिन् स्थाने येयं मन्थनक्रिया सैव ब्राह्मौ-दनिकस्याग्नेरुत्पत्स्यमानेनाग्निना सह सा सन्ततिः। तथा विच्छेदाभावः॥

मथितस्याग्नेर्गार्हपत्याधानार्थमुद्धरणं विधत्ते। “तं मन्थि-त्वा प्राञ्चमुद्धरति। संवत्सरमेव तद्रेतो हितं प्रजनयति” इति। अरणावुत्पन्नं मथितमग्निं कस्मिंश्चित्पात्रे प्राञ्चमुद्धरति। न तु प्रत्यञ्चम्। यथा लोके संवत्सरं गर्भे धत्ते रेतोऽन्ते प्रजन-यति तद्वदेतद्भवति।

ब्राह्मौदनिकेऽग्नौ गायत्र्यादिभिर्यः समिदाधानविधौ विधि-रुक्तस्तमेव पक्षान्तरविधानाय पुनः प्रराम्टशति। “अनाहित-

मस्याग्निरित्याहुः । यः समिधोऽभ्याधायाग्निमाधत्ते इति । ताः संवत्सरे पुरस्तादादध्यात् । संवत्सरादेवैनमवरुध्याधत्ते" इति । समिदाधानाभावे कृतमप्याधानमकृतमेव स्यादित्यभिज्ञा आहुः । तस्मादाधानात् पुरस्तात् संवत्सरपरिमिते काले समिदाधानं मुख्यः पक्षः ।

तमेतं मुख्यं पक्षमनूद्य तदसम्भवेऽनुकल्पं विधत्ते । "यदि संवत्सरे नादध्यात् । द्वादश्यां पुरस्तादादध्यात् । संवत्सरप्रतिमा वै द्वादशरात्रयः । संवत्सरमेवास्याहिता भवन्ति" इति । आधानदिनमारभ्याधस्तनतिथिगणनायां या द्वादशसङ्ख्यापूरणी-तिथिः तस्यां ताः समिधः आदध्यात् । द्वादशानां रात्रीणां मासस्थानीयत्वेन मिलित्वा संवत्सरसादृश्यम् ॥

पुनरप्यसम्भवेऽनुकल्पान्तरं विधत्ते । "यदि द्वादश्यां नादध्यात् । त्र्यहे पुरस्तादादध्यात् । आहिता एवास्य भवन्ति" [१०] इति । पूर्ववद् व्याख्येयम् ॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्ण-यजुर्ब्राह्मणे आद्यकाण्डे प्रथमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

अथ दशमोऽनुवाकः ।

नवमे ब्रह्मौदनोऽभिहितः । अथ दशमे पञ्चाग्न्याधानमभिधीयते । पूर्व्वं पञ्चमेऽनुवाके यत्रेधाग्निराधीयते इत्यग्नित्रयाधानपक्ष एवाभिहितः । इह तु पञ्चाग्न्याधानं विधातुमुपाख्यानमाह । "प्रजापतिः प्रजा असृजत । स रिरिचानोऽमन्यत । स तपोऽतप्यत । स आत्मन् वीर्य्यमपश्यत् । तदवर्द्धत ।

तदस्मात् सहसोर्द्ध्वमसृज्यत। सा विराडभवत्। तां देवासुरा व्यगृह्णत*। सोऽब्रवीत्प्रजापतिः। मम वा एषा [१]। दोहा एव युष्माकमिति" इति। प्रजापतिः प्रजा सृष्ट्वा स्वकीयस्य वीर्य्यस्योपचयेण रिक्तोऽहमिति मत्वा वीर्य्यलाभाय सः तपस्तप्त्वा स्वात्मनि किञ्चिद् वीर्य्यमपश्यत्। तच्च वीर्य्यं कालेनावर्द्धत तत्प्रवृद्धं वीर्य्यं धारयितुमशक्यं सत् शीघ्रमेवास्मात् प्रजापते-रूर्द्धं निर्गत्य केनचिद्रूपेण दृष्टमभूत्। सा सृष्टा निष्पन्ना विविधं राजमाना काचिद् गौरभवत्। तामुद्दिश्य देवाश्चासु-राश्च वयमेतां गृह्णीम इत्येवं परस्परं विग्रहमकुर्व्वन्। तदा विग्रहशान्तये प्रजापतिरेवमब्रवीत्। एषा गौर्म्ममैव तिष्ठतु। युष्माकं तु दोहा एव क्षीराण्येवेति।

अथ पञ्चाग्न्युत्पत्तिप्रकारं दर्शयति। "सा ततः प्राच्युद-क्रामत्। तत्प्रजापतिः पर्य्यगृह्णात्। अथर्वपितुं मे गोपायेति। सा द्वितीयमुदक्रामत्। तत्प्रजापतिः पर्य्यगृह्णात्। नर्य्य प्रजां मे गोपायेति। सा तृतीयमुदक्रामत्। तत्प्रजापतिः पर्य्यगृह्णात्। शंस्य पशून् मे गोपायेति [२]॥ सा चतुर्थमुदक्रामत्। त-त्प्रजापतिः पर्य्यगृह्णात्। सप्रथ सभां मे गोपायेति। सा पञ्चम-मुदक्रामत्। तत्प्रजापतिः पर्य्यगृह्णात्। अहेबुध्निय मन्त्रं मे गोपायेति। अग्नीं वाव सा तान् व्याक्रामत। तान् प्रजापतिः पर्य्यगृह्णात्। अथो पङ्क्तिमेव" इति। येयं गौः प्रजापतिना स्वार्थमेव स्वीकृता विराट् सा प्रजापतेः सकाशात् प्राङ्मुखा

---

* व्यगृह्णन्तेति वा पाठः।

सती उदक्रामत्। तदा प्रजापतिरथर्वेति मन्त्रेण तां विराजं परितो निरुद्धवान्। हे अथर्व चतुर्थवेदप्रवर्त्तकाचार्य्यरूप दक्षिणाग्ने यद्वा हिंसादिरहित मे पितुमन्नं गोपाय एवमुत्तरेषु चतुर्षु पर्य्यायेषु योज्यम्। नरेभ्यो मनुष्येभ्यो हितो नर्य्यो गार्हपत्यः। ऋत्विग्भिः प्रशंसनीयरूपत्वाच्छंस्यः आहवनीयः। प्रथया कीर्त्या सह वर्त्तमानत्वात् सप्रथः सभ्यः। अहिंसकत्वात् सुभेर्मूले जगदादावुत्पन्नत्वाच्चाहिर्बुध्निय आवसथ्यः श्रगादिर्मन्त्रः। इत्थं सैवविराट् तानग्नीन् पञ्चधा विवेक्तुं पञ्चवारं व्यक्रामत्। तान् पञ्चाग्नीन् प्रजापतिः परितः स्वीकृतवान्। अपि च क्रमेणावस्थानात् पञ्चसङ्ख्यान्वयाद्वा पङ्क्तिमेवैतावदग्निविषयं गृहीतवान्। इदानीं विधत्ते। पङ्क्तिर्वा एषा ब्राह्मणे तामात्मनो पाङ्क्तं स्पृणोतीति। पूर्व्वोक्तानामथर्वेत्यादीनां मन्त्राणां ब्राह्मणेनाधीतत्वात् प्रजापतिप्रतिपाद्यत्वाद्वा पङ्क्तिर्विप्रे प्रविष्टा। तथासत्यग्न्याधानेन तां पङ्क्तिं तस्मादुत्पादयति। तस्मादेतावन्तः पञ्चाग्नयः आधातव्याः। यदिदं मनुष्यपश्वादिरूपं जगत् सर्व्वं पञ्चसङ्ख्योपेतत्वात् पाङ्क्तम्। शिरो हस्तौ पादौ चेत्येवं मनुष्याणां पञ्चावयवाः। शिरसा पुच्छेन वा सह चत्वारः पादाः पशूनां पञ्चावयवाः। अतः पञ्चसङ्ख्यायुक्तेनैवाग्निना पञ्चसङ्ख्यायुक्तं जगत्प्रीणयति।

अथ मन्त्राणां तात्पर्य्यं क्रमेण दर्शयति। "अथर्वपितुं मे गोपायेत्याह। अन्नमेवैतेन स्पृणोति। नर्य्य प्रजां मे गोपायेत्याह। प्रजामेवैतेन स्पृणोति। शंस्य पशून्मे गोपायेत्याह [४]। पशूने-

वैतेन स्पृणोति। सप्रथ सभां मे गोपायेत्याह। सभामेवैतेनेन्द्रि-यꣳ स्पृणोति। अहेर्बुध्नियमन्त्रं मे गोपायेत्याह। मन्त्रमेवैतेन श्रियꣳ स्पृणोति" इति। मन्त्रे तानोन्द्रियवत इत्यभिधानादि-न्द्रियप्रीतिः। सा हि श्रीरित्यभिधानात् श्रियः प्रीतिः।

पञ्चानामग्नीनां पृथगुपयोगं दर्शयन् प्रशंसति। "यद-न्वाहार्य्यपचनेऽन्वाहार्य्यं पचन्ति। तेन सोऽस्याभीष्टः प्रीतः। यद्गार्हपत्य आज्यमधिश्रयन्ति सम्पत्नीर्याजयन्ति। तेन सोऽस्या-भीष्टः प्रीतः। यदाहवनीये जुह्वति। [५] तेन सोऽस्याभीष्टः प्रीतः। यत् सभायां विजयन्ते। तेन सोऽस्याभीष्टः प्रीतः। यदावसथेऽन्नꣳ हरन्ति। तेन सोऽस्याभीष्टः प्रीतः। तथाऽस्य सर्व्वे प्रीता अभीष्टा आधीयन्ते" इति। दर्शपूर्णमासकर्म्मणि ऋत्विजो दक्षिणार्थो आह्रियते इत्योदनोऽन्वाहार्य्यः। स च पच्यते यस्मिन् दक्षिणाग्नौ सोयमन्वाहार्य्यपचनः। तेनौदन-पाकेनोपयुक्तत्वात् स दक्षिणाग्निरस्य यजमानस्याभीष्टोपि भव-ति। एतदीयपरिचर्य्यया प्रीतश्च भवति। एवमुत्तरत्रापि। गा-र्हपत्ये ह्याज्यं विलापयन्ति। देवपत्नीश्च संयाजयन्ति। अतः पत्नीसम्बन्धाद्गृहपतिना संयुक्त इति गार्हपत्यः। प्रधानाहुतिं जुहोत्यस्मिन्नित्याहवनीयः।

अथ सभाया मध्येऽधिदेवनमुद्धत्येत्यादिना द्यूतविजयः सू-त्रेभिहितः। तां द्यूतसभामर्हतीति सभ्यः। तदन्नं संस्कृत्य सभासद्भ्य उपहरन्त्यावसथे भुञ्जते इति सूत्रे अन्नहरणमुक्तम्। तत्स्थान-मावसथः। तमर्हतीत्यावसथ्यः। तेनोक्तप्रकारेण सर्व्वेप्यग्नयो अस्य

यजमानस्य प्रीतिपूर्व्वकमभीष्टं सम्पादयन्त आहिता भवन्ति।

पूर्व्वोक्तैरथर्वपितुमित्यादिमन्त्रैरुपस्थानं विधत्ते। "प्रवसथ-मेष्यन्नेवमुपतिष्ठेतैकमेकम्। यथा ब्राह्मणाय गृहे वासिने परि-दाय गृहानेति। तादृगेव तत्"इति।आहिताग्निर्यदा देशान्तरं गमिष्यति तदा पूर्व्ववदुपतिष्ठेत। पूर्व्ववत्प्रजापतिर्विराजः क्रमेण अथर्वपितुमित्यादिमन्त्रैर्विराजं परिगृहीतवानित्यर्थवाद उक्तः। तेनार्थवादेनाधानकालीनस्योपस्थानस्य विधिरुन्नेयः। अतएव सूत्रकार आधानादूर्ध्वं पवमानेष्टिभ्यः पूर्व्वमेतदुवाच। अथ विराट्क्रमैर्यजमान उपतिष्ठते। अथर्वपितुं मे गोपायेत्यादि। अत आधानकालीनमुपस्थानं दृष्टान्तीकर्त्तुमेवमित्युक्तम्। यथा लोके गृहस्वामी कश्चिदन्यं कञ्चिद्ब्राह्मणं गृहरक्षार्थं वासयित्वा तस्मै ब्राह्मणाय गृहान् परिदाय त्वमेवमेवं रक्षेति बुद्धिप्र-दानं कृत्वा ग्रामान्तरे गच्छति। तादृगेव तदुपस्थानं द्रष्टव्यम्।

उपस्थानान्तरं विधत्ते। "पुनरागत्योपतिष्ठते। सा भागेय-मेवैषान्तत्। सा तत ऊर्द्धारोहत्। सा रोहिण्यभवत्। तद्रोहिण्यै रोहिणीत्वम्। रोहिण्यामग्निमादधीत। स्व एवैनं योनौ प्रतिष्ठि-तमाधत्ते। ऋध्नोत्येनेन"इति। ग्रामान्तरादागत्य पुनरप्याहि-तानग्नीन् अथर्व्वपितुमित्यादिमन्त्रैरुपतिष्ठेत। ते च प्रत्येकमुप-स्थानमन्त्राः।सन्ध्योपस्थानमन्त्रस्तु पञ्चधाग्नीन् व्यक्रामदित्यादिः। सचैवमुत्तरप्रपाठके पठिष्यते। पञ्चधाग्नीन् व्यक्रामत्। विराट् सृष्टा प्रजापतेः। ऊर्द्धारोहद्रोहिणी। योऽग्निरग्नेः प्रतिष्ठिति-रिति। एतन्मन्त्रतात्पर्यस्य प्राजापत्योपाख्यानरूपार्थवादे पूर्व्व-

मनुक्तत्वादिदानीं साभागेयमित्यादिना तदीयतात्पर्य्यमुच्यते। येयं प्रजापतिसृष्टविराट् सेयं तदानीमेषामग्नीनां भागरहिताऽभूत्। अन्वाहार्य्यं पचन्ति। आज्यमधिश्रयन्ति इत्याद्युपयोगो यथाग्नीनामभिहितो न तथा विराजः कश्चिदुपयोग उक्तः। तस्माद् भागत्वं सा च भागरहिता ततो देशादूर्ध्वा भूत्वा दिवमारोहत्। आरुह्य च रोहिणी नक्षत्ररूपाऽभूत्। रोहतीति व्युत्पत्त्या रोहिणी नाम सम्पन्नम्। एवञ्च सति रोहिण्यामग्न्याधानेन स्वकारण एवाग्निः प्रतिष्ठितो आहितो भवति। रोहिण्या विराड्रूपेणाग्निकारणत्वात्। तथाच सत्युपयुक्तत्वाद्विराट्सभागा सम्पद्यते। आधाता च समृद्धिं प्राप्नोति। अतएव पूर्व्वत्र रोहिण्यामग्निमाधत्ते ऋद्ध्नोत्येवेति विहितम्। अत्र तु तद्विध्यनुवादेन विराण्मन्त्रः प्रशंस्यते।

अस्य प्रपाठकस्य विनियोगसङ्ग्रहः।

अनुवाका दशप्रोक्ताः प्रथमेऽस्मिन् प्रपाठके।
शुक्रामन्थिगता मन्त्रा आधाने कालनिर्णयः॥
सम्भारविधिराधानं तत्प्रकारस्तथेष्टयः।
आधानमन्त्रव्याख्यानं ब्रह्मौदनविधिस्तथा॥
पञ्चाग्निपक्ष इत्येवमनुवाकार्था उदीरिताः।
वेदार्थस्य प्रकाशेन तमो हार्दं विनाशयन्॥
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः।

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे आद्यकाण्डे प्रथमप्रपाठके दशमोऽनुवाकः॥ १०॥

# तैत्तिरीय-ब्राह्मणभाष्ये

## आद्यकाण्डे द्वितीयप्रपाठके

### प्रथमोऽनुवाकः ।

### हरिः ॐ ॥

यस्य निश्वसितं वेदा योवेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
आद्ये प्रपाठके प्रोक्तो विधिराधानगोऽखिलः ।
गवामयनशेषोयं द्वितीयेऽस्मिन्नुदीर्य्यते ॥
आद्यानुवाक आधाने ये मन्त्राः नोदिताः पुरा ।
ते सर्व्वेऽप्यभिधीयन्ते पूर्व्वशेषो भवेत्ततः ॥

कल्पः।"उद्धन्यमानमस्या अमेध्यम्। अप पाप्मानं यजमानस्य हन्तु। शिवा नः सन्तु प्रदिशस्तस्रः। शन्नोमाता पृथिवी तोकसाता" इतिं प्राचीनप्रवणं देवयजनमुद्धत्येति। अस्याः पृथिव्याः सम्बन्धि यत् स्थानं निष्ठीवनादिभिरुपहतत्वादमेध्यम्। यज्ञायोग्यं तदिदानीं मुद्धन्यमानं सद्यजमानस्य पाप्मानमपहन्तु। प्राच्यादिचतस्रः प्रकृष्टा दिशो नोऽस्मान् प्रति शिवाः सुखप्रदाः सन्तु। तोकासाता तोकासातये अपत्यलाभाय पृथिवी माता नोऽस्माकं शं सुखं करोतु।

कल्पः। "शन्नोदेवीरभिष्टये। आपोभवन्तु पीतये। शंयोरभिस्रवन्तु नः" इति। अद्भिरवेक्ष्येति। आपोदेवीरिमाः ता इमा जलदेवता नोऽस्माकमभिष्टये अभीष्टप्राप्त्यर्थं पी-

तये पानाय शम्भवन्तु सुखप्रदा भवन्तु। किञ्च नोऽस्माकं यशं सुखं सम्पादयितुं योर्दुःखं पृथक्कर्त्तुं च अभिस्रवन्तु। सर्व्वतः प्रवर्त्तन्ताम्।

कल्पः। सप्त पार्थिवान् सम्भारानाहरत्येवं वानस्पत्यान्। पञ्च पञ्च वा भूयसो वा पार्थिवान् सम्भारानाहरेदिति वाजसनेयकम्। "वैश्वानरस्य रूपं पृथिव्यां परिस्रसा। स्योनमाविशन्तु नः" इति। सिकता इति। विश्वेषां नराणां हितकारी वैश्वानरोऽग्निः तस्याग्नेः स्वरूपं पृथिव्यां परिस्रसा परितः पारयन्त्यः सिकताः स्योनं सुखं यथाभवति तथा नोऽस्माकं देवयजनमाविशन्तु।

कल्पः। "यदिदं दिवो यददः पृथिव्याः। सञ्जज्ञाने रोदसी सम्बभूवतुः। ऊषान् कृष्णमवतु कृष्णमूषाः। इहोभयोर्यज्ञियमागमिष्ठाः" इति। ऊषानित्याहरतीत्येवं सर्व्वत्रानुवर्त्तते। दिवः सम्बन्धि यदिदं ऊषरूपं पृथिव्यां स्थापितं पृथिव्याः सम्बन्धि यददः कृष्णरूपं चन्द्रमसि स्थापितं तत्र यद्द्रूपं संजज्ञाने सम्यगवगच्छन्त्यौ रोदसी द्यावापृथिव्यौ सम्बभूवतुः परस्परसङ्गते तत्र यत् कृष्णरूपं द्यावापृथिवीरूपमस्ति तदेतद्रूषान् दिवःस्वरूपभूतानवतु रचतु। तेचोषास्तत् कृष्णमवन्तु। उभयोः द्यावापृथिव्योः सम्बन्धि यज्ञियं यज्ञयोग्यं अङ्गद्वयमिह देवयजने आगमिष्ठाः आगच्छतु।

कल्पः। "ऊतीः कुर्व्वाणो यत् पृथिवीमचरः। गुहाकारमाखुरूपं प्रतीत्य। तत्तेन्यक्तमिह सम्भरन्तः। शतं जीवेम शरदः

सवीराः'' इत्याखुकरीषमिति। अग्ने त्वं आखुरूपं मूषकरूपं स्वीकृत्य गुहाकारं पर्व्वतगुहायाः आकारो यथा भवति तथा ऊतीः बिलानि कुर्व्वाणः पृथिवीमचरः भूम्यां चरितवानसीति यत् तत् तत्र न्यक्तं निगूढं ते त्वदीयं सारमिह देवयजने सम्भरन्तः सम्पादयन्तो वयं सवीराः पुत्रभृत्यसहिताः तान् शरदः शतं शतसङ्ख्याकान् संवत्सरान् जीवेम।

कल्पः। ''ऊर्ज्जं पृथिव्या रसमाभरन्तः। शतं जीवेम शरदः पुरूचीः। वम्रीभिरनुवित्तं गुहासु। श्रोत्रन्त उर्व्यवधिरा भवामः'' इति। वल्मीकवपामिति। पृथिव्याः रसः सारं ऊर्ज्जं चीरादिवत् समानं वल्मीकवपारूपं सम्भरन्तो वयं शतं शरदो जीवेम। कीदृशीः शरदः पुरूचीः पुरूणि बहूनि भोग्यानि अञ्चन्ति सम्पादयन्तीति पुरूच्यः तादृशीः। कीदृशं रसं गुहासु भूच्छिद्रेषु वम्रीभिः पिपीलिकाभिः सदृशीभिः अनुवित्तं अनुक्रमेण लब्धं हे उर्वि तच्छ्रोत्रं, त्वदीयश्रोत्रस्थानीयां वल्मीकवपामाहृत्य यत् अवधिरा अनुपहतश्रोत्रेन्द्रिया भूयास्म।

कल्पः।''प्रजापतिसृष्टानां प्रजानाम्। चुधोपहत्यै सुवित्तन्नो अस्तु। उपप्रभिन्नमिषमूर्ज्जं प्रजाभ्यः। सूदं गृहेभ्यो रसमाभरामि'' इति सूदमिति। याः प्रजापतिसृष्टाः प्रजाः तासां चुन्निरणाय नोऽस्मत्सम्बन्धीदं कर्दमरूपं सुवित्तं सुष्ठु प्राप्तमस्तु। येयमिडन्नं याचोर्क् रसः उभयं प्रजाभ्यः प्रजार्थं उपप्रभिन्नं अत्यन्तसामीप्यं यथाभवति तथा एकीभूतं तादृशं सूदं रसं पङ्करूपं

सोऽहं गृहेभ्यो वल्मीकानामायतनार्थमाहरामि । इहानयामि ।

कल्पः । "यस्य रूपं बिभ्रदिमामविन्दत् । गुहा प्रविष्टाꣳ सरिरस्य मध्ये । तस्येदं विहतमाभरन्तः । अच्छं वषट्कारमस्यां विधेम" इति । वराहविहतमिति । पुरा प्रजापतिर्यस्य वराहस्य रूपं बिभ्रत् धार्य्यमाणः इमां पृथिवीमविन्ददलभत । कीदृशीं सरिरस्य मध्ये प्रलयकालीनजलस्यान्तः गुहा गोप्यं स्थानं पातालरूपं प्रविष्टाम् । अयमर्थस्तिराचब्राह्मणे स्पष्टमाम्नातः । आपो वा इदमग्रे सलिलमासीत्तस्मिन् प्रजापतिर्वायुर्भूत्वाऽचरत् । स इमामपश्यत्तां वराहो भूत्वाऽहरदिति । तस्य वराहस्य विहतं पोत्रोत्खातमिदं मृद्द्रव्यं आभरन्त आनयन्तो वयमस्यां पृथिव्यामच्छं वषट्कारं वैयर्थ्यं यथा न भवति तथा विधेम कर्म्माण्यनुतिष्ठेम ।

कल्पः । "यत् पर्य्यपश्यत् सरिरस्य मध्ये । उर्व्वीमपश्यज्जगतः प्रतिष्ठाम् । तत् पुष्करस्यायतनाद्धि जातम् । पर्णं पृथिव्याः प्रथनꣳ हरामि" इति । पर्णं जगतः स्थावरजङ्गमरूपस्य प्रतिष्ठां आधारभूतां उर्वीं लब्धुकामः प्रजापतिः सरिरस्य मध्ये प्रलयकालीनजलस्यान्तः यत् पुष्करपर्णमपश्यत् । तथाच पूर्व्वमाम्नातम् । सोऽपश्यत् पुष्करपर्णं तिष्ठदिति । तत् पुष्करस्य पर्णं हरामि । देवयजनभूमौ नयामि । कीदृशम् । आयतनाद्धि जलमध्ये निमग्नात् आधारादुत्पन्नम् । हि शब्दो ब्राह्मणप्रसिद्धिं सूचयति । तच्च ब्राह्मणं पूर्व्वमेवोक्तम् । सोमान्यतः । अस्ति चैतत् । यस्मिन्निदमधितिष्ठतीति । तादृशाधानादिदमुत्प-

नम्। तथा पृथिव्याः प्रथमभूमेर्विस्तारस्थानम्। एतदपि पूर्व्वचाम्नातम्। तत् पुष्करपर्णं प्रथयति।

कल्पः।"याभिरदृꣳहज्जगतः प्रतिष्ठाम्। उर्व्वीमिमां विश्वजनस्य भर्त्रीम्। ता नः शिवाः शर्करा सन्तु सर्व्वाः" इति। जगतः स्थावरादेः प्रतिष्ठामाश्रयभूतां विश्वजनस्य भर्त्रीं सस्यादिद्वारा सर्व्वजनस्य पोषयित्रीमिमामुर्वीं याभिरदृꣳहत् दृढीकृतवान् प्रजापतिः। एतदपि पूर्व्वमुक्तम्। ताꣳ शर्कराभिरदृꣳहदिति। तास्तादृश्यः शर्कराः क्षुद्रपाषाणा नोऽस्मदर्थं सुखप्रदाः सन्तु।

कल्पः। "अग्नेरेतश्चन्द्रꣳ हिरण्यम्। अद्भ्यः सम्भूतममृतं प्रजासु। तत्सम्भरन्नुत्तरतो निधाय [४]। अतिप्रयच्छन्दुरितिं तरेयम्" इति। हिरण्यमिति। तद्धिरण्यं तत्सम्भरन् सम्पादयन् अग्नेर्वीभत्साच्चिवारणायोत्तरपार्श्वे तद्धिरण्यं निधाय रजतमतिप्रयच्छन्। अहं दुरितिं दुर्गतिं तरेयम्॥

कल्पः। "अग्नो रूपं कृत्वा यदश्वत्थेऽतिष्ठः। संवत्सरं देवेभ्योऽनिलाय। तत्ते न्यक्तमिह सम्भरन्तः। शतं जीवेम शरदः सवीराः" इति। अश्वत्थमिति। हे अग्ने त्वं यद्यदा अश्वः सन् तदीयं रूपञ्च सम्यक् कृत्वा देवेभ्योऽनिलाय गूढोपक्रम्य संवत्सरमश्वत्थे स्थितवानसि। तत्तदा ते त्वदीयं न्यक्तमश्वत्थे निगूढं तेजःसारम् इह यज्ञभूमौ सम्भरन्तः सम्पादयन्तो वयं सवीराः पुत्रभृत्यसहिताः शतं शरदो जीवेम।

कल्पः ।"ऊर्ज्जः पृथिव्या अध्युत्थितोऽसि। वनस्पते शतवल्शो विरोह। त्वया वयमिषमूर्ज्जं मदन्तः। रायस्पोषेण समिषा मदेम"। इत्युदुम्बरमिति। हे वनस्पते उदुम्बरवृक्ष उर्ज्जो रसनिमित्तं तत्सिद्धये पृथिव्या अध्युत्थितोऽसि भूमेरुपरि प्ररूढोऽसि अतोऽस्माभिः छिन्नोऽपि पुनः शतशाखायुक्तो विरोह विशेषेण प्रादुर्भव। त्वयोपकृता वयं मिषमन्नमूर्ज्जं रसञ्च मदन्तो हर्षपुरःसरं प्राप्नुवन्तो रायस्पोषेण धनपुष्ट्या समीचीनेनान्नेन युक्ता मदेम पुनरपि हृष्यास्म।

कल्पः। "गायत्रिया ह्रियमाणस्य यत्ते [५]। पर्णमपतत् तृतीयस्यै दिवोधि। सोऽयं पर्णः सोमपर्णाद्धि जातः। ततो हरामि सोमपीथस्यावरुध्यै। देवानां ब्रह्मवादं वदतां यत्। उपाशृणोः सुश्रवा वै श्रुतोऽसि। ततो मामा विशतु ब्रह्मवर्च्चसम्। तत्सभरं स्तादवरुन्धीय साचात्"। इत्येताभ्यां पर्णम्। हे सोम तृतीयस्यै दिवोधि इमं लोकमारभ्य गणनायां तृतीयस्य द्युलोकस्योपरि गायत्रिया ह्रियमाणस्य गायत्रीदेवतया बलादाह्रियमाणस्य ते तव यत् पर्णं भूमावपतत्। सोऽयं पर्णः पलाशवृक्षः स च सोमपर्णाज्जात इति पर्णनामधेयेनैव प्रसिद्धम्। ततः तस्मात् कारणात् सोमपीथस्यावरुध्यै सोमपानस्य सिद्धये हरामि त्वामिहानयामि। किञ्च पलाशवृक्षच्छायायामुपविश्य ब्रह्मवादं वदतामात्मविषयं सम्वादं कुर्व्वतां देवानां सम्बन्धं ते ब्रह्मवादं यद्यस्मात्त्वमुपाशृणोः समीपे स्थित्वा श्रुतवानसि। अतएव सुश्राव इति नाम्नैव त्वं श्रुतोऽसि प्रसिद्धोऽसि। तत्तस्मात्

कारणात् त्वदानयने प्रवृत्तं मां ब्रह्मवर्चसं साक्षादवरुन्धीय विलम्बमन्तरेण प्राप्नुयाम्।

कल्पः। "यथा ते सृष्टस्याग्नेः। हेतिमशमयत् प्रजापतिः। तामिमामप्रदाहाय [६]। शमीꣳ शान्त्यै हराम्यहम्" इति। शमीमिति। हे शमीवृक्ष ते त्वदीयया शाखया प्रजापतिः स्वसृष्टस्याग्नेर्हेतिं प्रदाहरूपमायुधमशमयत्। तामिमां शमीं पूर्व्वस्य दाहस्य शान्त्यै इत ऊर्द्ध्वमप्रदाहाय हरामि यज्ञभूमावानयामि।

कल्पः। "यत्ते सृष्टस्य यतः। विकङ्कतं भा आर्च्छज्जातवेदः। तया भासा सम्मितः। उरुन्नो लोकमनुप्रभाहि" इति। विकङ्कतमिति। हे जातवेदः प्रजापतिना सृष्टस्य यतः शीघ्रं गच्छतः ते तव भाः या दीप्तिः विकङ्कतं वृक्षमार्च्छत्। तया भासा संयुक्तः सन् नोऽस्मदर्थमुरुं विस्तीर्णं लोकं स्थानं अनुप्रभाहि अनुक्रमेण प्रकाशय।

कल्पः। "यत्ते तान्तस्य हृदयमाच्छिन्दञ्जातवेदः। मरुतोऽद्भिस्तमयित्वा। एतत्ते तदशनेः सम्भरामि। सात्मा अग्ने हृदयो भवेह" इति। अशनिहतस्य वृक्षस्य सकलानि त्वचो वेति। हे जातवेदः पुरा कदाचित् मरुतो देवा विद्वेषात् अद्भिः त्वदीयां तां ज्वालां स्तमयित्वा ग्लानिं प्रापय्य तां तस्य ग्लानिं प्राप्तस्य ते वयं हृदयं आच्छिन्दन्। तदेतत्ते हृदयं अशनेः सकाशादहं सम्भरामि। छिन्नस्य हृदयस्याशनौ प्रविष्टत्वात्। ततः सम्भरणं युक्तम्। साशनिरभवदिति ब्राह्मणं पुरोदाहृतम्।

तस्य हृदयस्य मया सम्भृतत्वात्। इह देवयजने हे अग्ने त्वं सात्मा सत्त्वरूपः सहृदयो हृदययुक्तस्त्र भव। एतेषूक्तेषु सर्व्वे-ष्वपि मन्त्रेषूद्धन्तीत्याद्यनुवाकोक्तं तत्तद्ब्राह्मणमनुसन्धेयम् ॥

कल्पः । अथ ब्रह्मौदनशेषꣳ सꣳस्कृत्य तस्मिन्नाज्यशेषमानीय तस्मिꣳस्त्रिचित्रियादश्वत्थस्य तिस्रः समिध आर्द्राः सपलाशाः प्रा-देशमात्र्यस्तिस्रृत्यो विवर्त्तयन्ति । "चित्रियादश्वत्थात् सम्भृता बृहत्यः [७] । शरीरमभिसꣳस्कृताः स्थ । प्रजापतिना यज्ञमुखेन सम्मिताः । तिस्रस्त्रिवृद्भिर्मिथुना प्रजात्यै" इति । ग्रामतडा-गादिचिह्नभूतः प्रसिद्धोऽश्वत्थः । चित्रियः हे समिधः यूयं चित्रियादश्वत्थात्सम्भृता मया सम्पादिता अतएव बृहत्यो म-हत्यः पूज्याः तथा शरीरमभिसंस्कृताः स्थ। चरुगते महत्याज्ये विवर्त्तनेन कृत्स्नं स्वशरीरमभिव्याप्य संस्कारयुक्ता भवथ। किञ्च प्रजापतिरूपेण यज्ञपुरुषमुखेन प्रादेशमात्रेण सम्मिताः तुल्याः तादृश्यस्तिस्रः समिधस्त्रिवृद्भिर्भविष्यदाहवनीयादि-रूपेण त्रिगुणैरग्निभिः सह प्रजात्यै मिथुनाः प्रजोत्पादनार्थं मिथुनीभूताः ॥

कल्पः । "अश्वत्थाद्धव्यवाहाद्धि जाताम्। अग्नेस्तनूं यज्ञि-याꣳ सम्भरामि । शान्तयोनिꣳ शमीगर्भम्। अग्नये प्रजनयि-तवे" इति। आयुर्मयि धेह्यायुर्यजमान इत्यरणी अभिमन्त्रयेति । आयुरित्यादिकः। हव्यं वहतीति हव्यवाहोऽग्निः। तद्रूपो-ऽयमश्वत्थः स्वरूपं हित्वाग्निस्तस्मिन् वृक्षे प्रविश्य संवत्सरमवस्थि-तत्वात्तस्मादश्वत्थाज्जातामुत्पन्नां अरणिं सम्भरामि सम्पाद-

यामि कीदृशीम्। अग्नेर्यज्ञियां तनूं लौकिकदाहपाकादि-हेतुरयज्ञिया तनूः। अरणिरूपा तु या यज्ञार्हा शान्त-योनिं दाहप्रकाशाद्यनभिव्यक्त्या शान्तामग्न्युत्पादकत्वेन योनिश्च शमीगर्भं शमीवृक्षे वेष्टिताश्वत्थवृक्षजन्यत्वेन शमीगर्भमीदृशाम-रणिं अग्नये प्रजनयितवे अग्नेरुत्पादनार्थं सम्भरामीति पूर्व्वे-णान्वयः॥

कल्पः। "यो अश्वत्थः शमीगर्भः। आरुरोह त्वे सचा। तन्ते हरामि ब्रह्मणा [८]। यज्ञियैः केतुभिः सह" इति। शमी-गर्भस्याश्वत्थस्य अरणी आहरतीति अर्थक्रमादयं मन्त्रः पूर्व्व-भावी द्रष्टव्यः। न ह्याहरणमन्तरेणाभिमन्त्रयितुं शक्यते। हे अरणे त्वे त्वयि निमित्तभूतायां सत्यां शमीगर्भो योऽश्वत्थः स च तया शम्या समवेत आरुरोह समारुह्य प्रवृद्धः तं ता-दृशमश्वत्थं ते त्वदर्थं ब्रह्मणा मन्त्रेण यज्ञियैः केतुभिः यज्ञार्है-र्लाञ्छनैरभिमन्त्रणादिवक्ष्यमाणसंस्कारैश्च सह हरामि। यज्ञ-भूमावानयामि॥

कल्पः। "यन्त्वा समभरं जातवेदः। यथा शरीरं भूतेषु न्यक्तम्। स सम्भृतः सीद शिवः प्रजाभ्यः। उरुन्नो लोकमनु-नेषि विद्वान्" इति। सम्भृत्य निदधाति। हे जातवेदः यं त्वा त्वामृत्विजः समभरन् सम्भारयुक्तः कृतवन्तः कीदृशं त्वां भूतेषु प्राणिषु यथाशरीरं तत्तच्छरीरमनभिक्रम्य तमौदर्या-ग्निरूपेण निगूढं स तादृशस्त्वं सम्भृतः सम्भारैर्युक्तः प्रजाभ्यः शिवः प्रजानां सुखप्रदो भूत्वा सीद इह देवयजनस्थानमु-

पविश विद्वान् सर्व्वलोकाभिज्ञः त्वं नोऽस्मदर्थमुरुं विस्तीर्णं लोकमनुक्रमेण सम्पादय॥

कल्पः। दर्व्या ब्रह्मौदनादुद्धृत्य। "प्रवेधसे कवये मेध्याय। वचो वन्दारुवृषभाय वृष्णे। यतो भयमभयं तन्नो अस्तु। अवदेवान् यजेहेड्यान्" इति। जुहोतीति। वेधसे कर्मद्वारा जगतो धात्रे कवये विदुषे सर्व्वज्ञाय मेध्याय यज्ञयोग्याय वृषभाय देवश्रेष्ठाय वृष्णे कामानां वर्षयित्रे वह्नये वन्दारु वचः नमस्कारशीलं वाक्यं अस्माभिः प्रारब्धं प्राणिनां यतो यस्मान्नरकाद्भयं तत्तदस्मान्नोऽस्माकं अभयमस्तु। हेड्यान् क्रोधयोग्यान् अस्मद्विरोधिनो देवान् अवयजे विनाशयामि। यदुक्तं समिदाद्याधानप्रतिपादके ब्राह्मणे गायत्रीभिर्ब्राह्मणस्यादध्यादिति॥

तत्र प्रथममाह। "समिधाग्निं दुवस्यत [८]। घृतैर्बोधयतातिथिम्। आस्मिन् हव्याजुहोतन" इति। हे ऋत्विजः अनया प्रक्षिप्यमाणया समिधा अग्निं दुवस्यत प्रीणयत। अतिथिं वैश्वदेवान्ते समागतं ब्राह्मणमिव पूजनीयमेनमग्निर्घृतैर्बोधयत दीपयत अस्मिन्नग्नौ हव्या हवींषि आजुहोतन सर्व्वत्र जुहुत॥

अथ द्वितीयमाह। "उप त्वाग्ने हविष्मतीः। घृताचीर्यन्तु हर्य्यत। जुषस्व समिधो मम" इति। हे हर्य्यत भजनीय वह्ने हविष्मतीः ब्रह्मौदनाख्यहविष्मत्यो घृताचीः घृताच्यः घृतसम्पृक्ता एताः समिधः त्वामुपयन्तु। मम समिधो जुषस्व प्रीत्या सेवस्व॥

अथ तृतीयमाह। "तन्त्वा समिद्भिरङ्गिरः। घृतेन वर्द्धयामसि। बृहच्छोचा यविष्ठ्य" इति। हे अङ्गिरः अङ्गसौष्ठवयुक्त वह्ने तं तादृशं सर्व्वकर्म्मसु प्रसिद्धं त्वां समिद्भिर्घृतेन च वर्द्धयामसि वयं वर्द्धयामः। हे यविष्ठ्य युवतमाग्ने बृहच्छोचा महत्वं यथा भवति तथा दीप्यस्व॥

यदुक्तं ब्राह्मणे। त्रिष्टुग्भी राजन्यस्येति। तत्र प्रथममाह। "समिध्यमानः प्रथमोनुधर्म्मा। समक्तुभिरज्यते विश्ववारः। [१०] शोचिष्केशो घृतनिर्णिक् पावकः। सुयज्ञो अग्निर्यजथाय देवान्" इति। अयमग्निर्देवान् यजथाय यष्टुमक्तुभिर्घृताक्ताभिः समिद्भिः समज्यते सम्यगभिव्यज्यते दीप्यते। कीदृशोऽग्निः सर्व्वैर्यजमानैः सर्व्वत्र समिध्यमानः प्रथमो नु सर्व्वासां देवतानां मध्ये अवश्यं प्रथमभावी। अतएवान्यत्राम्नातम्। अग्निरग्रे प्रथमो देवतानामिति। धर्म्मा विश्वस्य धारयिता। विश्ववारः अनिष्टं सर्व्वं निवारयितुं समर्थः। शोचींषि ज्वालाः केशस्थानीया यस्यासौ शोचिष्केशः घृतेन निर्णिज्यते निःशेषेण शोध्यते धूमरहितज्वालायुक्तः क्रियते इति घृतनिर्णिक् पावकः सर्व्वस्य शोधकः सुयज्ञः शोभनज्योतिष्टोमादियज्ञहेतुः॥

अथ द्वितीयमाह। "घृतप्रतीको घृतयोनिरग्निः। घृतैः समिद्धो घृतमस्यान्नम्। घृतप्रुषस्त्वा सरितो वहन्ति। घृतं पिवन्सु यजा यक्षि देवान्" इति। अयमग्निर्घृतप्रतीकः। प्रतीकशब्दो मुखं प्रतीकमिति वाजसनेयश्रुतेः। घृतं प्रतीकं मुखं यस्यासौ घृतप्रतीकः। तत्तदाहुतिषु घृतं पिवतीत्यर्थः। घृत-

मेव योनिः ज्वालोत्पत्तिकारणं यस्येति घृतयोनिः। अतएव घृतैः समिद्धः सम्यक् प्रज्वालितः। अन्नमप्यस्य घृतमेव। हे अग्ने घृतप्रुषो घृतविन्दुयुक्ताः सरितस्त्वां वहन्ति। घृतवाहिनीषु नदीषु वायुना घृतविन्दवस्तीरे प्रसरन्ति। तादृशीषु नदीषु प्लवमानस्त्वं क्रीडस्व इत्यर्थः। तथाविधस्त्वं अस्मद्दत्तं घृतं पिबन् सुयजाः शोभनेन यज्ञेन देवान् यक्षि पूजय॥

अथ तृतीयमाह। "आयुर्दा अग्ने हविषो जुषाणः। घृतप्रतीको घृतयोनिरेधि। घृतं पीत्वा मधु चारु गव्यम्। पितेव पुत्रमभिरक्षतादिमम्" [११] इति। हे अग्ने हविषो जुषाणः हवींषि सेवमानः घृतप्रतीको घृतयोनिः सन् आयुर्दा एधि अस्माकमायुःप्रदो भव। तथा मधु मधुरं चारु गव्यं रमणीयं गोसम्बन्धिरसं घृतं पीत्वा इमं यजमानं अभिरक्षतात् सर्व्वतो रक्ष। यथा पिता पुत्रं रक्षति तद्वत्॥

यदुक्तं ब्राह्मणे। जागतीभिर्वैश्यस्येति। तत्र प्रथममाह। "त्वामग्ने समिधानं यविष्ठ। देवा दूतं चक्रिरे हव्यवाहम्। उरुज्रयसं घृतयोनिमाहुतम्। त्वेषञ्चक्षुर्दधिरे चोदयन्वति" इति। हे यविष्ठ युवतमाग्ने समिध्यमानं सम्यक् प्रकाशमानं। त्वां देवाः सर्व्वे हव्यवाहं हविषां वोढारं दूतं चक्रिरे। अतएवान्यत्राम्नातम्। अग्निर्देवानां दूत आसीदिति। उरुज्रयसं उरूणि ज्रयांसि वैरिणामभिभवनानि यस्यासौ उरुज्रयाः तादृशं घृतयोनिं घृतेनोत्पन्नज्वालम् आहुतमाहुतिभिराराधितं त्वेषं दीप्यमानं त्वां चोदयन्वतिविधायकवाक्ययुक्ते कर्माणि

चक्षुर्दधिरे । चक्षुस्थानीयं कृतवन्तो देवाः यथा लोके चक्षुषा रूपं स्पष्टं प्रकाश्यते तथा त्वया विधिवाक्योक्तानि कर्म्माणि सम्पाद्यन्त इत्यर्थः ।

अथ द्वितीयमाह । "त्वामग्ने प्रदिव आहुतं घृतेन । सुम्नायवः सुषमिधाः समीधिरे । स वावृधान ओषधीभिरुक्षितः । उरुज्रयाꣳसि पार्थिवा वितिष्ठसे" इति । सुम्नं सुखमात्मनः इच्छतीति सुम्नायवः ऋत्विजः ते प्रदिवे प्रकृष्टस्वर्गार्थं यद्वा प्रदिवः प्रकृष्टस्वर्गान्निमित्तभूतात् हे अग्ने त्वां घृतेनाहुतं सर्व्वत आराधितं सुषमिधा शोभनया समिधा समीधिरे सम्यगुद्दीपितवन्तः । स त्वं ओषधीभिः ओषध्युपलक्षिताभिः वावृधानः अत्यन्तं वर्द्धमानः उक्षितो घृतेन सिक्तः । पार्थिवाः ज्रयांसि बाधकानि उरु वितिष्ठसे अत्यन्तविश्लिष्टानि स्थापय ॥

अथ तृतीयमाह । "घृतप्रतीकञ्च ऋतस्य धूर्षदम् । अग्निं मित्रं न समिधान ऋञ्जते [१२] । इन्धानो अक्रो विदथेषु दीद्यत् । शुक्रवर्णा मुदुनोयꣳ स ते धियम्" इति । हे ऋत्विग्यजमानाः युष्मत्सम्बन्धिनः ऋतस्य यज्ञस्य धूर्षदं धुरि सीदन्तं निर्वाहकमित्यर्थः । तादृशं घृतप्रतीकमग्निं समिधानो दीपयन् अयमध्वर्य्युर्मित्रं न मित्रमिव ऋञ्जते अलङ्करोति । इन्धानः स्वयं दीप्यमानः अक्रः केनापि न आक्रान्तोऽयमग्निः विदथेषु दीद्यत् अस्मान् प्रकाशयन् नास्मदीयां शुक्रवर्णां निर्म्मलरूपां धियं प्रज्ञाम् उदयंसते अत्यन्तमुद्यच्छते अभिवर्द्धयतीत्यर्थः ॥

कल्पः । "प्रजा अग्ने संवासय । आशाश्च पशुभिः सह ।

राष्ट्राण्यस्मा आधेहि। यान्यासन्त्सवितुः सवे" इति। उत्तरेण गार्हपत्यायतनं कल्माषमजं बध्नातीति। तत्राग्निशब्देनाजः सम्बोध्यते। तस्याग्निसम्बन्धित्वात् आग्नेयी वा एषा यदजेति श्रुत्यन्तरात्। अग्निना सह प्रजापतिमुखादुत्पन्नत्वाच्च। हे अग्ने अजात्मन् प्रजाः अस्मदीयाः पशुभिः आशाः दिग्वर्त्तिनः प्राणिनश्च सम्वासय सम्पादनेन पालय। यानि राष्ट्राणि सवितुः सवे परमेश्वरस्याज्ञायां पूर्व्वमासन् तानि राष्ट्राण्यस्मै यजमानाय आधेहि सर्व्वतः सम्पादय॥

कल्पः। "मही विश्पत्नी सदने ऋतस्य। अर्वाची एतं धरुणे रयीणाम्। अन्तर्वत्नी जन्यं जातवेदसम्। अध्वराणां जनयथः पुरोगाम्" [१३] इति। अरणी आह्रियमाणे यजमानः प्रतीक्षत इति। रयीणां धनानां धरुणे धारयित्र्यौ हे अरणी मही महत्यौ पूजनीयौ विश्पत्नी प्रजानां पालयित्र्यौ अर्व्वाची अभिमुखे सत्यौ ऋतस्य सदने यज्ञस्य स्थाने एतमागच्छतम्। अन्तर्व्वत्नी गर्भिण्यौ युवां जन्यं जनयितारमग्निं जातवेदसं जातानां वेदितारम् अध्वराणां पुरोगां यज्ञानामग्रगामिनं जनयथा उत्पादयतम्॥

कल्पः। "आरोहतं दशतꣳ शक्वरीर्मम। ऋतेनाग्न आयुषा वर्च्चसा सह। ज्योग्जीवन्त उत्तरामुत्तराꣳ समाम्। दर्शमहं पूर्णमासं यज्ञं यथा यजै" इति। हस्ताभ्यां प्रतिगृह्णेति। हे अरणी मम मदीयाः शक्वरीः शक्तियुक्ता अङ्गुलयो ये सन्ति तेषां दशतं दशसङ्ख्यायुक्तवर्गं आरोहतम्। हे अग्ने अरणिगर्भस्य

त्वमपि ऋतेन यज्ञेनायुषा अस्मदीयेन दीर्घायुष्येण वर्चसा बलेन सह दशतमारोहतम्। वयं ज्योक् दीर्घकालं जीवन्तः उत्तरामुत्तराꣳ समाम् उत्तरोत्तरसंवत्सरे विच्छेदमन्तरेण दर्शपूर्णमासञ्च यज्ञं यथा यजै यथा यजामि। तथा त्वमारोहेति पूर्व्वेणान्वयः॥

कल्पः। "ऋत्वियवती स्थो अग्निरेतसौ। गर्भं दधाथां ते वामहं ददे। तत् सत्यं यद्वीरं बिभृथः। वीरं जनयिष्यथः। ते मत्प्रातः प्रजनिष्येथे। ते मा प्रजाते प्रजनयिष्यथः [१४]। प्रजया पशुभिर्ब्रह्मवर्चसेन सुवर्गे लोके" इति। प्रतिगृह्याभिमन्त्रयते यजमान इति। हे अरणी युवां ऋत्वियवती ऋतुः प्राप्तो अस्येति ऋत्वियो योनिः सः ययोररण्योस्ते ऋत्वियवती प्रजननाभिमुखगर्भवत्यौ अग्निरेव रेतोरूपेण गर्भो ययोस्ते अग्निरेतसौ तादृशी स्थो भवतः। तादृश्यौ युवां गर्भं दधाथां गर्भं पोषयतम्। ते तादृश्यौ वां युवामहं ददे आदत्तवानस्मि। ते युवां वीरं कर्म्मसु शूरं पुत्रं बिभृथो धारयथः। अतो वीरमेव जनयिष्यथ इति यत् तत् सत्यं न तु मिथ्या। ते युवां मत् मत्तो निमित्तभूतात् प्रातः प्रजनयिष्यथः परेद्युः प्रातःकाले सर्व्वदा वह्निमुत्पादयिष्यथः। प्रजा ते उत्पादितवत्यौ ते युवामपि प्रजनयिष्यथः प्रजनयितारं करिष्यथः। अतः स्वर्गे लोके प्रजया पशुभिर्ब्रह्मवर्चसेन च युक्तो भविष्यामीति शेषः॥

कल्पः। अथ यजमानो व्रतमुपैति वाचं यच्छति। "अनृ-

तात्सत्यमुपैमि। मानुषाद्दैव्यमुपैमि। दैवीं वाचं यच्छामि" इति। अनृतादग्निराहित्यलक्षणात् सत्यमग्निमत्त्वलक्षणमुपैमि प्राप्नोमि मानुषात् मनुष्याचरणाद् दैव्यं देवयोग्यमाचरणम् उपैमि प्राप्नोमि। देवसम्बन्धिनीं वाचं यच्छामि। नियतां करोमि। संस्कृतभाषयैव व्यवहरामीत्यर्थः॥

कल्पः। शल्कैरेताꣳ रात्रिमेतमग्निमिन्धान आस्ते। "शल्कैरग्निमिन्धानः। उभौ लोकौ सनेमहम्। उभयोर्लोकयोर्ऋध्वा। अतिमृत्युं तराम्यहम्" इत्येतयेति। अहं शल्कैः काष्ठलेशैः अग्निमिन्धानः प्रज्वालयन् उभौ लोकौ एतल्लोकपरलोकौ सनेम सम्भजेयम्। तयोरुभयोर्लोकयोर्ऋध्वा समृद्धो भूत्वा मृत्युमहमतिशयेन तरामि॥

कल्पः। तस्मिन्नुपव्युषमरणी निष्टपति। "जातवेदो भुवनस्य रेतः। इह सिञ्च तपसो यज्जनिष्यते [१५]। अग्निमश्वत्थादधिहव्यवाहम्। शमीगर्भाज्जनयन् यो मयोऽभूः। अयं ते योनिर्ऋत्वियः" इति। एताभ्यामिति। द्वितीयमन्त्रः संहितायामपि पठितत्वात् सूत्रकारेण सर्व्वोऽपि न पठितः। हे जातवेदः ब्रह्मौदनिकाग्नो भुवनस्य रेतः सर्व्वलोकस्य कारणभूतमाधातव्याग्निरूपं इह सिञ्च। अनयोररण्योर्निषिच। यद्रेतस्तपसोऽस्मात् सन्तापनात् जनयिष्यते उत्पत्स्यते तादृशं रेतः सिञ्चेति पूर्व्वत्रान्वयः। योऽग्निराधातव्यो मयोभूः सुखस्य भावयिता हव्यवाहं हविषो वोढारं शमीगर्भादरणिरूपादश्वत्थाज्जनयन् जनयितुकामो निषिञ्चेति पूर्व्वत्रान्वयः॥

द्वितीयमन्त्रपाठस्तु। अयं ते योनिर्ऋत्वियः। "यतो जातो अरोचथाः। तं जानन्नग्न आरोह। अथा नो वर्द्धया रयिम्" इति। जात जनयितव्याग्ने अयमरणिद्वयसङ्घः ते तवोत्पत्त्यर्थं ऋत्वियो योनिः ऋतुयुक्तमुत्पत्तिस्थानं यतो योनिर्जन्मस्थानम् अरोचथाः दीप्तिमानासीत्। योनिमेतदग्निरूपं जानन्नारोह। अथानन्तरं नोऽस्माकं रयिं धनं वर्द्धय॥

कल्पः। अपेतवीतेति गार्हपत्यायतनमुद्धत्येति पाठस्तु। "अपेत वीत वि च सर्पतातः। येऽत्र स्थ पुराणा ये च नूतनाः। अदादिदं यमोवसानं पृथिव्याः। अक्रन्निमं पितरो लोकमस्मै" [१६] इति। यमपुरुषाः सम्बोध्यन्ते। यममेव देवयजनमस्मै निर्याच्येत्येतन्मन्त्रब्राह्मणे समाम्नानात्। हे यमपुरुषाः अत्रास्मिन् देशे पुराणाः ये यूयं स्थ नूतनाश्च ये यूयं स्थ ते सर्व्वेऽपि अतो देशात् अपेत अपगच्छत। वीत परस्परं वियुक्ताः गच्छत। पुनरपि विदूरं सर्पत। यमो राजा इदमवस्थानं अदात् यजमानाय दत्तवान्। पितरश्चेमं लोकं स्थानविशेषं अस्मै यजमानार्थमक्रन् कृतवन्तः॥

कल्पः। सिकतानामर्द्धं द्वेधं विभज्य अर्द्धं गार्हपत्यायतने निर्वपति। अर्द्धं दक्षिणाग्नेरर्द्धं त्रेधं विभज्य पूर्व्वस्मिन्नेतेनैव कल्पेन सर्व्वान् पार्थिवान् निर्वपति। अग्नेर्भस्मासीति सिकता निर्वपति। पाठस्तु। "अग्नेर्भस्मास्यग्नेः पुरीषमसि" इति। हे सिकते अग्नेर्भस्मा भासमानहेतुस्त्वमसि तथा अग्नेः पुरीषं पूरणहेतुस्त्वमसि॥

कल्पः। मञ्ज्ञानमित्यूषास्तान्निर्वपन् यद्दश्चन्द्रमसि कृष्णं तदिहास्त्विति मनसा ध्यायतीति। पाठस्तु। "सञ्ज्ञानमसि कामधरणम्। मयि ते कामधरणं भूयात्" इति। हे ऊष सञ्ज्ञानं सम्यक् ज्ञानहेतुः कामधरणं कामानां धारण-हेतुश्च त्वमसि। ते त्वदीयं यत्कामधारणं सामर्थ्यं तन्मय्यपि भूयात्॥

कल्पः। संयावः प्रियास्तनूवइत्येषा। "संवः सृजामि हृद-यानि। सꣳसृष्टं मनो अस्तु वः। सꣳसृष्टः प्राणो अस्तु वः"इति। एताभ्यां वानस्पत्यान् संसृज्य सिकतावद्विभज्य निर्वपतीति। अत्र सं वः सृजामीति मन्त्रः पूर्वमाम्नातः। हे वानस्पत्यस-म्भाराः वो युष्माकं हृदयानि संसृजामि परस्परमनुरक्तानि करोमि। तथा वो युष्माकं मनः वचश्च संसृष्टमस्तु। हृदयवा-क्येन परस्परस्नेहोऽपि विवक्षितः। मनोवाक्येन कार्य्यैक्यैक-मत्यम्। तथा वो युष्माकं प्राणश्च संसृष्टोऽस्तु॥ अनेन एकविधा प्रवृत्तिर्विवक्षिता। संयाव इति मन्त्रस्तु संहि-तायामाम्नातत्वात् प्रतीकमात्रं सूत्रे दर्शितम्। इह तु सर्व्वोऽप्येवमाम्नातः। "संयावः प्रियास्तनुवः। सम्प्रिया हृद-यानि वः। आत्मा वो अस्तु सम्प्रियः। सम्प्रियास्तनुवो मम" [१७] इति। हे वानस्पत्यसम्भाराः वो युष्माकं याः प्रियास्तनुवः ताः संसृज्यताम् एकस्मिन्नेव कार्य्ये प्रवर्त्तन्ताम्। तथा वो यु-ष्माकं प्रियाणि हृदयानि च संसृज्यताम्। तथा वो युष्माकं प्रियः आत्मा जीवश्च संसृज्यताम्। तथा मम प्रियास्तनुवो-

ऽपि संमृज्यताम्। एकस्मिन् कार्य्ये प्रवर्त्तन्ताम्। ऋत्विग्भिः सह शरीरवक्लृप्तम्॥

कल्पः । क्लृप्तिभ्यामनसीभ्यामग्नीन् यजमान उपतिष्ठते । "कल्पेतां द्यावापृथिवी । येऽग्नयः समनस" इति ।

तत्र क्लृप्ताभिधायके ऋचौ। पाठस्तु । "कल्पन्तामाप ओषधीः। कल्पन्तामग्नयः पृथक्। मम ज्यैष्ठ्याय सव्रताः। येऽग्नयः समनसः। अन्तरा द्यावापृथिवी। वासन्तिकावृतू अभिकल्पमानाः। इन्द्रमिव देवा अभिसंविशन्तु" इति। द्यावापृथिव्यादयः सर्व्वे मम ज्यैष्ठ्याय उत्तमफलसिद्धये सव्रताः व्रतेन कर्म्मणा युक्ताः सन्तः स्वस्वव्यापारक्षमा भवन्तु। सामनस्याभिधायके ऋचौ। पाठस्तु। "येऽग्नयः समनसः। अन्तरृद्धास्त्वं त्विति"। हे अग्ने द्यावापृथिव्योर्मध्ये त्वया सह समानमनस्का येऽग्नयः सन्ति। ते सर्व्वेऽपि वासन्तिकावृतू ऋत्ववयवौ वासन्तिकमासौ चैत्रवैशाखाख्यौ अभिकल्पमानाः सर्व्वतः सम्पादयन्तस्त्वामभितः संविशन्तु। यथा देवाः इन्द्रमभिसंविशन्ति तद्वत्॥

अनन्तरं मन्त्रस्तु गार्हपत्याधानमन्त्राणां मध्ये सूत्रकारेणोदाहृतः। पाठस्तु। "दिवस्त्वा वीर्य्येण। पृथिव्यै महिम्ना [१८] अन्तरिक्षस्य पोषेण। सर्व्वपशुमादधे" इति। हे गार्हपत्य द्युलोकस्य यद्वीर्य्यं पृथिव्याश्च यो महिमा अन्तरिक्षस्य पोषेण पोषं सामर्थ्यं तैः सर्व्वैरपि सर्व्वपशुप्रदानसमर्थं त्वामिहायतने आदधे॥

कल्पः। "अजीजनन्नमृतं मर्त्यासः। अस्रेमाणं तरणिं वीडुजम्भम्। दश स्वसारो अग्रुवः समीचीः। पुमाꣳसञ्जातमभिसꣳरभन्ताम्" इति। जातमञ्जलिनाभिगृह्णीयेति। मर्त्यासो मनुष्या ऋत्विजः अमृतं मरणरहितमग्निं देवं अजीजनत् उत्पादितवन्तः। कीदृशमग्निं अस्रेमाणं अगम्यं अशोषणीयं वा। स्रेगृ गतिशोषणयोरिति धातुः। तरणिं दुःखेभ्यस्तारकं वीडुजम्भं दृढदन्तमूलं अग्रुवो अङ्गुलयः ताश्च शरीरेण सहोत्पन्नत्वात् स्वसारो भगिनीसमानाः। दशसङ्ख्याकास्ताः अङ्गुलयः समीचीरनुकूला भूत्वा जातं अभिरूपं पुमांसं अभिसंरभन्तां अभितः सङ्गृह्णन्तु॥

कल्पः। जातं यजमानोऽभिप्राणीति। "प्रजापतेस्त्वा प्राणेनाभिप्राणिमि। पूष्णः पोषेण मह्यम्। दीर्घायुत्वाय शतशारदाय। शतꣳ शरद्भ्य आयुषे वर्चसे [१८] जीवात्वै पुण्याय" इति। हे अग्ने प्रजापतेः प्राणेन प्राणवायुना त्वामभिलक्ष्य प्राणिमि श्वासङ्करोमि। तथा पूष्णो देवस्य पोषेण सामर्थ्येन वा अभिप्राणिमि। किमर्थं मह्यं मम शतशारदाय दीर्घायुत्वाय शतसंवत्सरपरिमितं यद्दीर्घायुस्तत्सिद्धये। किञ्च। शतं शरद्भ्यः शतसङ्ख्याकेभ्यः संवत्सरेभ्यः ऊर्द्धमप्यायुःसिद्धये वर्चसे बलाय जीवात्वै जीवनौषधाय पुण्याय सुकृतसिद्धये च॥

कल्पः। "अहं त्वदस्मि मदसि त्वमेतत्। ममासि योनिस्तव योनिरस्मि। ममैव सन्वह हव्यान्यग्ने। पुत्रः पित्रे लोककृज्जातवेदः"। इत्याधीयमानमनुं मन्त्रयते यजमान इति।

हे आहवनीयाग्ने अहं त्वत्तो हेतोरस्मि। यदा त्वमासीत्त-दानीमहमस्मि। यदा तु त्वं नासीस्तदानीं विद्यमानोऽपि अहं निष्प्रयोजनत्वेन नास्मि। त्वञ्च मदसि मत्तो हेतोर्जायसे। एतच्च प्रत्यक्षम्। एवमुक्तप्रकारेण मम योनिः कारणं त्वमसि। तवापि योनिः कारणमहमस्मि। तस्मात् ममैव बन्धुः सन् मदीयानि हव्यानि वह। हे जातवेदः यथा लोके पुत्रः पित्रे लोककृत् पुण्यलोकसम्पादको भवति तद्वदतिस्नेहेन मम लोककृद्भव॥

अनन्तरमन्त्रो गार्हपत्याधानमन्त्रेषु सूत्रकृता उदाहृतः। पाठस्तु। "प्राणे त्वाम्टतमादधामि। अन्नादमन्नाद्याय। गोप्तारं गुप्त्यै" इति। मम गुप्त्यै रक्षणसिद्धये गोप्तारं त्वादधामि॥

कल्पः। "सुगार्हपत्यो विदहन्नरातीः। उषसः श्रेयसीः श्रेयसीर्दधत् [२०] अग्ने सपत्नाꣳ अपबाधमानः। रायस्पोषमिषमूर्जमस्मासु धेहि" इति। आधीयमानमभिमन्त्रयते यजमान इति। शोभनो गार्हपत्योऽयमग्निः अरातीः द्वेषिणः विशेषेण दहन् उषसो दिवसात् श्रेयसीः श्रेयसीर्दधत् उत्तरोत्तरश्रेष्ठान् कुर्व्वन् वर्त्तते। हे अग्ने गार्हपत्यसपत्नानस्मदीयान् शत्रून् अपबाधमानः पीडयन् धनपुष्टिमन्नरसञ्च अस्मासु सम्पादय॥

कल्पः। "इमा उमामुपतिष्ठन्तु रायः। आभिः प्रजाभिरिह संवसेय। इहो इडा तिष्ठतु विश्वरूपी। मध्ये वसोर्दीदिहि जातवेदः" इति। प्राञ्चोऽश्वप्रथमा अभिप्रव्रजन्तीति। इमा उमा रायः लोके दृश्यमानानि सर्व्वाण्यपि धनानि

मामुपतिष्ठन्तु प्राप्नुवन्तु। आभिः पुत्रपौत्रादिभिः प्रजाभिः सहेहास्मिन् जन्मनि संवसेय सम्यक् तिष्ठामि। किञ्च इहो इहैव जन्मनि विश्वरूपी महिष्यजाद्यनेकपशुरूपयुक्ता इडा गौस्तिष्ठतु। हे जातवेदः त्वं अस्मदीयस्य वसोर्मध्ये स्वामित्वेन स्थित्वा दीदिहि दीप्यस्व॥

कल्पः। गार्हपत्ये प्रणयनीयमाश्वत्थमिध्ममादीप्य सिकता-स्वोपयमनीरुपकल्पयते तमुद्यच्छति। "ओजसे बलाय त्वोद्य-च्छे। वृषणे शुष्मायायुषे वर्चसे। सपत्नतूरसि वृत्रतूः। यस्ते देवेषु महिमा सुवर्गः [२१]। यस्त आत्मा पशुषु प्रविष्टः। पुष्टिर्याते मनुष्येषु प्रथे। तया नो अग्ने जुषमाण एहि। दिवः पृथिव्याः पर्यन्तरिक्षात्। वातात् पशुभ्यो अध्योषधीभ्यः। यत्र यत्र जातवेदः सम्बभूव। ततो नो अग्ने जुषमाण एहि" इति। हे अग्ने त्वां ओजःप्रभृतिसिद्ध्यर्थमुद्यच्छे। ओजो बलहेतुः अष्टमो धातुः। बलं शरीरसामर्थ्यम्। वृषन्शब्दः सेवनसामर्थ्यवाची। शुष्मशब्दोऽत्र सहकारिसम्पादितां शक्तिमाचष्टे। आयुः प्रसिद्धम्। वर्चः कान्तिः। हे अग्ने त्वं सपत्नतूरसि वैरिहिंसकोसि। तथा वृत्रतूः धर्मबुद्धेरावरकानां पापानां हिंसकोसि। सोऽय-मेको मन्त्रः। हे अग्ने देवेषु मध्ये कर्म्मफलभूतः स्वर्गरूपो यस्ते महिमा पशुषु क्षीरादिहविःस्वरूपेण प्रविष्टो यः तवात्मा अत्यन्तप्रियः पदार्थः। मनुष्येषूदराग्निजनिता या त्वदीया पुष्टिः प्रथे प्रसिद्धा वर्त्तते। तया पुष्ट्या तदुपलक्षित-स्वर्गक्षीराभ्याञ्च नोऽस्मान् जुषमाण एहि। सोऽयं द्वितीयो

मन्त्रः। दिवः पृथिव्या अन्तरिक्षाद्दोपरिवातात् पशुभ्यः। ओषधिभ्यस्तोपरि तथा यत्र यत्र देशविशेषे हे जातवेदः सम्बभूव उत्पन्नोसि। हे अग्ने ततः सर्व्वस्मात्स्थानात् नोऽस्मान् जुषमाण एहि॥

अनन्तरभाविनस्त्रयो मन्त्राः प्रणयनकाले गमनार्थाः। तत्र प्रथममाह। "प्राचीमनु प्रदिशं प्रेहि विद्वान्। अग्नेरग्ने पुरो अग्निर्भवेह। विश्वा आशादीद्यानो विभाहि [२२]। ऊर्ज्जन्नो धेहि द्विपदे चतुष्पदे" इति। हे अग्ने प्राचीं पूर्व्वां प्रदिशं प्रकृष्टां दिशमनुलक्ष्य विद्वान् मार्गाभिज्ञः प्रेहि प्रकर्षेण गच्छ। अग्नेर्गार्हपत्यस्येह पुरोऽग्निर्भव अस्मिन् देवयजने पूर्व्वदिग्वर्त्तीवह्निर्भव। दीद्यानः स्वयं प्रकाशमानो विश्वा आशा विभाहि सर्व्वाः दिशः प्रकाशय। नोऽस्मदीयाय द्विपदे मनुष्याय चतुष्पदे पशवे च ऊर्ज्जं रसं धेहि सम्पादय। अयं मन्त्रो घर्म्मः शिर इत्यनुवाकेऽपि समाम्नातः। प्रयोजनन्तु द्विराम्नातस्य सूत्रान्तरे द्रष्टव्यम्॥

अथ द्वितीयमाह। "अन्वग्निरुषसा अग्रमख्यत्। अन्वहानि प्रथमो जातवेदाः। अनु सूर्य्यस्य पुरुत्रा च रश्मीन्। अनु द्यावापृथिवी आततान" इति। अयमग्निरुषसामग्रं प्राप्तः अन्वख्यत् अनुक्रमेण प्रकाशितवान्। प्रथमो देवेषु मुख्योऽयं जातवेदाः अहानि दिवसान् अन्वख्यत्। किञ्च सूर्यस्य पुरुत्रा सर्व्वानपि रश्मीन् अन्वख्यत्। तथा द्यावापृथिव्यावनुक्रमेण आततान सर्व्वतो व्याप्तवान्। यद्यप्ययं मन्त्रो नापस्तम्बेन विनि-

युक्तस्तथापि सूत्रान्तरानुसारेण अत्र विनियोगो द्रष्टव्यः॥

अथ तृतीयमाह। "विक्रमस्व महाꣳ असि। वेदिषन्मानुषेभ्यः। त्रिषु लोकेषु जागृहि" इति। हे अग्ने विक्रमस्व। अनिष्टनिवारणे पराक्रमं कुरु। त्वं महानसि अधिकशक्तियुक्तोऽसि। मानुषेभ्यो मनुष्याणामर्थे वेदिषन् वेद्यामुपविष्टः सन् त्रिषु लोकेषु जागृहि यजमानं नेतुं सावधानो भव॥

कल्पः। "यदिदं दिवो यददः पृथिव्याः। संविदाने रोदसी सम्बभूवतुः [२३]। तयोः पृष्ठे सीदतु जातवेदाः। शम्भूः प्रजाभ्यस्तनुवे स्योनः" इति। अभिमन्त्र्येति। यदिदं मूषाख्यं दिवो यज्ञियं पृथिव्यां वर्त्तते। यच्चादः कृष्णाख्यं पृथिव्याः यज्ञियं दिवि चन्द्रमसि वर्त्तते। तेनोभयेन वयमेनं मन्यामहे। रोदसी द्यावापृथिव्यौ सम्विदाने ऐकमत्यं गते सम्बभूवतुः। पूर्व्वमेकौ बभूवतुरिति तयोस्तादृश्योः द्यावापृथिव्योः पृष्ठे उपरि जातवेदाः सीदतु। कीदृशः प्रजाभ्यः शम्भूः प्रजानां सुखस्य भावयिता तनुवे स्योनः स्वशरीराय च सुखकरः॥

अनन्तरमन्त्रा आहवनीयाधाने सूत्रकारेणोदाहृताः। तत्पाठस्तु। "प्राणं त्वामृत आदधामि। अन्नादमन्नाद्याय। गोप्तारं गुप्त्यै। यत्ते शुक्र शुक्रं वर्चः शुक्रा तनूः। शुक्रं ज्योतिरजस्रम्। तेन मे दीदिहि तेन त्वादधे। अग्निनाग्ने ब्रह्मणा। आनशे व्यानशे सर्व्वमायुर्व्यानशे" [२४] इति। हे आहवनीय। प्राणरूपं त्वां अमृते स्थाने विनाशरहिते आदधामि अस्माकमन्नाद्यसिध्यर्थमन्नादं त्वा आदधामि। रक्षणार्थं गो-

प्तारं त्वामादधामि। सोऽयमेको मन्त्रः। हे शुक्र दीप्यमा-नाग्ने तव यच्छुक्रं वर्चः निर्म्मला कान्तिः। या च शुक्रा तनूः निर्म्मलो देहः। यच्चाजस्रं निरन्तरं शुक्रं ज्योतिः निर्म्मलं नि-रन्तरभासकत्वम्। तेन सर्व्वेण युक्तो मे मदर्थं दीदिहि प्रकाशस्व। तेन कारणेन हे अग्ने अग्निना ब्रह्मणा अग्निप्रकाश-केन मन्त्रेण त्वामादधे। अयं द्वितीयो मन्त्रः। अयमग्निरा-नशे भोक्तृदेहं व्याप्तवान्। व्यानशे विविधं भोग्यजातं व्याप्त-वान्। तथा सर्व्वमायुरपमृत्युपरिहारेण व्यानशे व्याप्तवान्। अयं तृतीयो मन्त्रः। तावेतौ द्वितीयतृतीयौ घर्म्मः शिर इत्यनु-वाकेऽप्याम्नातौ। तयोः प्राचीमिति मन्त्रवत् पृथगुपयोगः सूत्रान्तरे द्रष्टव्यः। यद्वा अस्यानुवाकस्य मन्त्रकाण्डानुरूप-त्वात् घर्म्मः शिर इत्यादिकमप्यत्रत्यमेवेति दर्शयितुं तदेक-देशोऽत्र पठितः। ब्राह्मणसम्बन्धार्थं तत्राम्नातं द्रष्टव्यं यदुक्तं सूत्रकारेण॥

अथ विराट्क्रमैर्यजमान उपतिष्ठते इति। तत्र प्रथमं वि-राट्क्रममन्त्रमाह। "नर्य्य प्रजां मे गोपाय। अमृतत्वाय जी-वसे। जातां जनिष्यमाणाञ्च। अमृते सत्ये प्रतिष्ठिताम्" इति। हे नर्य्य मनुष्येभ्यो हितं गार्हपत्यं मे मदीयां प्रजां गोपाय। किमर्थं अमृतत्वाय जीवसे अपमृत्युरहितजीवनाय। कीदृशीं प्रजाम्। पूर्व्वमुत्पन्नां इतःपरं उत्पत्स्यमानाञ्च। तथा अमृत-हेतौ सत्ये प्रतिष्ठितां सर्व्वदा सत्यवादिनीमित्यर्थः॥

अथ द्वितीयमाह। "अथर्व्व पितुं मे गोपाय। रसमन्न-

मिहायुषे। अदब्धायोऽशीततनो। अविषन्नः पितुं कृणु” इति। अथर्व्वपूर्व्वमथर्व्वाख्येन महर्षिणा मथितत्वात्तद्रूपत्वं तथा चाचाम्नातम्। अथर्व्वा त्वा प्रथमो निरमन्थदग्न इति। तादृश हे दक्षिणाग्ने मे पितुं मदीयमन्नं गोपाय। यो रक्षः चौरादिः यच्चान्नं ब्रीहिकं तदुभयमिह शरीरे आयुषे आयुरर्थं स्थापयेति शेषः। हे अदब्धायो केनाप्यहिंसित आगमनेन खलु त्वदीयमागमनं केनचिदपि निवारयितुं शक्यम्। हे अशीततनो उष्णस्पर्शशरीर नोऽस्मादीयं पितुमन्नं अविषं विषरहितं कुरु॥

अथ तृतीयमाह। “शंस्य पशून्मे गोपाय। द्विपदो ये चतुष्पदः [१५]। अष्टाशफाश्च य इहाग्ने। ये चैकशफा आशुगाः” इति। हे शंस्य ऋत्विग्भिः प्रशस्यमान आहवनीय मे पशून् गोपाय। ये पशवो द्विपदो मनुष्यरूपाः येऽपि चतुष्पदो गवादिरूपाः। तेष्वपि चतुष्पात्स्वष्टाशफाः गोमहिष्यादयः। एकशफा आशुगामिनश्वाश्वादयः ये सन्ति तान् सर्व्वान् इह लोके हे अग्ने गोपाय॥

अथ चतुर्थमाह। “सप्रथ सभां मे गोपाय। ये च सभ्याः सभासदः। तानिन्द्रियावतः कुरु। सर्व्वमायुरुपासताम्” इति। ये च सभ्याः सभायोग्याः सभासदः सभायामुपविष्टाः सन्ति तान् सर्व्वानिन्द्रियावतः चक्षुरादीन्द्रियपाटवयुक्तान् कुरु। ते सभ्याः सर्व्वमायुः शतसम्वत्सरमायुरुपासतां सेवताम्॥

अथ पञ्चममाह। “अहे बुध्निय मन्त्रं मे गोपाय। यमृष-

यस्त्रयिविदा विदुः। ऋचः सामानि यजूंषि। सा हि श्रीर-मृतासताम्'' [२६] इति। हे अहे अहिंसितव्य बुध्निय बुध्ने मूले जगदादावुत्पन्नावसथ्य मे मदीयं ऋगादिरूपं मन्त्रं गोपाय। यं मन्त्रं त्रैविदाः वेदत्रयाभिज्ञाः ऋषयः अतीन्द्रियद्रष्टारो विदुर्जानन्ति। तं मन्त्रं गोपायेति पूर्व्वत्रान्वयः। वेदत्रयोक्ता मन्त्रविशेषाः ऋगादयः। गृहक्षेत्रादिपालनं परित्यज्य मन्त्र-पालनप्रार्थने कारणमुच्यते। सतां सन्मार्गवर्त्तिनां ऋगादि-रूपा खल्वमृता श्रीः। धनादिरूपायाः श्रियो बहुधा विनाशः सम्भावितः। ऋगादिरूपायास्तु पुनः पुनरभ्यासेन अभिवृद्धि-रेव न तूपचयः॥

कल्पः। "चतुःशिखण्डा युवतिः सुपेशाः। घृतप्रतीका भुवनस्य मध्ये। मर्म्मृज्यमाना महते सौभगाय। मह्यं धुक्ष्व यज-मानाय कामान्" इति। वेदिं सम्मृज्यमानामिति। अनुमन्त्र-यते इति शेषः। अस्य च दर्शपूर्णमासगते याजमानत्वात्तस्याङ्ग एवायं मन्त्र उत्तरे द्रष्टव्यः। बालानामूर्द्धगताः चत्वारः शिख-ण्डवदुन्नताः श्रेणिद्वयांसद्वयप्रदेशा यस्याः वेदेः सा चतुःशि-खण्डा युवतिः। मिश्रयित्री सर्व्वाणि हवींषि वेद्यां मिश्रीभव-न्ति। तत्राहितत्वात् सुपेशाः सुवर्णं तद्वच्छोभमानं रूपं यस्याः सा सुपेशाः। घृतप्रतीका घृतमेव प्रतीके मुखे यस्याः सा घृतप्र-तीका। आदावाज्यमेव वेद्यामासाद्यते। तादृशी वेदिर्भुवनस्य मध्ये अस्माकं महते सौभगाय मर्म्मृज्यमाना अतिशयेन शोध्य-माना वर्त्तते। हे वेदे यजमानाय मह्यं कामान् धुक्ष्व सम्पादय॥

कल्पः। "इहैव सन्तस्त्र सतो वो अग्नयः। प्राणेन वाचा मनसा बिभर्मि तिरोमासन्तमायुर्माप्रहासीत्। ज्योतिषा वो वैश्वानरेणोपतिष्ठे" इति। यद्यनुपस्थाय प्रवसेदित्येवोपतिष्ठेतेति। अग्निहोत्रिणो ग्रामान्तरगमने प्राप्ते सति अग्न्युपस्थानं कृत्वा पश्चाद्गन्तव्यम्। यदि कदाचिन्महदुपस्थानस्यावसरो न स्यात्। तदानीमेतयैवैकयोपतिष्ठेत। हे अग्नयः इहैव देशे सन्नर्हन्तः तत्र गृहविशेषे सतो वर्त्तमानान् युष्मान् प्राणेन वाचा मनसा बिभर्मि धारयामि। ग्रामान्तरे गतस्यापि मम प्राणादयो भवद्विषयदेशवर्त्तित्वेन तिरोभूय सन्ततमवस्थितं मां आयुः मा प्रहासीत् मा परित्यजतु। वैश्वानरेण सर्व्वमनुष्यहितेन ज्योतिषा युक्तान् वो युष्मान् उपतिष्ठे। यत्र तत्र स्थितोऽप्यहं सेवे। अयं मन्त्रोऽग्न्युपस्थानप्रकरणेऽग्निहोत्रविषये नेतव्यः॥

कल्पः। "पञ्चधाग्नीन् व्यक्रामत्। विराट्सृष्टा प्रजापतेः। ऊर्द्धारोहद्रोहिणी। योनिरग्नेः प्रतिष्ठितिः" [२७] इति। सर्व्वाणीति यजमान उपतिष्ठत इत्यनुवर्त्तते। प्रजापतेः सम्बन्धिनी येयं सृष्टा विराट् विशेषेण राजमाना गोशरीरधारिणी तानेतानग्नीन् पञ्चधा व्यक्रामत् विभज्य क्रान्तवती। अस्मिन् प्रदेशे गार्हपत्य अस्मिन्नाहवनीय इत्येवं पदेनाक्रम्य दर्शितवतीत्यर्थः। सा पुनः स्वस्याः प्रयोजनविशेषमेव पश्यन्ती ऊर्द्धाभिमुखी द्युलोकमारोहत्। आरुह्य च रोहिणीभूत्। सा चाग्नेर्योनिः कारणभूता प्रतिष्ठाहेतुश्च रोहिणीनक्षत्रेऽग्नेराधेयत्वात्॥

अत्र विनियोगसङ्ग्रहः।

उद्धन्य भूमिमुद्धन्ति शन्नोदेवीरवोक्षति।
वैश्वेति सिकतान्युप्य यदेत्यूषान् वपेत्तथा॥
ऊतीराखुकरीषञ्चोर्जं वल्मीकवपां प्रजा।
सूदं यस्य तु वाराहीमृदं यत् पद्मपत्रकम्॥
याभिस्तु शर्करा अग्ने स्वर्णमश्वेति पिप्पलम्।
ऊर्ज औदुम्बरं गायन् द्वाभ्यां पर्णं यया शमीम्॥
यत्ते विकङ्कतं यत्तेऽशनिं दग्ध तथा तरुम्।
चित्रीत्यश्वत्थसमिधोऽश्वत्थादरणिमन्त्रणम्॥
यो अश्वारण्युपादानं यं त्वासम्भारसादनम्।
प्रवे ब्रह्मौदने होमस्तिस्रभिः समिधः क्षिपेत्॥
समित्त्रिभिस्तु राजन्यस्त्वां त्रयेण तु वैश्यकः।
प्रजा अजं प्रबध्नाति मही अरणिवीक्षणम्॥
आरोराणी प्रगृह्णाति च्छलिद्वाभ्यान्तु मन्त्रणम्।
अनुवाच्यं नियम्याथ शल्मौ रात्रौ समिध्यते॥
जात द्वाभ्यां प्रातरग्न्यावरणी निष्टपेत्तथा।
अयेति स्थानमुद्धृत्यादग्नेस्तु सिकता वपेत्॥
सम्बोद्वाभ्यान्तु सम्भारान् वानस्पत्यान् प्रसंसृजेत्।
ऋग्द्वाभ्यामग्न्युपस्थानं दिवस्त्वा पश्चिमानलम्॥
आधत्ते जीवणं त्वग्निमञ्जलौ धारयेत् प्रजाः।
जातं प्राणित्यहं पूर्व्वानलाधानेऽभिमन्त्रयेत्॥
प्राणे त्वा पश्चिमाधानं सुगार्हत्यभिमन्त्रणम्।

इमाः प्राञ्चोऽभियान्त्योजस्विभिरुद्यम्यतेऽनलः ॥
प्राचीत्त्रिभिः पूर्व्वयानं यदि वह्न्यभिमन्त्रणम् ।
प्राणं द्वाभ्यां सर्व्ववह्नेराधीनं ह्यनुमन्त्रयेत् ॥
उपस्थितिर्निर्यपञ्च चतुर्व्वेदिं समीयते ।
इह गन्तुरुपस्थानं पञ्चसर्व्वाग्निमन्त्रणम् ॥
अत्राधानगता मन्त्रा द्वासप्ततिरुदीरिताः ॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे आद्यकाण्डे द्वितीयप्रपाठके प्रथमोऽनुवाकः ॥
॥ १ ॥

अथ द्वितीयोऽनुवाकः ।

प्रथमेऽनुवाके आधानमन्त्रा उक्ताः। तावताधानं समाप्तम्। अथ पञ्चस्वनुवाकेषु गवामयने केचिद्विशेषा उच्यन्ते। तत्रास्मिन्ननुवाके विषुवन्नामके मुख्यमहः। तदुभयपार्श्ववर्त्तीनि चत्वार्य्यहान्युच्यन्ते। तदेतद्विधत्ते। "नवैतान्यहानि भवन्ति। नव वै सुवर्गा लोकाः। यदेतान्यहान्युपयन्ति। नवस्वेव तत्सुवर्गेषु लोकेषु सत्त्रिणः प्रतितिष्ठतो यन्ति" इति। षष्ठे मासि षड्विंशतिसङ्ख्याकेष्वहस्सु गतेषु अवशिष्टानि चत्वार्य्यहानि तत ऊर्द्धं विषुवन्नामकमेकं मुख्यमहः। ततोऽप्यूर्द्धमुत्तरमासषट्कस्यादौ चत्वार्य्यहानीत्येवमेतानि नवसङ्ख्याकान्यहान्यनुष्ठेयानि। व्युष्टाभिर्लोकपालैः परिपालिता अष्टसङ्ख्याकाः स्वर्गा लोकाः तेषां मध्ये कश्चिदूर्द्धदिग्वर्त्ती स्वर्ग इत्येवं नवसङ्ख्याकाः स्वर्गाः।

तेषु नवस्वपि तेन यथोक्तानुष्ठानेन प्रतिष्ठां प्राप्नुवन्तो गच्छन्ति ॥

अत्र कश्चिच्छाखान्तरीयं पक्षमुपन्यस्यति। "अग्निष्टोमाः परःसामानः कार्य्या इत्याहुः। अग्निष्टोमसम्मितः सुवर्गो लोक इति। द्वादशाग्निष्टोमस्य स्तोत्राणि। द्वादश मासाः संवत्सरः" इति। परांसि उत्कृष्टतराणि सामानि येषु अहर्विशेषेषु ते परःसामानः। तेषु विषुवतोऽह्नः परस्तादुपरिष्टाच्च त्रयस्त्रयः ते षडप्यग्निष्टोमात्मकाः कर्त्तव्या इति शाखान्तराध्यायिन आहुः। तत्रायं हेतुः। अग्निष्टोमेन सदृशः स्वर्गः तत्कथमिति तदुच्यते। अग्निष्टोमस्य द्वादशसङ्ख्यानि स्तोत्राणि विद्यन्ते। प्रातःसवने बहिष्पवमानाख्यमेकं स्तोत्रं चत्वार्य्याज्यस्तोत्राणि। माध्यन्दिने सवने माध्यन्दिनपवमानाख्यमेकं स्तोत्रम्। पृष्टस्तोत्राणि चत्वारि। तृतीयसवने आर्भवपवमानाख्यमेकं स्तोत्रम्। यज्ञायज्ञियं द्वितीयम्। तदेवं द्वादश स्तोत्राणि सङ्ख्यासाम्यात् मासद्वारा संवत्सरसम्पत्तौ सत्यां स्वर्गवासिना संवत्सरदेवेनाग्निष्टोमः समो भवति ॥

तमेतं शाखान्तरपक्षं दूषयित्वा स्वपक्षं विधत्ते। "तत्तन्न सूर्त्र्यम्। उक्थ्या एव सप्तदशाः परःसामानः कार्य्याः [१]। पशवो वा उक्थानि। पशूनामवरुध्यै" इति। परःसामाख्या अहर्विशेषा अग्निष्टोमरूपा इति यदन्यैरुक्तं तत्तथा। न सूर्त्र्यं न द्रष्टव्यम्। सूर्च्चदर्शने इति धातुः। कथं तर्हीति तदुच्यते। उक्थ्यनामकानि द्वादशभ्यः स्तोत्रेभ्य उपरितनानि त्रीणि

स्तोत्राणि यस्मिन् क्रतौ सोऽयमुक्थ्यः। तादृशा एव परःसामाख्या अहर्विशेषाः सप्तदशस्तोमयुक्ता कर्त्तव्याः। यानि त्रीण्युक्थ्यस्तोत्राणि तानि पशुप्राप्तिहेतुत्वात् पशव एव। तस्मादुक्थ्यानुष्ठानं पशुप्राप्तये भवति॥

उभयपार्श्ववर्त्तिभ्यः परःसामाख्येभ्योऽहर्विशेषेभ्यः पुरस्तादुपरिष्टाच्च द्वे अहनी विधत्ते। "विश्वजिदभिजितावग्निष्टोमौ" इति। विश्वजिदाख्यो योऽयमेकाहः स उक्थ्येभ्यः पुरस्तात्कर्त्तव्यः। स च षष्ठे मासि सप्तविंशे दिने प्राप्नोति। अभिजिदाख्योपर एकाहः। स च परःसामभ्य उपरिष्टात्कर्त्तव्यः। तथा सति विषुवत उपरितने मासि चतुर्थदिने प्राप्नोति। तावेतावग्निष्टोमौ द्वादश स्तोत्रयुक्तावेव कार्य्यौ॥

अथ पूर्व्वोक्तान्यहानि प्रशंसति। "उक्थ्याः सप्तदशाः परःसामानः। ते सꣳस्तुता विराजमभिसम्पद्यन्ते। द्वे चर्चावतिरिच्येते। एकया गौरतिरिक्तः। एकयायुरूनः। सुवर्गो वै लोको ज्योतिः। ऊर्ग्विराट् [२]। सुवर्गमेव तेन लोकमभिजयन्ति" इति। विषुवतः पुरस्तादुपरिष्टाच्च सप्तदशस्तोमयुक्ताः परःसामाख्या अहर्विशेषा उक्थ्यरूपा ये पूर्व्वं विहिताः सन्ति। तेषु विद्यमानाः स्तोत्रविशेषा विराजं दशसङ्ख्या सम्पद्यन्ते। तत्प्रकारस्तु सामवेदविहितप्रकारेण गणयित्वा द्रष्टव्यः। ते च परःसामानः पूर्व्वस्मिन् पक्षे ज्योतिर्गौरायुरित्येवमनुक्रमेण कर्त्तव्याः। उत्तरस्मिन् पक्षे आयुर्गौर्ज्योतिरित्येवं व्युत्क्रमेण कर्त्तव्याः। तत्र तत्र सामवेदोक्तप्रकारेण

गौर्नामकः क्रतुरेकया स्तोत्रियया दशसङ्ख्याभ्योऽतिरिच्यते। आयुर्नामकः क्रतुरेकया न्यूनः। तयोरुभयोर्मेलनेन पुनरपि षट्सङ्ख्या पूर्य्यते। किञ्चैतेषु योऽयं ज्योतिरहर्विशेषः सस्वर्गप्रकाशकत्वात्स्वर्ग एव। या च विराड्रूपा लक्षणभूता दशसङ्ख्या सेयमूर्ध्वस्वरूपा। तेन तादृशेन परःसामानुष्ठानेन स्वर्गलोकमभिजयन्तीति॥

अथैतेषु षट्सु परःसामसु पृष्ठस्तोत्रगतानि क्रमेण विधत्ते। "यत्परꣳ राथन्तरम्। तत्प्रथमेऽहन् कार्य्यम्। बृहद्द्वितीये। वैरूपं तृतीये। वैराजं चतुर्थे। शाक्वरं पञ्चमे। रैवतꣳ षष्ठे। तद् पृष्ठेभ्यो नयन्ति" इति। पूर्व्वपक्षवर्त्तिनि प्रथमे परःसाम्नि ज्योतिराख्ये रथन्तरेण निष्पाद्यं राथन्तरं यत्पृष्ठस्तोत्रं तत्कर्त्तव्यम्। द्वितीयेऽह्नि गौर्नामके बृहत्साम्नि निष्पाद्यं पृष्ठस्तोत्रं कार्य्यम्। आयुर्नामके तृतीये वैरूपसामयुक्तं पृष्ठस्तोत्रं कार्य्यम्। विषुवत ऊर्द्ध्वभाविन्यायुर्नाम्नि चतुर्थे परःसाम्नि वैराजसामयुक्तं पृष्ठस्तोत्रम्। पञ्चमे गौर्नाम्नि शाक्वरं सामयुक्तं पृष्ठस्तोत्रम्। ज्योतिर्नाम्नि षष्ठे रैवतसामयुक्तं पृष्ठस्तोत्रम्। तद् तेनैव प्रकारेणानुतिष्ठन्त एतान्यहानि पृष्ठेभ्यो पृष्ठषडहगतेभ्योऽहर्भ्य उपरि नयन्ति। यद्यप्येतानि ज्योतिरादीनि अभिप्लवषडहगतान्यहानि। तथापि रथन्तरादिपृष्ठस्तोत्रयोगात्पृष्ठषडहगतान्येव सम्पद्यन्ते इत्यर्थः॥

अथैतेष्वहस्स्वतिग्राह्यविशेषान् विधत्ते। "सन्ततय एते ग्रहा गृह्यन्ते [२] अतिग्राह्याः परःसामसु। इमानेवैतैर्लोकान्त्स-

न्तन्वन्ति" इति। संहितायां तृतीयकाण्डे तृतीयप्रपाठके देवा वै यद्यज्ञेनावरुन्धतेत्यस्मिन् षष्ठेऽनुवाके परःशब्दाभिधेयास्त्रयोऽतिग्राह्या विहिताः। तत्राग्नस्त्वौषधीभ्यो गृह्णामीति प्रथमस्य मन्त्रः। ओषधीभ्यस्त्वा प्रजाभ्यो गृह्णामीति द्वितीयस्य मन्त्रः। प्रजाभ्यस्त्वा प्रजापतये गृह्णामीति तृतीयस्य मन्त्रः। एभिर्मन्त्रैः परःसामसु ज्योतिर्गौरायुरित्येतेष्वहःसु प्रतिग्राह्यनामका ग्रहाः सन्ततयः सन्तता ग्रहीतव्याः। प्रथमेऽह्नि प्रथमो द्वितीयेऽह्नि द्वितीयस्तृतीयेऽह्नि तृतीयः। इत्येवं सान्तत्यम्। एतैः सन्ततं गृहीतैरिमान् भूरादीन् त्रीन् लोकान् सन्ततान् कुर्व्वन्ति॥

अथ विषुवत ऊर्द्ध्भाविषु परःसामसु व्युत्क्रमेण तानेव ग्रहान् विधत्ते। "मिथुना एते ग्रहा गृह्यन्ते। अतिग्राह्याः परःसामसु। मिथुनमेव तैर्यजमाना अवरुन्धते" इति। एते ग्रहाः पूर्व्वेष्वहःसु अनुक्रमगता उक्तेष्वहःसु व्युत्क्रमगताः। एतच्च तत्रैव संहितायामेव स्पष्टमाम्नातम्। पूर्व्वेष्वहःस्वितः पराञ्चो गृह्यन्ते। उत्तरेष्वहःस्वमुतोऽर्वाञ्चो गृह्यन्त इति। उत्तरगतान्यहान्यपि आयुर्गौ ज्योतिरित्येवं व्युत्क्रमगतानि। एवञ्च सति प्रथमषष्ठयोर्ज्योतिराख्योरह्नोरग्न इत्यादिमन्त्रयुक्तोऽतिग्राह्यो द्विरावृत्तः। गोनाम्नो द्वितीयपञ्चमयोरोषधीभ्य इति मन्त्रयुक्तोऽतिग्राह्यो द्विरावृत्तः। आयुर्नाम्नोस्तृतीयचतुर्थयोः प्रजाभ्य इति मन्त्रयुक्तोऽतिग्राह्यो द्विरावृत्तः। एवं सत्येते मिथुनरूपाः सम्पद्यन्ते। तैर्यजमाना मिथुनं प्राप्नुवन्ति॥

अथ विषुवद्दिने पृष्ठस्तोत्रगतं साम विधत्ते। "बृहत्पृष्ठं भवति। बृहद्वै सुवर्गो लोकः। बृहतैव सुवर्गं लोकं यन्ति" इति। बृहत्साम्नः स्वर्गप्राप्तिहेतुत्वात्तद्रूपत्वम्॥

पृष्ठस्तोत्रे सामविशेषं विधाय पवमानस्तोत्रे सामविशेषं विधत्ते। "त्रयस्त्रिꣳशि नाम साम। माध्यन्दिने पवमाने भवति [४]। त्रयस्त्रिꣳशद्वै देवताः। देवता एवावरुन्धते" इति। त्रयस्त्रिंशीति कस्यचित्साम्नो नामधेयम्। तच्च साम माध्यन्दिने पवमानाख्ये स्तोत्रे गायेत्। देवतानामियं सङ्ख्या त्रिंशत्त्रयश्च गणिन इत्यादिमन्त्रे प्रसिद्धा॥

इदानीं विषुवत उत्तरेषु परःसामसु पूर्वोक्तविपरीतक्रमं विधत्ते। "ये वा इतः पराञ्चꣳ संवत्सरमुपयन्ति। न हैनन्ते स्वस्ति समश्नुवते। अथ येऽमुतोऽर्वाञ्चमुपयन्ति। ते हैनꣳ स्वस्ति समश्नुवते। एतद्वा अमुतोऽर्वाञ्चमुपयन्ति। यदेवम्। योऽह खलु वाव प्रजापतिः। स उ वेवेन्द्रः। तदु देवेभ्यो नयन्ति [५]" इति। ये यजमाना इतो भूर्लोकरूपादङ्ग इत्यादिमन्त्रयुक्तादतिग्राह्यादारभ्य पराञ्चमनुक्रमगतमेव संवत्सरमनुतिष्ठन्ति। ते यजमाना एनं क्रतुं स्वस्ति क्षेमेण न समश्नुवते न सम्यक् प्राप्नुवन्ति। ये तु विषुवत ऊर्द्ध्वं अमुतो द्युर्लोकरूपात्प्रजाभ्यस्त्वेत्यादिमन्त्रयुक्तात्तृतीयादतिग्राह्यादारभ्यार्वाञ्चं व्युत्क्रमगतं संवत्सरक्रतुमनुतिष्ठन्ति। त एव यजमाना एतं क्रतुं स्वस्ति क्षेमेण समापयन्ति। एवमतिग्राह्याणां व्युत्क्रमानुष्ठानं यदस्ति एतेनैव प्रकारेण अमुतोऽन्तादारभ्यार्वाञ्चं व्युत्क-

मगतं संवत्सरमनुतिष्ठन्तो भवन्ति। तस्मादेवमनुतिष्ठेदित्यर्थः। यः संवत्सरसत्रात्मकः प्रजापतिः स एवेन्द्रो देवानामधिपतिः। तस्मात्कारणाद् देवेभ्यो नयन्ति। देवार्थमेवैनं क्रतुमधितिष्ठितवन्तो भवन्ति॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्राकाशे कृष्णयजुर्ब्राह्मणे प्रथमकाण्डे द्वितीयप्रपाठके द्वितीयोऽनुवाकः॥ ॥ २ ॥

## अथ तृतीयोऽनुवाकः।

द्वितीयेऽनुवाके नवाहानि विहितानि। अथ तृतीयेऽनुवाके तेषां मध्यमेऽह्नि विषुवति केचिद्विशेषा उच्यन्ते। पूर्व्वत्र षड्दिनेषु पराञ्चोर्वाञ्चश्च येऽतिग्राह्या विहिताः। तानुभयविधानस्मिन्विषुवत्यह्नि विधत्ते। "सन्ततिर्वा एते ग्रहाः। यत्परःसामानः। विषूचीं दिवाकीर्त्यम्। यथा शालायै पक्षसी। एवꣳ संवत्सरस्य पक्षसी। यदेतेन गृह्णेरन्। विषूची संवत्सरस्य पक्षसी व्यवस्रꣳसेयाताम्। आर्त्तिमार्च्छेयुः। यदेते गृह्यन्ते। यथा शालायै पक्षसी मध्यमं वꣳशमभिसमायच्छति। [१]। एवꣳ संवत्सरस्य पक्षसी दिवाकीर्त्यमभिसन्तन्वन्ति। नार्त्तिमार्च्छन्ति" इति। परःसामशब्देन तदहर्गताः पूर्व्वोक्ताः पराञ्चोऽर्वाञ्चश्चातिग्राह्या लक्ष्यन्ते। तादृशा ये सन्ति ते सन्ततिरूपा अविच्छेदकानि रज्जुस्थानीयाः। यत्तु दिवाकीर्त्यमहः सोऽहर्विशेषो विषुवान्। दिवैव कीर्त्यं सर्व्वमनुष्ठेयं

न तु रात्राविति दिवाकीर्त्त्यं विष्वक् परस्परविपरीतत्वेन वर्त्त-मानावुभौ पक्षौ यस्याहर्विशेषस्य सोऽयं विषुवान्। तदेतदह-र्लौकिकदृष्टान्तेन स्पष्टीक्रियते। लोके प्रौढां शालां कुर्व्वन्तो मध्ये उन्नतान् स्तम्भान् स्थापयित्वा तेषामग्रे तिर्य्यग्वंशं दीर्घं प्रति-ष्ठाप्य तदाधारेणोभौ शालापक्षौ निर्म्मिमीते। यथा लौकिकी-शाला एवमत्रापि संवत्सरसत्ररूपा शाला तस्याश्च विषुवानेव स्तम्भाग्रगतवंशस्थानीयः पूर्व्वोत्तरमासषट्कद्वयं पक्षद्वयस्थानी-यम्। तत्र पूर्व्वोत्तरेषु परःसामसु षडहःसु मध्यमे च विषुवति गृह्यमाणा अतिग्राह्या पृष्ठवंशपक्षद्वयबन्धनरज्जुस्थानीयाः। एवं सति यद्येतेऽतिग्राह्याः परःसामसु विषुवति च न गृह्ये-रन् तदा संवत्सरस्य पार्श्वद्वयवर्त्तिनौ पक्षौ विष्वग्गतिसन्तौ विस्रस्तौ विनष्टौ भवेताम्। ततो यजमाना आर्त्तिं प्राप्नुयुः। यदि तु अतिग्राह्या गृह्यन्ते। तदानीं यथा लोके शालायाः पक्षद्वयं मध्यमेन वंशेन सह पुरुषो रज्ज्वा दृढं बध्नाति एवमस्य संवत्सरसत्रस्य पक्षस्थानीयं मासषट्कद्वयं वंशस्थानीयस्य दिवा-कीर्त्त्यस्योभयोः पार्श्वयोः तेन दिवाकीर्त्त्येन सह दृढं सन्त-न्वन्ति। तस्मिंश्च सान्तत्ये सति यजमाना आर्त्तिं नाप्नुवन्ति। तस्मात् परःसामस्विव विषुवत्यपि सान्तत्यायातिग्राह्याः कर्त्त-व्या इति तात्पर्य्यार्थः॥

अथविषुवत्यहनि स्तोमविशेषं ग्रहक्रमविशेषञ्च विधत्ते। "एकविंशमहर्भवति। शुक्राग्रा ग्रहा गृह्यन्ते। प्रत्युत्तब्ध्यै सय-त्वाय" इति। त्रिवृत्पञ्चदशसप्तदशापेक्षया य एकविंशस्तोम

उन्नतः। एतदनुष्ठानेन वंशस्थानीयस्य विषुवतः प्रत्युत्तब्ध्यै प्रातिस्विका प्रोन्नतबन्धनाय भवति। ग्रहाणामैन्द्रवायव्याग्रेयत्वं परित्यज्य शुक्राग्रत्वानुष्ठानेन सयत्वं भवति। षिञ् बन्धने इत्यस्माद्धातोरुत्पन्नः सयशब्दः। शुक्राग्रग्रहसामर्थ्येन दृढबन्धनं भवतीति भावः॥

अथ तस्मिन् पशुविशेषमतिग्राह्यं विशेषञ्च क्रमेण विधत्ते। "सौर्य्य एतदहः पशुरालभ्यते। सौर्य्योऽतिग्राह्यो गृह्यते। अहरेव रूपेण समर्द्धयन्ति। अथो अह्न एवैष बलिर्ह्रियते" इति। एतस्मिन्विषुवत्यह्नि सूर्य्यदेवताकः पशुरालभनीयः। अतिग्राह्यश्च सूर्य्यदेवताको ग्रहीतव्यः। तथा सति दिवाकी-र्त्यस्याह्नः सूर्य्यसम्बन्धेन रूपं समृद्धं भवति। अपि चैतस्याह्नः सूर्य्यसम्बन्धरूप एव बलिः पूजा कृता भवति॥

विषुवद्दिनगतामतिग्राह्यसङ्ख्यां प्रशंसति। "सप्तैतदहर-तिग्राह्या गृह्यन्ते [२]। सप्त वै शीर्षण्याः प्राणाः। असावादि-त्यः शिरः प्रजानाम्। शीर्षन्नेव प्रजानां प्राणान् विदधाति। तस्मात्सप्तशीर्षन् प्राणाः" इति। परःसामसम्बन्धिनः अङ्गस्त्वो-षधीभ्य इत्यादिमन्त्रसाध्याः पराञ्चोऽर्वाञ्चश्चातिग्राह्याः षट्-सङ्ख्या विषुवति विहिताः। तेषां मध्ये सौर्य्य एक एवमेते सप्तसङ्ख्याकाः शिरोगतच्छिद्रवर्त्तिनश्च प्राणाः सप्त मध्यातिग्रा-ह्यस्य देव आदित्यः ऊर्द्धवर्त्तित्वात् प्रजानां शिरःस्थानीयः। तथा सति प्रजानां शिरस्येव प्राणाः स्थापिता भवन्ति। तस्मा-ल्लोके सर्व्वत्र शिरसि सप्त प्राणा दृश्यन्ते॥

अथाष्टममतिग्राह्यं विधत्ते । "इन्द्रो वृत्रꣳ हत्वा । असुरान् पराभाव्य । स इमांल्लोकानभ्यजयत् । तस्यासौ लोकोऽनाभिजित आसीत् । तं विश्वकर्मा भूत्वाऽभ्यजयत् । यद्वैश्वकर्मणो गृह्यते [२] । सुवर्गस्य लोकस्याभिजित्यै" इति । पुरा कदाचिदिन्द्रो वृत्रं हत्वा तदीयानसुरांश्च तिरस्कृत्य लोकान् वशीकुर्वन् स्वर्गं न वशीचकार । ततः स्वयं विश्वकर्मा भूत्वा तं स्वर्गमभ्यजयत् । अतो वैश्वकर्मणातिग्राह्येन स्वर्गाभिजयो भवति ॥

परेद्युरदितिदेवताकमतिग्राह्यं विधत्ते । "प्र वा एतेऽस्माल्लोकाच्च्यवन्ते । ये वैश्वकर्मणं गृह्णते । आदित्यश्चो गृह्यते । इयं वा अदितिः । अस्यामेव प्रतितिष्ठन्ति" इति । वैश्वकर्मणः स्वर्गहेतुत्वात् । तेनास्माल्लोकान् प्रच्यवन्ते प्रच्युता भवन्ति । तस्मादेतल्लोकप्रतिष्ठार्थमदितिदेवताकं गृह्णीयात् ॥

योऽयं विषुवति वैश्वकर्मणोऽतिग्राह्यः । यश्च परेद्युरादित्योऽतिग्राह्यः । तदुभयं प्रशंसति । "अन्योऽन्यो गृह्येते । विश्वान्येवाऽन्येन कर्माणि कुर्वाणा यन्ति । अस्यामन्येन प्रतितिष्ठन्ति" इति । विषुवति वैश्वकर्मणाख्योऽन्यः परेद्युरादित्याख्योऽन्यो गृह्येत इति । एवमेकैकः पृथग्ग्रहीतव्यः । तत्र विषुवत्यनुष्ठितेनान्येन वैश्वकर्मणे विश्वानि कर्माणि कुर्वाणा यजमानाः समाप्तिं प्राप्नुवन्ति । परेद्युरनुष्ठितेनादितिदेवताकेनान्येन भूमौ प्रतितिष्ठन्तीति ॥

उत्तरेष्वपि दिनेषु पर्यायेणैतद्ग्रहद्वयं विधत्ते । "तावा-

परार्द्धात्संवत्सरस्यान्योऽन्यो गृह्यते'' इति । संवत्सरसत्रस्य द्वावर्द्धौ तत्र यः परोऽर्द्ध उत्तरषण्मासात्मकः तत्समाप्तिपर्यन्तमेकस्मिन्दिने वैश्वकर्मणः परेद्युरादित्य इत्येवं ग्रहद्वयमनुष्ठेयम्॥

उत्तरमासषट्कस्योपान्त्ये दिने तयोरुभयोः प्रयोगं विधत्ते । ''तावुभौ सह महाव्रते गृह्येते । यज्ञस्यैवान्तं गत्वा । उभयोर्लोकयोः प्रतितिष्ठन्ति'' इति । महाव्रतदिवसो यज्ञस्यान्तः । परेद्युरेव सत्रमाससमाप्तेः । तत्र ग्रहणे सति यज्ञसमाप्तौ लोकद्वये प्रतिष्ठा भवति । सोऽयं ग्रहग्रहणप्रकारः सूत्रे स्पष्टमभिहितः । तानूर्द्ध्वानावृत्तांश्च विषुवति तेषां मध्ये सौर्य्यं उदुत्यं जातवेदसमित्येतस्मिन्नेवाहनि वैश्वकर्मणामतिग्राह्याणामष्टमं गृह्णाति वाचस्पतिं विश्वकर्माणमिति श्वोभूते आदित्यं महीमूषुमातरमिति । तावेवमेव व्यत्यासं गृह्णात्यामहाव्रतान्तौ स महाव्रतेति ॥

अथ विषुवति शस्त्रविशेषं विधत्ते । ''अर्क्यमुक्थं भवति । अन्नाद्यस्यावरुध्यै'' इति । अर्चनीयो देवोऽर्कस्तत्सम्बद्धमुक्थशस्त्रमर्क्यं तच्छंसनीयम् । अर्को वै देवानामन्नमिति श्रुत्यन्तरादन्नप्राप्तिर्युक्ता ॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे प्रथमकाण्डे द्वितीयप्रपाठके तृतीयोऽनुवाकः॥
॥ ३ ॥

## अथ चतुर्थोऽनुवाकः ।

तृतीयेऽनुवाके विषुवद्दिनेऽतिग्राह्यविशेषा उक्ताः । अथ चतुर्थे तस्मिन्नेव दिने दिवाकीर्त्यनामानि सामान्युच्यन्ते । यद्विहितं पूर्व्वानुवाके एकविंशमहर्भवति इति तदिह तावदादौ प्रशंसति । "एकविंश एष भवति । एतेन वै देवा एकविंशेन । आदित्यमित उत्तमं सुवर्गं लोकमारोहयन् । स वा एष इत एकविंशः । तस्य दशावरस्तादहानि । दश परस्तात् । स वा एष विराज्युभयतः प्रतिष्ठितः । विराजि हि वा एष उभयतः प्रतिष्ठितः । तस्मादन्तरेमौ लोकौ यन् । सर्व्वेषु सुवर्गेषु लोकेष्वभितपन्नेति" [१] इति । एष विषुवानेकविंशकस्तोमको भवति । एतेनैकविंशकस्तोमेन पुरा देवा इतो भूलोकादुत्कृष्टतमं स्वर्गलोकं प्रति आदित्यमारोहयन् । न केवलमेकविंशस्तोमयोगेनास्य एकविंशत्वम् । किन्तु इतोऽपि कारणात् स एव विषुवानेकविंशः किन्तत्कारणमिति तदुच्यते । तस्य विषुवतोऽधोभागे अभिप्लवः षडहं व्यतिरिक्तानि दशाहानि विद्यन्ते । तद्यथा । पृष्ठ्यः षडहः । अभिजिदेकाहः । त्रयः परःसामानो हविर्विशेषाः । इत्येवं दशाहानि । तथा विषुवत ऊर्द्ध्वमपि । तथाहि । आवृत्त्या त्रयः परःसामानः । अभिजिदेकाहः । पृष्ठ्यः षडहः । इत्येवं दशाहानि । सोऽयं विषुवानुभयतो दशसङ्ख्यायुक्तत्वेन विराड्रूपेऽहःसङ्घे प्रतिष्ठितः । यस्मादेष विषुवानुभयतो विराजि प्रतिष्ठितः । तस्मादेतदीयेनैकविंशेन स्वर्गमारूढ आदित्योऽपि उभयतोऽस्मिन्

सद्वरूपे विराजि प्रतिष्ठितः। अधस्तात्पञ्चशतानि रश्मयः। उपरिष्टात्पञ्चशतानि। यद्वा प्रधानभूता रश्मयोऽधस्ताद्दश उपरिष्टाद्दश तस्माद्विराजि प्रतिष्ठितत्वादनयोर्लोकयोर्मध्ये सञ्चरन् आदित्य ऊर्द्धस्थितेषु द्युलोकादिषु स्वर्गेषु अधस्थितेषु च भौमेषु पातालवर्त्तिषु च स्वर्गेषु स्वकीयरश्मिभिस्तपन् सञ्चरति। एवमादित्यसदृशत्वादयं विषुवान् प्रशस्तः॥

अथ विषुवति दिवाकीर्त्त्यसामानि विधत्ते। "देवा वा आदित्यस्य सुवर्गस्य लोकस्य। पराचोऽतिपादादबिभयुः। तं छन्दोभिरदृꣳहन्धृत्यै। देवा वा आदित्यस्य सुवर्गस्य लोकस्य। अवाचोऽवपादादबिभयुः। तं पञ्चभीरश्मिभिरुदवयन्। तस्मादेकविꣳशेऽहन् पञ्च दिवाकीर्त्त्यानि क्रियन्ते। रश्मयो वै दिवाकीर्त्त्यानि" इति। स्वर्गलोकगतो योऽयमादित्यस्तस्य पराचोऽतिपादात्पुनरावृत्तिरहितात् ऊर्द्धभाविनोऽतिगमनाद्देवा भीताः आदित्यो निरवधिकमूर्द्धं गच्छति न तु स्वर्गे स्थास्यतीति भीताः तत्परिहाराय तमादित्यं सवनगतैर्गायत्र्यादिभिश्छन्दोभिरदृंहन् स्तम्भितवन्तः। रज्जुभिर्बद्धमिवाकुर्व्वन्। तस्माद्धृत्यै छन्दांसि भवन्ति। ततो देवा आदित्यस्यावाचोवपादधःपतनादबिभयुः। तत्परिहाराय पञ्चभी रश्मिभिरादित्यमुदयन्नुदवपन् ऊर्द्धमुत्तम्भितवन्तः। तस्मादेकविंशे विषुवत्यह्नि दिवाकीर्त्त्यनामकानि पञ्चसामानि कर्त्तव्यानि। तानि यथोक्तपञ्चरश्मिस्थानानि॥

अथ सामान्यतो विहितानि पञ्चसामानि विशेषाकारेण

विधत्ते। "ये गायत्रे। ते गायत्रीषूत्तरयोः पवमानयोः [२]। महादिवाकीर्त्यꣳ होतुः पृष्ठम्। विकर्णं ब्रह्मसामम्। भासोऽग्निष्टोमः" इति। गायत्रीछन्दोयुक्ते प्रातःसवने द्विवैव कीर्त्तनीये भ्राजभासाख्ये ये सामनः ते एवोत्तरयोर्माध्यन्दिनार्भवपवमानयोर्गायत्रीछन्दस्कास्वृत्तु गातव्ये। महादिवाकीर्त्यनामकं यत् साम तद्धोतृसम्बन्धिपृष्ठस्तोत्रे कार्य्यम्। तथा विकर्णनामकं यत्तद्ब्रह्मसामकार्य्यम्। तदेतदुभयं चतुर्षु पृष्ठस्तोत्रेषु प्रथमतृतीयः सम्पद्यते। भासाख्यं यत्साम तत्तृतीयसवनेऽग्निष्टोमसामकार्य्यम्। येनाग्निष्टोमः समाप्यते तदग्निष्टोमसाम॥

एवं विषुवति सामानि विधाय पुनरप्युभयतः स्थितानां परःसाम्नां स्तुतिः क्रियते। "अथैतानि पराणि। परैर्वै देवा आदित्यꣳ सुवर्गं लोकमपारयन्। यदपारयन्। तत्पराणां परत्वम्। पारयन्त्येनं पराणि। य एवं वेद। अथैतानि स्पराणि। स्परैर्वै देवा आदित्यꣳ सुवर्गं लोकमस्पारयन्। यदस्पारयन्। तत्स्पराणाꣳ स्परत्वम्। स्पारयन्त्येनꣳ स्पराणि। य एवं वेद [३]" इति। पूर्व्वोक्तविधिव्यवच्छेदार्थोऽथशब्दः। एतानि पुरस्तादुपरिष्टाच्च कर्त्तव्यानि परःसामाख्यानि अहानि पराणि परशब्दाभिधेयानि तत्कथमिति तदुच्यते। पुरा देवाः पराख्यैरेतैरहोभिरेवादित्यं स्वर्गं लोकमपारयन् प्रापितवन्तः। अतः पारयन्त्येभिरिति व्युत्पत्त्या परत्वं सम्पन्नम्। य एवं परत्वं जानाति। तमेनं पुरुषं पराख्यान्यहानि अभीष्टफलसमाप्तिं प्रापयन्ति। अपि चैतानि स्परशब्देनाप्यभि-

धीयन्ते। स्वारयति प्रीणयत्येभिरिति स्वरलम्। अन्यत् पूर्व्ववत्॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे प्रथमकाण्डे द्वितीयप्रपाठके चतुर्थोऽनुवाकः॥ ॥ ४ ॥

अथ पञ्चमोऽनुवाकः।

चतुर्थे दिवाकीर्त्यनामकानि सामानि विहितानि। अथ पञ्चमे पशवोऽभिधीयन्ते। यदुक्तं सूत्रकारेण। 'अथ पशुकॢप्तिराग्नेयं प्रायणीय आलभन्ते। श्वोभूते सारस्वतीं मेषीम्। एवं विहितानेकादशिनानन्वहमालभन्ते। सौर्य्यं विषुवत्युरालभ्यन्तेषामेवोपाकुर्व्वतां द्वादशाहीयस्य दशरात्रस्य सप्तदश उक्थ्यो द्वात्रिंशतमेकादशिन्योपसृज्यन्ते नवाहान्यतिरिच्यन्ते। तेषु गव्यानतिरिक्तपशूनालभन्ते। वैष्णवं वामनमेकविंशमैन्द्राग्नं त्रिणवे वैश्वदेवम्। त्रयस्त्रिंशे द्यावापृथिव्यां धेनुं प्रथमे छन्दोमे तस्या एव वायव्यं वत्सं मध्यमे आदित्यामविंवशामुत्तमे मैत्रावरुणीमविवाक्ये प्राजापत्यमृषभं तूपरं महाव्रतमाग्नेयमुदनीय इति॥ तत्रोक्तान् वैष्णवान् विधातुं प्रस्तौति। "अप्रतिष्ठां वा एते गच्छन्ति। येषाꣳ संवत्सरेऽनाप्तेय। एकादशिन्याप्यते" इति। येषां यजमानानामसमाप्ते संवत्सरसत्रे सति तत्समाप्तेः प्रागेव पश्वेकादशिनी समाप्यते। ते यजमानाः संवत्सरसम्पूर्त्तिपर्य्यन्तं पश्वभावादप्रतिष्ठां गच्छन्ति। आग्नेयः

कृष्णग्रीवः सारस्वती मेषी बभ्रुः सौम्य इत्याद्यनुवाके पञ्चमकाण्ड-गते पश्वेकादशिनी समाम्नाता । सेयं संवत्सरगतेषु दिनेषु प्रति-दिनमेकैकः पशुरित्येवं क्रमेण पुनः पुनरावर्त्तनीया । तथा सति द्विपञ्चाशदधिकशतत्रयसङ्ख्या तेष्वहस्सु द्वात्रिंशदेकाद-शिन्यः समाप्यन्ते । इत ऊर्द्ध्वं पुनरप्येकादशिनी कर्त्तुमशक्या । नवानामेवाह्नामवशिष्टत्वात्संवत्सरपूरणाय तावद्द्वष्टाह्नान्यवशि-ष्टानि । मध्ये विषुवत एकाह्नोऽधिकस्य प्रविष्टत्वाद्च नवा-ह्नावशेषः ॥

तेषु नवसु पशुभावेन येयमप्रतिष्ठा प्राप्ता तां वारयितुं क्रमेण नवपशून् वैश्वदेवादीन् विधत्ते । "वैष्णवं वामनमाल-भन्ते । यज्ञो वै विष्णुः । यज्ञमेवालभन्ते प्रतिष्ठित्यै । ऐन्द्रा-ग्नमालभन्ते । इन्द्राग्नी वै देवानामयातयामानौ । ये एव देवते अयातयाम्नी । ते एवालभन्ते [१] । वैश्वदेवमालभन्ते । देवता एवावरुन्धते । द्यावापृथिव्यां धेनुमालभन्ते । द्यावा-पृथिव्योरेव प्रतितिष्ठन्ति । वायव्यं वत्समालभन्ते । वायुर्वैभ्यो यथायतनाद्देवता अवरुन्धे । आदित्यामविं वशामालभन्ते । इयं वा अदितिः । अस्यामेव प्रतितिष्ठन्ति । मैत्रावरुणीमा-लभन्ते [२] । मित्रेणैव यज्ञस्य स्विष्टꣳ शमयन्ति । वरुणेन दुरिष्टम् । प्राजापत्यं तूपरं महाव्रत आलभन्ते । प्राजापत्यो-ऽतिग्राह्यो गृह्यते । अहरेव रूपेण समर्द्धयन्ति । अथो अह्न एवैष बलिर्ह्रियते । आग्नेयमालभन्ते प्रतिप्रज्ञात्यै" इति । प्राजापत्याभ्यां पश्वतिग्राह्याभ्यां महाव्रताख्यमहः प्रजापति-

सम्बन्धात् स्वानुकूलेन रूपेण समृद्धं भवति। अपि च प्रजापतिसम्बन्धोऽस्याङ्गोऽस्तीति एवं पूजा च सम्पद्यते । आग्नेयेन च पशुना अग्निप्रकाशवद्बुद्धिप्रकाशरूपं प्रज्ञानं सम्पद्यते। स्पष्टमन्यत् ॥

तानेतान् पशून् देवताद्वारा प्रत्येकं प्रशंस्य जातिद्वारा पुनः प्रशंसति । "अजपेत्वान्वा एते पूर्व्वैर्मासैरवरुन्धते । यदेते गव्याः पशव आलभ्यन्ते। उभयेषां पशूनामवरुध्यै" इति। आग्नेयः कृष्णग्रीव इत्यादिकाः सर्व्वेऽप्यजाः तेष्वन्तिमः पेत्वो गलित-वृषणः। अजाश्च पेत्वाश्चाजपेत्वाः तानजपेत्वानेव पशून् पूर्व्वैर्मासैरेते यजमानाः प्राप्नुवन्ति। इदानीं विधीयमानपशुयुक्तदिनेभ्यः पूर्व्वेषु मासेषु तादृशानामेव पशूनामालब्धत्वादेतेषु तु विधीयमानेषु पशुषु धेन्वादयो गव्याः सन्ति। तदालम्भने पशूनामुभयेषां पूर्व्वमालब्धानामजानामिदानीमालभ्यमानानां गव्यानाञ्च प्राप्तिर्भवति ॥

पुनरपि व्यतिरेकमुखेन तानेव पशून् प्रशंसति। "यदतिरिक्तामेकादशिनीमालभेरन् । अप्रियं भ्रातृव्यमभ्यतिरिच्येत। यद्वै द्वौ पशू समस्येयुः। कनीय आयुः कुर्व्वीरन्। यदेते ब्राह्मणवन्तः पशव आलभ्यन्ते। नाप्रियं भ्रातृव्यमभ्यतिरिच्यते। न कनीय आयुः कुर्व्वते" [२] इति। अत्रावशिष्टेष्वपि दिनेषु एकादशिन्येव आलब्धव्येति दुराग्रहात् यो मन्यते स प्रष्टव्यः, किं वत्सरादूर्द्धदिनद्वयेनातिरिक्ता सेयमेकादशिन्यालब्धव्या किंवा चरमयोर्द्वयोर्दिनयोर्द्वौ द्वौ पशू समस्या-

लभ्याविति। नाद्यः। दिनातिरेके सति अप्रियस्य भ्रातृव्य-स्याभिवृद्धिप्रसङ्गात्। न द्वितीयः। एकादशिन्या दिनसम्पूर्त्य-भावेनायुःक्षयप्रसङ्गात्। अतो दोषद्वयपरिहारायानेन ब्रा-ह्मणेनोक्ताः पशवः आलम्भनीयाः॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्ण-यजुर्ब्राह्मणे प्रथमकाण्डे द्वितीयप्रपाठके पञ्चमोऽनुवाकः॥
॥ ५ ॥

## अथ षष्ठोऽनुवाकः।

पञ्चमे वैष्णवाद्या नव पशवोऽभिहिताः। अथ षष्ठे महा-व्रतमुच्यते। तत्रादौ तच्छब्दनिरुक्तिद्वारेण प्रशंसति। "प्रजा-पतिः प्रजाः सृष्ट्वा वृत्तोऽशयत्। तं देवा भूतानाꣳ रसं तेजः सम्भृत्य। तेनैनमभिषज्यन्। महानववर्त्तीति। तन्महाव्रतस्य महाव्रतत्वम्। महद् व्रतमिति। तन्महाव्रतस्य महाव्रतत्वम्। महतो व्रतमिति। तन्महाव्रतस्य महाव्रतत्वम्" इति। प्रजा-सृष्टिव्यापारेण श्रान्तः प्रजापतिर्यदा शयनं कृतवान् तदा देवाः सर्व्वेषां भूतानां मध्ये सारभूतं तेजः सम्पाद्य तेन तेजसा तमेनं श्रान्तं प्रजापतिं चिकित्सितवन्तः। ततोऽयं प्र-जापतिर्महानभूत् इत्युक्तवन्तः। यदिदं रसरूपं तेजः तदिदं महाव्रताख्ये विद्यमानं हविः। तथा सति महानववर्त्तिष्ठानेन कर्म्मणेति व्युत्पत्त्या तस्य कर्म्मणो महाव्रतनाम सम्पन्नम्। यद्वा कर्म्मणोऽस्य महाफलहेतुत्वेन महत्वात् महच्च तद् व्रतमिति

तद्व्युत्पत्तिः। अथवा महतः प्रजापतेः औषधरूपत्वान्महतो व्रतमिति व्युत्पत्तिः॥

तस्मिन् महाव्रताख्येऽह्नि प्रधानभूतस्तोमं विधत्ते। "पञ्च-विꣳश स्तोमो भवति [१]। चतुर्विꣳशत्यर्द्धमासः संवत्सरः। यद्वा एतस्मिन्त्संवत्सरेऽधिप्राजायत। तदन्नं पञ्चविꣳशमभवत्" इति। एकस्मिन् सूक्ते विद्यमानानां तिसृणामृचामावृत्ति-विशेषेण सम्पाद्यः पञ्चविंशतिसङ्ख्यायुक्तः स्तोमः कर्त्तव्यः। तत्र चतुर्विंशतिसङ्ख्यया अर्द्धमासद्वारेण संवत्सरसम्पत्तिः। यच्चैत-स्मिन् संवत्सरे अधिकमन्नमुत्पन्नं तत्पञ्चविंशतिसङ्ख्यापूरकम-भवत्॥

एवं प्रशस्तेन पञ्चविंशतिस्तोमेन युक्तस्याह्नः स्थानविशेषं विधत्ते।"मध्यतः क्रियते। मध्यतो ह्यन्नमशितं धिनोति। अथो मध्यत एव प्रजानामूर्ग्धीयते" इति। संवत्सरस्य समाप्तिहेतो-रतिरात्ररूपात् अन्तिमादह्नः पूर्व्वभावित्वेन संवत्सरमध्ये तद-नुष्ठानम्। लोकेऽपि यदन्नमशितं सत् नात्यधिकं नात्यल्पं भवति। तदेव मध्यमप्रमाणयुक्तं भोक्तारं प्रीणयति। अपिच भुक्तो रसः शरीरमध्य एव स्थाप्यते। तस्मात् संवत्सरमध्येऽनु-ष्ठानं प्रशस्तम्॥

तस्मिन्नपि मध्ये पुनर्विशेषेण स्थापनं विधत्ते।"अथ यद्वा इदमन्ततः क्रियते। तस्मादुदन्ते प्रजाः समेधन्ते। अन्ततः क्रियते प्रजननायैव" इति। अन्तिमादतिरात्रात् पूर्व्वेष्वहःसु योऽन्तः संवत्सरस्योपान्तरूपो देशः तत्रैतदहः कर्त्तव्यम्।

यद्येतद्यस्मादिदमेव महाव्रतमन्ते क्रियते। तस्माल्लोकेषु उत्कृष्टस्य कृष्यादिव्यापारस्यान्ते फलदशायां प्रजाः सम्यग् वर्द्धन्ते। तस्मात् प्रजावृद्ध्यर्थमितरेषामह्नामन्ते एत एवैतत् कर्त्तव्यम्॥

अस्याह्नः पक्षिरूपत्वं परिकल्प्य तदवयवरूपेण स्तोमं विधत्ते। "त्रिवृच्छिरो भवति [२]। त्रेधाविहितꣳ हि शिरः। लोमत्वगस्थि" इति। ऋक्त्रयात्मकमेकं सूक्तं तादृशानि त्रीणि सूक्तानि त्रिवृतोऽवयवा यस्य स्तोमस्य सोऽयं स्तोमस्त्रिवृत्। स च पक्ष्याकारस्य शिरःस्थानीयः। लोकेऽपि शिरस्त्रिधा निर्मितं लोमकेशाश्छविः त्वक्, अस्थि प्रसिद्धम्। तदिदं शिरसस्त्रैविध्यम्॥

तस्य त्रिवृत्स्तोमस्य पञ्चदशादिस्तोमवदावृत्तगानशङ्कां वारयितुमूर्द्धगानं विधत्ते। "पराचा स्तुवन्ति। तस्मात्तत् सदृगेव। न मेद्यतोऽनुमेद्यति। न कृश्यतोऽनु कृश्यति" इति। आवृत्तिराहित्यं पराक्त्वं तादृशेन त्रिवृता स्तुतिं कुर्य्युः। यस्माच्छिरस्थानीयस्य त्रिवृत आवृत्तिर्नास्ति तस्माल्लोकेऽपि त्रिवृत्स्थानीयं तच्छिर एकरूपमेव न मेद्यतः स्थौल्यं गच्छतः शरीरस्यापि सम्बन्धी भूत्वा स्वयं न मेद्यति नु। न स्थूलीभवति। तथा कृश्यतः कृशीभवतः शरीरस्य सम्बन्धी भूत्वा स्वयं न कृशीभवति॥

अथ पक्षद्वयस्थानीयं स्तोमद्वयं विधत्ते। "पञ्चदशोऽन्यः पक्षो भवति। सप्तदशोऽन्यः। तस्माद्वयाꣳस्यन्यतरमर्द्धमभिप-

र्य्यावर्त्तन्ते। अन्यतरतो हि तद्गरीयः क्रियते [२] इति। यस्मादत्रान्यतरत एकस्मिन् पक्षरूपे सप्तदशाख्ये स्तोमे तत् स्तोत्रं गरीयः अधिकावृत्तिरूपम्। यस्माल्लोकेऽपि पक्षिण आकाशे गच्छन्तः पर्य्यावर्त्तमानाद्दक्षिणं वामं वान्यतरमर्द्धमभिलक्ष्य प्रवृद्धमिव कृत्वा पर्य्यावर्त्तन्ते ॥

योऽयं पूर्व्वत्र विहितः पञ्चविंशः स्तोमो भवतीति तं मध्यशरीरत्वकल्पनया प्रशंसति। "पञ्चविꣳश आत्मा भवति। तस्मान्मध्यतः पशवो वरिष्ठाः" इति। आत्मा पक्ष्याकारस्य महाव्रतस्य मध्यशरीरम्। यस्मादयं पञ्चविꣳशस्तोम इतरेभ्यस्त्रिवृदादिस्तोमेभ्यो भूयान्। तस्मात् पशवो मध्यशरीरभागे वरिष्ठा स्थौल्ययुक्ता दृश्यन्ते ॥

अथ पुच्छस्थानीयं स्तोमान्तरं विधत्ते। "एकविꣳशं पुच्छम्। द्विपदासु स्तुवन्ति प्रतिष्ठित्यै" इति। योऽयमेकविंशस्याावृत्तिरूपः स्तोमः तत्पक्षिरूपस्य महाव्रतस्य पुच्छम्। तञ्च स्तोमं द्विपदास्वृक्षु स्तुवन्ति। पादद्वयेन हि मनुष्याः प्रतितिष्ठन्ति ॥

त्रिवृदादिस्तोमानामृत्विजाञ्च समुच्चयं विधत्ते। "सर्व्वेण सह स्तुवन्ति। सर्व्वेण ह्यात्मनात्मन्वी। सहोत्पतन्ति" इति। योऽयं त्रिवृदादिकः पञ्चविंशान्तः स्तोमसङ्घः तेन सर्व्वेणापि स्तुतिं कुर्य्युः। ऋत्विजश्च सर्व्वे सहैव स्तुतिं कुर्य्युः। यस्माल्लोके सर्व्वेणात्मना कृत्स्नेनाप्यवयवसङ्घेन पक्षपुच्छादिना पतङ्गः आत्मन्वी अवयवी भवति। न त्वेकैकेनावयवेन। तस्मादत्रापि सर्व्वे

स्तोमाः कार्य्याः। यस्माच्च लोके सर्व्वे पक्षिणः सहोत्पतन्ति। तस्मादत्र सर्व्वैऽप्यृत्विजः सहैव स्तुतिं कुर्य्युः। अतएव छन्दोगा आमनन्ति। सर्व्वे सहर्त्विजो महाव्रतेन स्तुवीरन्। अध्वर्य्युप्रि-रसोद्गायेदित्यादिना॥

तत्र कञ्चिद्विशेषं विधत्ते। "एकैकामुच्छिꣳषन्ति। आ-त्मन्नङ्गानि बद्धानि" इति। अध्वर्य्युप्रभृतयः स्वस्वस्तोत्रे गानं कुर्व्वन्तः स्वकीयामन्तिमां स्तोत्रीयामुच्छिꣳष्युः। न तु तया स्तुतिं कुर्य्युः। यतो लोके कस्मिंश्चिदात्मन्मध्यशरीरे सर्व्वा-एयवयवान्तराणि बद्धानि भवन्ति। अतोऽत्रापि मध्यशरीर-स्थानीयायामेकैकस्यां स्तोत्रीयायां अवशेषितायामङ्गान्तराणि तत्रापादयितुं शक्यानि। अन्यथा निराधाराण्यङ्गानि स्युः। ताञ्च तत्र तत्रावशिष्टां स्तोत्रीयामुद्गाता गायेत्। अतएव छन्दोगैराम्नायते। एवं कुर्य्युरेकैकया स्तोत्रीययाऽस्तुतयो-द्गातारमभिसमेयुः इत्यादिना। संहितायामप्यस्तुतायां गान-मुद्गातुराम्नायते। एकैकया स्तुतया समायन्ति दिग्भ्य एवा-न्नाद्यꣳ सम्भरन्ति। ताभिरुद्गातोद्गायति दिग्भ्य एवान्नाद्यꣳ सम्भृत्य तेज आत्मन् दधत इति॥

अथ हर्षहेतुव्यापारविशेषान् विधत्ते। "न वा एतेन सर्व्वः पुरुषः [४]। यदित इतो लोमानि दतो नखान्। परिमादः क्रियन्ते। तान्येव तेन प्रत्युप्यन्ते" इति। इयत् पूर्व्वमुक्तं एकैकस्तो-त्रीयोच्छेषणेन सर्व्वाण्यङ्गानि स्वात्मनि बद्धानि भवन्तीति तत्रायं पुरुषो लोमानि इतः प्राप्तवान्, दतो दन्तान् इतः प्राप्तवान्,

नखानितः प्राप्तवानिति यत्, एतेन लोमदन्तादिप्राप्तिमात्रेण पुरुषः सर्व्वो नैव भवति। पुरुषस्य भोगसम्पूर्णत्वं नास्ति। अतो भोगः परिपूर्य्यते परिमादः परितो हर्षहेतवो विनोदव्यापाराः कर्त्तव्याः। तैर्व्यापारैस्तान्यङ्गानि भोगपरिपूर्णानि प्रत्युप्यन्ते स्थाप्यन्ते॥

सामान्यतः व्यापारविशेषा उक्ताः। अथ विशेषाकारेणैकं विधत्ते। "औदुम्बरस्तल्पो भवति। ऊर्ग्वा अन्नमुदुम्बरः। ऊर्ज्ज एवान्नाद्यस्यावरुन्धे" इति। आसन्दी औदुम्बरी कार्य्या। उदुम्बरस्यान्नरसरूपत्वात्तत्प्राप्तिर्भवति। एतच्च संहितायामप्याम्नातम्। आसन्दीमुद्गाताऽऽरोहति साम्राज्यमेव गच्छन्ति इति॥

अथ तल्पे कर्त्तव्यं विधत्ते। "यस्य तल्पसद्यमनभिजितꣳ स्यात्। स देवानाꣳ साम्यत्ते। तल्पसद्यमभिजयानीति तल्पमारुह्योद्गायेत्। तल्पसद्यमेवाभिजयति [५]। यस्य तल्पसद्यमभिजितꣳ स्यात्। स देवानाꣳ साम्यत्ते। तल्पसद्यं मा पराजेषीति तल्पमारुह्योद्गायेत्। न तल्पसद्यं पराजयते" इति। तल्पे मञ्चके सद्यं सदनमुपवेशनं तल्पसद्यम्। यद्युद्गाता पूर्व्वं दरिद्रस्तदा राजादियोग्ये तल्पेऽवस्थानं न प्राप्स्यात्। तादृशमुद्गाता यज्ञभूमौ देवानां समक्षे देशेऽवस्थाय तल्पेत्यादिमन्त्रं गायेत्। तस्यायमर्थः। धनिको भूत्वा तल्पेऽवस्थानं सर्व्वदा प्राप्तवानीति। स च ततः तथैव प्राप्नोति। यद्युद्गाता पूर्व्वं धनिको भूत्वा तल्पावस्थानं प्राप्तवान्। तदानीमिमं मन्त्रं

पठेत्। तस्य चायमर्थः। इदं तल्पावस्थानं कदाचिदपि मा पराजैषि। अस्मिन् विषये मम पराजयो माभूत्। कदाचिदपि मदीयं धनिकत्वं मां विनश्यत्विति॥

अथ होतुर्दोलां विधत्ते। "प्रेङ्खे शꣳसति। महो वै प्रेङ्खः। मह एवान्नाद्यस्यावरुन्धे" इति। महस्तेजः दोलायास्तेजोहेतुत्वान्महस्त्वम्। अतस्तत्तेजसोऽन्नस्य च प्राप्तौ भवति॥

अथ व्यापारान्तरं विधत्ते। "देवासुराः संयत्ता आसन्। त आदित्ये व्यायच्छन्त। तं देवाः समजयन् [६]। ब्राह्मणश्च शूद्रश्च चर्मकर्त्ते व्यायच्छेते। दैव्यो वै वर्णो ब्राह्मणः। असुर्यः शूद्रः। इमे रात्सुरिमे सुभूतमक्रन्नित्यन्यतरो ब्रूयात्। इम उद्वासीकारिण इमे दुर्भूतमक्रन्नित्यन्यतरः। यदेवैषाꣳ सुकृतं या राद्धिः। तदन्यतरोऽभिश्रीणाति। यदेवैषां दुष्कृतं या राद्धिः। तदन्यतरोपहन्ति। ब्राह्मणः सञ्जयति। अमुमेवादित्यं भ्रातृव्यस्य संविन्दन्ते" [७] इति। देवाश्चासुराश्च अयमादित्योऽस्माकमेव भूयादिति परस्परं कलहं कृतवन्तः। तत्र देवानां जयोऽभूत्। अतोऽत्रापि वेदिमध्ये ब्राह्मणो बहिः शूद्रश्चावस्थाय किञ्चिदार्द्रञ्चर्म्म परिमण्डलाकारं गृहीत्वा तद्विषये कलहं कुर्य्याताम्। तत्र देवस्वरूपो ब्राह्मणः। असुरस्वरूपः शूद्रः। तस्मिन् कलहावसरे इमे रात्सुरिति मन्त्रं ब्राह्मणो ब्रूयात्। तस्यायमर्थः। इमे यजमानाः सत्रे समृद्धिं गताः शोभनं कर्म्म कृतवन्त इति। शूद्रस्तु मन्त्रान्तरं ब्रूयात्। तस्यायमर्थः। इमे यजमानाः कर्म्मव्याजेन धनहानिं कृत्वा देश-

मेतमुद्दासं निवासशून्यं कुर्व्वन्ति। तस्मादिमे दुर्व्यापारं कृतवन्त इति। एवं सति एषां यजमानानां यत् सुकृतं, परलोकहितं याच इह लोके समृद्धिः, तदुभयमन्यतरो ब्राह्मणः सम्पादयति। यदन्यत् किञ्चित् प्रमादकृतमेषां दुष्कृतं या चैषामसमृद्धिर्दारिद्र्यरूपं तदुभयमन्यतरः शूद्रो विनाशयति। निन्दाजनितेन हि क्लेशेन पापफलं सर्व्वमनुभूतम्। तत्र कलहे ब्राह्मणः सम्यक् जयेत्। तेन भ्रातृव्यस्य सम्बन्धिनममुमादित्यमेते यजमानाः सम्यग् लभन्ते। अस्य प्रपाठकस्यानुवाकार्थसङ्ग्रहः।

आधानमन्त्रा आद्ये स्युः नवाङ्गानि द्वितीयके।
गवामयनगानि स्युरतिग्राह्यास्तृतीयके॥
दिवाकीर्त्यानि तुर्य्ये स्युः पञ्चमे पशवः श्रुताः।
महाव्रतन्तु षष्ठे स्यात् प्रपाठक उदीरितम्।
वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे प्रथमकाण्डे द्वितीयप्रपाठके षष्ठोऽनुवाकः॥ ॥ ६ ॥

समाप्तश्च द्वितीयप्रपाठकः।

## तैत्तिरीय-ब्राह्मणभाष्ये

### प्रथमकाण्डे तृतीयप्रपाठके

#### प्रथमोऽनुवाकः ।

हरिः ॐ ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
गवामयनमाख्यातं द्वितीये हि प्रपाठके ।
यदनुक्तं संहितायां तत्सर्व्वमिह वर्णितम् ॥
तृतीये वाजपेयस्य ब्राह्मणं समुदीर्य्यते ।
दशानुवाकास्तेषु स्युः पुनराधानमादिमे ॥
स्यात् पिण्डपितृयज्ञोऽन्ते वाजपेयस्तु मध्यतः ।
यत् संहितायामाख्यातं पुनराधानमत्र तु ॥
तस्योक्तस्यानुवादेन विशेषः कोऽपि वर्ण्यते ।
वाजपेयस्य मन्त्रास्तु संहितायामुदीरिताः ॥
मध्यवर्त्त्यनुवाकेषु तद्व्याख्यानमिहेर्य्यते ।
द्वितीये वाजपेयस्य विधिस्तस्य ग्रहाः परे ॥
चतुर्थे पशवः प्रोक्ताः पञ्चमे रथयोजनम ।
मर्य्यादाधावनं षष्ठे यूपारोहणमुत्तरे ॥
अष्टमे त्वभिषेकः स्यादतिग्राह्यास्त्वनन्तरे ।
नवमान्ता द्वितीयाद्या वाजपेयावबोधिनः ॥

यः पिण्डपितृयज्ञोऽसौ दशमे स्पष्टमीरितः ।
तृतीयस्यानुवाकार्था इत्येवं समुदीरिताः ॥
वाजपेयब्राह्मणार्था मन्त्रैः सह पुरेरिताः ।
आद्यन्तावनुवाकौ तौ व्याख्यास्येते इह क्रमात् ॥

तत्राद्येऽनुवाके पुनराधेयगतयो राज्यभागयोर्विशेषं विधातुमादावुपाख्यायिकामाह। "देवासुराः संयत्ता आसन्। ते देवा विजयमुपयन्तः। अग्नीषोमयोस्तेजस्विनीस्तनूः सन्न्यदधत। इदमु नो भविष्यति। यदि नो जेष्यन्तीति। तेनाग्नीषोमावपाक्रामताम्। ते देवा विजित्य। अग्नीषोमावन्वैच्छन्। तेऽग्निमन्वविन्दन्नृतुषूत्सन्नम्। तस्य विभक्तीभिस्तेजस्विनीस्तनूरवारुन्धत [१]। ते सोममन्वविन्दन्। तमघ्नन्। तस्य यथाभिज्ञायं तनूर्व्यगृह्णत। ते ग्रहा अभवन्। तद्ग्रहाणां ग्रहत्वम्। यस्यैवंविदुषो ग्रहा गृह्यन्ते। तस्य त्वेव गृहीताः" इति। यदा देवाश्चासुराश्च युद्धोद्युक्ताः तदा देवा विजयं प्राप्तुकामाः स्वकीयास्तेजस्विनीस्तनूरग्नीषोमयोः स्थापितवन्तः। तनुशब्देन शरीरवत्प्रियभूतधनमुपलक्ष्यते। तयोर्धनं स्थापयतां देवानामयमभिप्रायः। यदि कथञ्चिदस्मान् यदा असुरा जेष्यन्ति तदानीमिदमेव धनमस्माकं जीवनाय भविष्यतीति। ततः स्थापितेन तेन धनेन सह तावग्नीषोमौ पलायनमकुरुताम्। देवाः पुण्यवशेन विजयं प्राप्य सर्वत्राग्नीषोमावन्विष्य क्वचिदृतुषु वेषमाच्छाद्यावस्थितमग्निमलभन्त। ऋतूनां बलमवष्टभ्यावस्थितत्वाद्बलाद्ग्रहीतुमशक्ता देवास्तस्याग्नेरुत्कोचरूपेण चतस्रो वि-

भक्तीर्दत्वा स्वकीयास्तनूर्धनरूपाः स्वीकृतवन्तः। ताश्च विभक्तयः सूत्रे स्पष्टमुदाहृताः। आग्नाग्नेग्नावग्नेग्निनाग्नेग्निमग्न इति चतुर्षु प्रयाजेषु चतस्रो विभक्तीर्ददातीति समिधो अग्न आज्यस्य वियन्तु तनूनपादग्न आज्यस्य वेत्वित्याद्यासु प्रयाजयाज्यासु सम्बुद्ध्यन्ता अग्निशब्दा आम्नाताः। तेभ्यः पुरस्तात् क्रमेण सम्बुद्धिसप्तमी-तृतीयाद्वितीयाविभक्त्यन्ता अग्निशब्दाः प्रयुक्ताः। तेन तुष्टो-ऽग्निस्तदीयास्तनूर्दत्तवान्। अथ ते देवाः सोममन्विष्य लब्ध्वा तं ताडयित्वा तस्य सकाशात् स्वकीयास्तनूस्तत्तल्लक्षणेन सम्य-गभिज्ञाय यथायथं गृहीतवन्तः। ते च तनुसमाना द्रव्यवि-शेषा ऐन्द्रवायवादिग्रहा अभवन्। देवैर्गृह्यन्त इति व्युत्पत्त्या ग्रहनाम सम्पन्नम्। यो यजमानस्तादृशं महिमानं विद्वान् गृह्णाति तस्यैव ग्रहा यथाशास्त्रं गृहीता भवन्ति॥

अथ यथोक्तविभक्तिविधिं मनसि निधाय तं विधिमुन्नेतुमु-पोद्घातमाह। “नानाग्नेयं पुनराधेये कुर्य्यात्। यदनाग्नेयं पुनराधेये कुर्य्यात्। व्यृद्धमेव तत् [२]। अनाग्नेयं वा एतत् क्रियते। यत्समिधस्तनूनपातमिडो बर्हिर्यजति” इति। यत् पुनराधेयं तस्मिन् अनाग्नेयं न कुर्य्यात्। अतएव सूत्रकारे-णोक्तम्, सर्व्वमाग्नेयं भवतीति। अनाग्नेयकरणे पुनराधेयेऽस्य समृद्धिहेतुत्वं न स्यात्। क्रियते चात्र समिदादिषु चतुर्षु प्रया-जेषु अनाग्नेयम्। तन्मन्त्रेषु देवतान्तराणां समिदादीनां श्रूयमाणत्वात्। सोऽयमाक्षेपरूप उपोद्घातः। अत्र प्रया-जानां चतुर्णामाग्नेयत्वसम्पादनाय यथोक्तविभक्तीः कुर्य्यादिति

विष्णुर्न्नेयः। प्रत्यक्षविधिश्च संहितायामाम्नातः, विभक्तयो भवन्ति वाचो विधृत्या इति॥

इदानीमाज्यभागयोर्विशेषं विधत्ते। "उभावाग्नेयावाज्यभागौ स्याताम्" इति। प्रकृतावाद्य आज्यभाग आग्नेयः। द्वितीयः सौम्यः। अत्र तु द्वितीयोऽप्याग्नेयः कर्त्तव्यः॥

अत्रैवापरं विशेषं विधत्ते। "अनाज्यभागौ भवत इत्याहुः। यदुभावाग्नेयावन्वञ्चाविति। अग्नये पवमानायोत्तरः स्यात्। यत्पवमानाय। तेनाज्यभागः। तेन सौम्यः" इति। अत्र केचिदभिज्ञा एवमाचिपन्ति, यद्युभावप्याज्यभागौ अन्वञ्चावव्यहितावाग्नेयावेव कुर्य्यात्। तदानीमेतावाज्यभागावेव न भवतः। सौम्यस्यानुष्ठितत्वात्। सौम्यो हि सोपपत्तिकः प्रकृतावेवं विहितः। देवलोकं वा अग्निना यजमानोऽनुपश्यति पितृलोकꣳ सोमेनोत्तरार्द्धेऽग्नये जुहोति दक्षिणार्द्धे सोमायेति। तस्मादुत्तरः सौम्यः कर्त्तव्य इति। अस्मिन् पक्षे अभिज्ञस्यैवमुत्तरमनाग्नेयत्वमसौम्यत्वञ्चेतिदोषद्वयं वारयितुं पवमानायाग्नय उत्तर आज्यभागः कर्त्तव्यः। तत्राग्निः प्रत्यक्षमेव श्रूयते। पवमानविशेषणेन तु केवलाग्नेयत्वदोषवारणादाज्यभागत्वं सिध्यति। तावता सौम्यत्वमुपचरणीयम्। अग्न आयूंषि पवस इत्यस्यां पुरोऽनुवाक्यायां कृतायामग्नये पवमानाय अयमुत्तर आज्यभागः स्यादिति तात्पर्य्यार्थः॥

प्रथमस्याज्यभागस्य प्रकृतौ पुरोऽनुवाक्यां बाधितुमन्यां विधत्ते। "बुधन्वत्याग्नेयस्याज्यभागस्य पुरोऽनुवाक्या भवति [३]।

यथा सुप्तम्बोधयति। तादृगेव तत्'' इति। बुधिधातुर्यस्या-मृचि अस्ति सेयं बुधन्वती तस्यां क्रियमाणायां यथा लोकेषु सुप्तं पुरुषं बोधयति तादृशमेव तद्भवति। अत्र सूत्रम्, अग्निꣳ स्तोमेन बोधयत्याग्नेयस्याज्यभागस्य पुरोऽनुवाक्या भवत्यग्न आयूꣳषि पवस इति।

सौम्यस्येति पत्नीसंयाजमन्त्रेषु विशेषं विधत्ते। "अग्निन्य-क्ताः पत्नीसंयाजानामृचः स्युः। तेनाग्नेयꣳ सर्व्वं भवति'' इति। अग्निपदेन युक्ता अग्निन्यक्ताः आप्यायस्व समेतु ते विश्वतः सोमवृष्णियमित्येषा प्रथमस्य पत्नीसंयाजस्य पुरोऽनुवाक्या। तत्र सोमाग्ने वृष्णियमित्यग्निपदप्रक्षेपोऽग्नियुक्तत्वं यथा समि-दादिप्रयाजेषु अग्निशब्दगतविभक्तिप्रयोगेनाग्नेयत्वम्। एवं पत्नीसंयाजानामप्याग्नेयत्वं सम्पद्यते॥

अत्र चोद्यवादिनामाक्षेपं दर्शयति। "एकधा तेजस्विनीं देवतामुपैतीत्याहुः। सैनमीश्वरा प्रदह इति'' इति। तेजोऽ-धिकां देवतां यः पुमानेकधोपैति नैरन्तर्य्येण सेवते सा देवता तमेनं प्रदग्धुं समर्था भवति॥ तस्मात् पूर्व्वोक्तमग्निन्यक्तत्वं न कार्य्यमित्याक्षेपः। तस्योत्तरं दर्शयति। "नेति ब्रूयात्। प्रजननं वा अग्निः। प्रजननमेवोपैति'' इति। नास्ति प्रदाह इत्येव-मुत्तरं ब्रूयात्। अग्नेर्विरोधिदाहकत्वेऽपि स्वकीयसेवकं प्रति प्रजननेनानुग्राहकत्वात् निरन्तरमग्निं सेवमानः प्रजोत्पत्ति-मेव प्राप्नोतीति॥

अत्र चोदकप्राप्तान् सम्भारान् आधानमन्त्रांश्च पूर्व्वपक्ष-

रूपेण निराचष्टे। "कृतयजुःसम्भृतसम्भार इत्याहुः [४]। न सम्भृत्याः सम्भाराः। न यजुः कार्य्यम्" इति। यजुःशब्देन घर्म्मः शिर इत्याद्या आधानमन्त्रा विवक्षिताः। सम्भारशब्देन सिकतादिसप्तमृद्विशेषाः अश्वत्थोदुम्बरादिसप्तवानस्पत्यविशेषाश्च विवक्षिताः। प्रथमाधाने यजुषामुच्चरितत्वात् सम्भाराणाञ्च सम्पादितत्वात् ॥

अस्यापि पुनराधेयस्याधानादत्यन्तभेदाभावेन यजुःसम्भारयोः सिद्धत्वात्तदुभयं पुनर्न कर्त्तव्यमिति पूर्व्वपक्षः। सिद्धान्तमाह। "अथो खलु। सम्भृत्या एव सम्भाराः। कार्य्यं यजुः। पुनराधेयस्य समृद्ध्यै" इति। अथोशब्देन पूर्व्वपक्षो निवर्त्तते। यद्यप्ययमर्थः संहितायामुक्तः तथाप्यस्यानुवाकस्यातच्छेषत्वद्योतनाय पुनरनुवादः ॥

अन्यं विशेषं विधत्ते। "तेनोपाᳪंशु प्रचरति। एष्य इव वा एषः। यत्पुनराधेयः। यथोपाᳪंशु नष्टमिच्छति [५]। तादृगेव तत्" इति। तेन पुनराधेयेनाव्यक्तशब्दं यथा भवति तथाऽनुतिष्ठेत्। तत्रायं हेतुः। योऽयं पुनराधेयः स एव पुनरन्वेषणीय इव भवति। आधानेन सम्पादितस्याग्नेरुद्वासनेन विनाशे सति पुनः सम्पादनाय प्रवृत्तत्वात्। अत एव पुनरन्वाधेयविधिरेवं आत्मनः उद्वास्य पुनरादधीतेति अत्रान्वेषणे दृष्टान्तः। यथा लोके स्वगृहे चौरैरपहृतं नष्टं वस्तु चौरगृहेऽन्विच्छन् पुरुषो हस्तपादादिशब्दो यथा नोत्तिष्ठति तथैवान्विच्छति। तादृगेव तद्द्रष्टव्यम् ॥

विशेषान्तरं विधत्ते। "उच्चैः स्विष्टकृतमुत्सृजति। यथा नष्टं वित्वा प्राहायमिति। तादृगेव तत्" इति। स्विष्टकृद्विषयं मन्त्रमुच्चैरुच्चारयेत्। यथा लोके नष्टं वस्तु प्रच्छन्नवेषेणान्विष्य कथञ्चित्तल्लब्ध्वा सर्व्वेषामग्रे मदीयोऽयं पदार्थ इति एवं प्रकाशयति। तद्वदेव तत्। तदेतत् सूत्रकार आह, सामिधेनिभृत्युपांशु यजत्योत्तमादनूयाजादुच्चैः स्विष्टकृतमिति। ये पूर्व्वपक्षवादिनः सर्व्वाग्नेयत्वसिद्धान्तपक्षं दूषयन्तः स्वमतपूर्व्वपक्षत्वेनोपन्यस्य परैर्निराकृताः तएव वादिनः पुनरपि स्वकीयं मतं दृढीकृत्य सर्व्वाग्नेयत्वपक्षं दूषयन्ति तेषां मतमाह, एकधा तेजस्विनीं देवतामुपैतीत्याहुः, सैनमीश्वरा प्रदह इति। तत्तथा नोपैति। प्रयाजानूयाजेष्वेव विभक्तीः कुर्य्यात्। यथापूर्व्वमाज्यभागौ स्याताम्। एवं पत्नीसंयाजाः। तद्वैश्वानरवत्प्रजमनवत्तरमुपैतीति इति। अग्नेर्दाहकत्वात् सर्व्वमाग्नेयं कर्म्म प्रदाहायैव स्यात्। पुनराधेयं तथा नोपैति। सर्व्वमाग्नेयं न कुर्य्यात्। किन्तु प्रयाजानूयाजेष्वेवाग्निविषया विभक्तीः कुर्य्यात्। तत्र प्रयाजविभक्तयः आपस्तम्बोक्ताः पूर्व्वं दर्शिताः। अनूयाजविभक्तिद्वयं त्वाश्वलायनेनोक्तम्, देवं वर्हिरग्ने वसुवने वसुधेयस्य वेतु देवो नराशंसोऽग्नौ वसुवने वसुधेयस्य वेत्विति। एवमुभयत्रैवाग्निविभक्तीः कृत्वा याबाज्यभागौ ये च पत्नीसंयाजास्ते सर्व्वे प्रकृतिवदेवानुष्ठेयाः। न त्वाग्नेयत्वाय तत्र प्रयतितव्यम्। एवं सति तत्पुनराधेयकर्म्माग्निविषयविभक्तिसद्भावाद्वैश्वानरवदग्नियुक्तमत　एवाति-

अयेन प्रजननवच्च कृतं भवतीत्येवं समतदार्थं सम्पादितम्॥

अत्र सर्व्वाग्नेयत्ववादिनाक्षेपमुद्भावयति।"तदाहुः। व्यृद्धं वा एतत्। अनाग्नेयं वा एतत्क्रियत इति" इति। इति द्वितीयाज्यभागस्याग्नेयत्वं पत्नीसंयाजानां चाग्निन्यक्तत्वं यदि न क्रियते। तदानीमेतत् पुनराधेयमनाग्नेयं स्यात्॥

एतच्च समृद्धिहीनमितिवादिनाक्षेपाचन्तस्योत्तरमाह। "नेति ब्रूयात्। अग्निं प्रथमं विभक्तीनां यजति। अग्निमुत्तमं पत्नीसंयाजानाम्। तेनाग्नेयम्। तेन समृद्धं क्रियत इति" [६] इति। एतत्पुनराधेयमस्मदुक्तप्रकारेणाज्यभागयोः पत्नीसंयाजानाञ्च यथापूर्व्वत्वेऽपि समृद्धिहीनं न भवतीति उत्तरं ब्रूयात्। कथमिति तदुच्यते, प्रथमं यागादौ प्रयाजगतविभक्तीनां सम्बन्धित्वादग्निर्यष्टव्यः। अवसाने च पत्नीसंयाजेषूक्तमग्निं यजेत्। तत्र चाग्निर्होता गृहपतिरित्याग्नेयो मन्त्र आम्नातः। अत आद्यन्तयोराग्नेयत्वेन तन्मध्यपतितं सर्व्वमाग्नेयं सम्पद्यते। तेन पुनराधेयं समृद्धं कुरुते।

अत्र मीमांसादशमाध्यायस्य चतुर्थपादे चिन्तितम्।

बुधन्वत्यादिगुणको देवो वाच्योऽथ केवलः।
आद्यो देवगुणत्वेन नैवं मन्त्रगुणत्वतः॥

आधाने पवमानेष्टिष्वाज्यभागौ प्रकृत्य श्रूयते, बुधन्वत्याग्नेयः कार्य्यः पावकान् सौम्य इति। तथा पुनराधेयेऽपि श्रूयते, बुधन्वत्याग्नेयस्याज्यभागस्य पुरोऽनुवाक्या भवति। इत्यत्र निगमेषु बुधन्वन्तमग्निमावह पावकवन्तं सोममावहेत्येवं स-

गुणो देवो वक्तव्यः कुतः। बुधन्वत्यादेर्देवगुणत्वात्। तथाहि। बुधशब्दोऽस्यास्तीति बुधन्वान्। न खल्वाज्यभागस्य देवताद्वारेण विना साक्षाद्बुधशब्दवत्त्वं सम्भवति। तस्माद्देवगुणत्वात् सगुणो देवो वक्तव्यः। मैवम्। बुधन्वत्यादेर्मन्त्रगुणत्वात्। न ह्यत्र आग्नेयः शब्दपरः। किन्तु मन्त्रपरः सम्भवति हि। मन्त्रस्य साक्षादेव बुधशब्दयोगः। अग्निꣳ स्तोमेन बोधयेत्यस्मिन्मन्त्रे बुधिधातोः प्रयुक्तत्वात्। बुधन्वत्त्वाविधिना चाग्नेयं मन्त्रान्तरं निवर्त्त्यते। न च तद्धितान्त आग्नेयपद उपसर्ज्जनभूतो देवतावाचकोऽग्निशब्दो बुधन्वच्छब्देन विशेष्टुमर्हति। तस्मात् केवलोऽग्निशब्दो निगमे पठितव्यः॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे प्रथमकाण्डे तृतीयप्रपाठके प्रथमोऽनुवाकः॥ ॥ १ ॥

प्रथमेऽनुवाके पुनराधेयशेषोऽभिहितः द्वितीयमारभ्य नवमान्तेष्वष्टस्वनुवाकेषु यद्वाजपेयब्राह्मणमाम्नातं तस्य संहितायां प्रथमकाण्डे सप्तमे प्रपाठके समाम्नातैर्मन्त्रैः सहास्माभिर्व्याख्यातत्वात्तत्रैवाक्षरार्थो द्रष्टव्यः। तात्पर्य्यं त्वनुवाकानामिहैवादौ सङ्गृहीतम्॥

इति नवमोऽनुवाकः।

अथ दशमोऽनुवाकः ।

अथ दशमे पिण्डपितृयज्ञ उच्यते। तत्रादौ कालविशेषं विधत्ते । "इन्द्रो वृत्रꣳ हत्वा। असुरान् पराभाव्य। सोऽमावास्यां प्रत्यागच्छत् । ते पितरः पूर्व्वेद्युरागच्छन् । पितॄन् यज्ञोऽगच्छत् । तन्देवाः पुनरयाचन्त । तमेभ्यो न पुनरददुः । तेऽब्रुवन् वरं वृणीमहै । अथ वः पुनर्दास्यामः। अस्माभ्यमेव पूर्व्वेद्युः क्रियत इति [१] । तमेभ्यः पुनरददुः । तस्मात्पितृभ्यः पूर्व्वेद्युः क्रियते । यत् पितृभ्यः पूर्व्वेद्युः करोति । पितृभ्य एव तद्यज्ञं निष्क्रीय यजमानः प्रतनुते" इति । इन्द्रः पुनर्युद्धे वृत्रं हत्वा तदीयानसुरांश्च पराभूतान् कृत्वा यदमावास्यां यागदिनं प्रति स्वगृहे समागत्य शुक्लप्रतिपदि ह्यमावास्यायागः क्रियते। ततः पूर्व्वेद्युः पितर आगताः तैः पितृभिः सह यज्ञोऽपि गतः। तं पितृभिः सहावस्थितं यज्ञं देवाः स्वार्थमयाचन्त, पूर्व्वमस्मदीयो यज्ञः इदानीं भवत्समीपमागतः पुनरस्माभ्यमेव यज्ञो दातव्यः इति । ततः पितरस्तमदत्वा तद्दानार्थमुत्कोचमपेक्षितवन्तः । पूर्व्वेद्युर्दर्शदिनेऽस्मदर्थं कर्म्म कर्त्तव्यम् । ततः प्रतिपद्यनुष्ठेयं दर्शपूर्णमासाख्यं यज्ञं दास्याम इति प्रतिज्ञातीरन् । ततो देवैस्तथेत्यङ्गीकृते तं यज्ञं दत्तवन्तः । तस्मात् पित्रर्थं कर्म्म पूर्व्वेद्युः पूर्व्वदिने कुर्य्यात् । तथा कृते तेन मूल्येन यज्ञं पितृभ्यो निष्क्रीय यजमानस्तमनुष्ठातुं प्रवर्त्तते ॥

कालं विधाय होममन्त्रं विधत्ते । "सोमाय पितृपीताय स्वधा नम इत्याह । पितुरेवाधि सोमपीथमवरुन्धे ।

न हि पिता प्रमीयमाण आहैष सोमपीथ इति। इन्द्रियं वै सोमपीथः। इन्द्रियमेव सोमपीथमवरुन्धे। तेनेन्द्रियेण द्वितीयां जायामभ्यश्नुते" [२] इति। पितृभिः पीतोऽमृतत्वेन परिणतो यः सोमस्तस्मै सोमायेदं स्वधा दत्तम्। नमस्कारोऽपि कृतः। इत्यमुं मन्त्रं होमकाले ब्रूयात्। अनेन होमेन स्वकीयस्य पितुः अध्युपरि यत्सोमपानं पूर्व्वं वृत्तं तत् स्वयं प्राप्नोति। पितुः सम्बन्धि गृहक्षेत्रादिकं यथा होममन्त्रेण प्राप्नोति। तद्वत्तदीयं सोमपानमपि प्राप्नोतीति चेत्। नैवम्। गृहादिवदसमर्पितत्वात्। प्रमीयमाणः पिता पुत्रमाहूयेदं गृहमिदं क्षेत्रं तवेति यथा ब्रूते। तथा सोमपानमिदं तवेति न हस्ते समर्पयति। तस्माद्धोमेनैव सोमपानफलं सम्पादनीयम्। न चैतत् प्रयाससाध्यं सोमपानं माभूदेवेति शङ्कनीयम्। सोमपानस्येन्द्रियवृद्धिरूपत्वेनावश्यं प्रापणीयत्वात्। पूर्व्वं स्वस्मिन् विद्यमानेनेन्द्रियेणैकां जायां भोक्तुं समर्थः। पितृप्रसादलब्धेन त्विन्द्रियेण द्वितीयामपि भोक्तुं समर्थो भवति॥

एतद्वेदनं प्रशंसति। "एतद्वै ब्राह्मणं पुरा वाजश्रवसाविदामक्रन्। तस्मात्ते द्वे द्वे जाये अभ्याचत। य एवं वेद। अभि द्वितीयां जायामश्नुते" इति। वाजोऽन्नं तद्दाननिमित्तं श्रवः कीर्त्तिर्यस्य महर्षेरसौ वाजश्रवाः। तस्य पुत्रा वाजश्रवसाः। ते च पुरा सोमाय पितृपीतायेतिमन्त्रस्य व्याख्यानरूपमेतद्ब्राह्मणं विदितवन्तः। तस्माद्वेदनात्ते महर्षयः प्रत्येकं

जायाद्वयमभिप्राप्तवन्तः। तस्मादन्योऽपि विदित्वा द्वितीयां जायां प्राप्नोति॥

अथ द्वितीयहोममन्त्रं विधत्ते। "अग्नये कव्यवाहनाय स्वधा नम इत्याह। य एव पितॄणामग्निः। तं प्रीणाति" इति। कव्यं पित्र्यं हविर्वहतीति कव्यवाहनः। तस्य च पितृसम्बन्धोऽन्यत्रापि आम्नातः, त्रयो वा अग्नयो हव्यवाहनो देवानां कव्यवाहनः पितॄणाᳪ सहरक्षा असुराणामिति। तस्मादेतन्मन्त्रहोमेन तं पित्र्यमग्निं परितोषयति॥

शाखान्तरगतेन यमायाङ्गिरस्वते पितृमते स्वधा नम इति मन्त्रेणैकामाहुतिमभिप्रेत्य त्रित्वं विदधाति। "तिस्र आहुतीर्जुहोति" इति। तथा च सूत्रकारेण स्पष्टमुक्तम्, सोमाय पितृपीताय स्वधा नम इति प्रथमां दक्षिणाग्नौ जुहोति। यमायाङ्गिरस्वते पितृमते स्वधा नम इति द्वितीयाम्। अग्नये कव्यवाहनाय स्वधा नम इति तृतीयामिति। यदुक्तं सूत्रकारेण, सव्यञ्जान्वाच्यावाचीनपाणिः सकृदाच्छिन्ने वर्हिषि दक्षिणापवर्गान् पिण्डान् ददातीति॥

तदिदं विधत्ते। "त्रिर्निदधाति" इति॥

तदेतदाहुतित्रयं पिण्डत्रयञ्च मिलित्वा प्रशंसति। "षट् सम्पद्यन्ते [२]। षड्वा ऋतवः। ऋतूनेव प्रीणाति" इति। यदुक्तं सूत्रकारेण, मेक्षणमुपस्तीर्य्य तेनावदायाभिघार्य्य तस्य मेक्षणस्याग्नौ प्रहरणं विधत्ते। "तूष्णीं मेक्षणमादधाति। अस्ति वाहि षष्ठ ऋतुर्नवा" इति। मेक्षणशब्देन

प्रादेशमात्रा समिदुच्यते। हविरसद्रामसाधनं मेक्षणं मन्त्रम-न्तरेणाग्नौ प्रक्षिपेत्। शास्त्रेषु षष्ठश्चतुरस्त्रीत्येकः पक्षः। षड्वा ऋतव इति श्रुतेः। नास्तीत्यपरः पक्षः। पञ्चर्त्तवो हेमन्त-शिशिरयोः समासेनेति श्रुत्यन्तरात्। अतस्तूष्णीं समिदाधाने पक्षद्वयमप्यनुश्रुतं भवति। तत्र समिधः प्रक्षिप्तलादस्तित्व-पक्षोऽङ्गीकृतः। मन्त्ररहित्यादभावपक्षोऽङ्गीकृतः॥

आहुतित्रयं पिण्डत्रयञ्च प्रकारान्तरेण प्रशंसति।"देवान् वै पितॄन् प्रीतान्। मनुष्याः पितरोऽनुप्रपिपते। तिस्र आहुती-र्जुहोति। त्रिर्निदधाति। षट् सम्पद्यन्ते। षड्वा ऋतवः [४]। ऋतवः खलु वै देवाः पितरः। ऋतूनेव देवान् पितॄन् प्री-णाति। तान् प्रीतान्। मनुष्याः पितरोऽनुप्रपिपते" इति। द्विविधा हि पितरः, देवात्मका मनुष्यात्मकाश्च। पितृलोक-स्वामिनो देवात्मकाः। मृताः सन्तो भोगात्तल्लोकं प्राप्ता म-नुष्यात्मकाः। तत्र देवात्मकेषु पितृषु प्रीतेषुताननु मनुष्या-त्मकाः पितरः प्रपिपते प्रीता भवन्तीति युक्तम्। तदर्थमादौ तिस्र आहुतयः पश्चात् पिण्डत्रयम्। किञ्च उभयमेलनेन षट् सम्पत्त्या तत्सङ्ख्याका ऋतवः सम्पद्यन्ते। ऋत्वभिमानिनश्च देवाः पितरः ततश्च सङ्ख्यामात्रेण देवपितृषु प्रीतेषु पश्चान्मनुष्य-पितरः प्रीता भवन्ति। सकृदाच्छिन्नं बर्हिर्भवति। सकृदिव हि पितर इति पिण्डानामधस्ताद्बर्हिरास्तीर्य्यते। तदेक-प्रयत्नेनैव छेदनीयम्। न तु लवनकाले दात्रस्य पुनः पुन-र्व्यापारः। एकेनैव दृढेन व्यापारेण यावदवच्छिन्नं तावद्देवाने-

तव्यम्। यस्मात् पितरः सकृन्मरणेनैव पितृत्वं प्राप्नुवन्ति। न तु तत्प्राप्तये पुनः पुनर्म्रियन्ते॥

पिण्डदानस्य त्रित्वं प्रशंसति। "त्रिर्निदधाति। तृतीये वा इतो लोके पितरः। तानेव प्रीणाति" इति। इतो भूलोकादारभ्यान्तरिक्षलोकमतिक्रम्य यस्तृतीयो लोकस्तत्र पितरो वर्त्तन्ते॥

अतस्त्रित्वेन तान् परितोषयति विधत्ते। "पराङावर्त्तते [५]। ह्रीका हि पितरः" इति। दक्षिणाभिमुखः पिण्डं दत्त्वा पिण्डनिरीक्षणं परित्यज्य पराङ्मुखो भवेत्। पितॄणां लज्जाशीलत्वात्॥

लोकेऽपि हि भुञ्जानाः प्रभवो नान्यैर्वीक्ष्यन्ते विधत्ते। "ओष्मणो व्यावृत उपास्ते। ऊष्मभागा हि पितरः" इति। ओष्मवशात् पिण्डेषु योऽयमूष्मा निर्गच्छति तस्य व्यावृत्युपरमः आव्यावृतः तदुपरमपर्य्यन्तं तथैव स्थित्वा सेवेत्। पितॄणामूष्मभागित्वेन तच्छान्तिपर्य्यन्तं तद्भोजनकालत्वात्॥

'अथ विचारपूर्व्वकं पिण्डशेषस्य पात्रगतस्याघ्राणं विधत्ते। "ब्रह्मवादिनो वदन्ति। प्राश्यां३ न प्राश्यां३मिति। यत्प्राश्नीयात्। जन्यमन्नमद्यात्। प्रमायुकः स्यात्। यन्न प्राश्नीयात्। अहविः स्यात् [६]। पितृभ्य आवृश्चेत। अवघ्रेयमेव। तन्नेव प्राशितन्नेवाप्राशितम्" इति। विचारार्था श्रुतिः। प्राशनपक्षे वीजभक्षणवददनीयस्याभावात् क्षुधितो यजमानो सीदेत। अप्राशनपक्षे तु सर्व्वत्र हविःशेषस्य भक्षणदर्शनात् इदं हवि-

रेव न स्यात्। अतोऽयं पितृभ्यो विच्छिद्येत। अतो दोषद्वय-परिहाराय पात्रगतमन्नमवजिघ्रेदेव। तदवघ्रातं प्राशितमिव न भवति। निगरणाभावात् अप्राशितमिव न भवति। तदीय-गन्धस्यान्तःप्रवेशात्। यदुक्तं सूत्रकारेण, वाससो दशां छित्वा निदधातीति॥

तदेतद्विधत्ते। "वीरं वा वै पितरः प्रयन्तो हरन्ति। वीरं वा ददति। दशां छिनत्ति। हरणभागा हि पितरः। पितॄनेव निरवदयते" इति। पिण्डरूपमन्नं भुक्त्वा यदा पितरः स्वस्थाने प्रयान्ति तदानीमस्य वीरं पुत्रं विद्यमानमपहरन्ति वा अविद्यमानं ददति वा। पक्षद्वयमपि सम्भाव्यते। वैकल्ये पुत्रं मारयन्ति। साकल्ये पुत्रं प्रयच्छन्ति। अत्र वैकल्यस्य दुष्परिहरत्वात् पुत्रप्रत्याम्नायत्वेन वस्त्राग्रमीषत् सूत्रं छित्वा पिण्डेषु निदध्यात्। यस्मादपहरणमेव पितरो भजन्ते तस्मात्पितॄन्निःशेषभागदानेन विसर्ज्जयति॥

तत्रैव कञ्चिद्विशेषं विधत्ते। "उत्तर आयुषि लोम छिन्दीत। पितॄणाꣳ ह्येतर्हि नेदीयः" [७] इति। पञ्चाशत् संवत्सरपरिमितं पूर्व्वमायुः, अवशिष्टं तूत्तरम्। तस्मिन् वयसि वस्त्रदशा न छेत्तव्या किन्तु स्वकीयं लोम छित्वा तत्र निदध्यात्॥

यस्मादयमासन्नमरणत्वात् पितॄणामपि समीपवर्त्ती। तस्मात् तस्मिन्वयस्येतदुचितं विधत्ते। "नमस्करोति। नमस्कारो हि पितॄणाम्" इति। अत्यन्तं प्रिय इति शेषः॥

तत्र मन्त्रं विनियुङ्क्ते। "नमो वः पितरो रसाय। नमो वः

पितरः शुष्माय। नमो वः पितरो जीवाय। नमो वः पितरः स्वधायै। नमो वः पितरो मन्यवे। नमो वः पितरो घोराय। पितरो नमो वः। य एतस्मिँल्लोके स्थ [८]। युष्माँस्तेनु। येऽस्मिँल्लोके। मान्तेनु। य एतस्मिँल्लोके स्थ। यूयं तेषां वसिष्ठा भूयास्त। येऽस्मिँल्लोके। अहं तेषां वसिष्ठो भूयासमित्याह। वसिष्ठः समानानां भवति। य एवं विद्वान् पितृभ्यः करोति'' इति। हे पितरो वो युष्माकं यो रसो युष्माभिर्भुज्यमानः चीरादिः तस्मै नमोऽस्तु। एवं सर्व्वत्र योज्यम्। शुष्मशब्दो बलवाची। जीवो देहाध्यचः। स्वधा तदीया स्त्री। पितरो हि स्वधायां प्रीतिं कुर्व्वन्ति। मन्युः कोपः। घोरो मारणादिव्यापारः। हे पितरो यूयं एतस्मिन् लोके स्थिताः। तेभ्यो युष्मभ्यं नमः। ये तु युष्मत्तोऽन्ये परकीयपितरोऽस्मिन् लोके वर्त्तन्ते। ते सर्व्वे युष्माननुवर्त्तन्ताम्। ये तु मनुष्या अस्मिन् लोके वर्त्तन्ते। ते सर्व्वे मामनुवर्त्तन्ताम्। ये यूयं परकीयैः पितृभिः सह अस्मिन् लोके स्थिताः। ते यूयं तेषां परकीयपितॄणां वसिष्ठा अतिशयेन निवासहेतवो भूयास्त। ये तु मनुष्या अस्मिन् लोके वर्त्तन्ते। तेषां सर्व्वेषामहं युष्मत्प्रसादादतिशयेन निवासहेतुर्भूयासम्। इत्येतं मन्त्रं नमस्कुर्व्वन् पठेत्। यः पुमानेवं नमस्कारमन्त्रं विद्वान् पित्रर्थं पिण्डदानं करोति। स एष समानां मनुष्याणामतिशयेन निवासहेतुर्भवति॥

पिण्डपितृयज्ञं प्रशंसति। ''एष वै मनुष्याणां यज्ञः [६]।

देवानां वा इतरे यज्ञाः। तेन वा एतत् पितृलोके चरति" इति। द्विविधानां पितॄणां मध्ये ये मनुष्याः पितरः तेषामेव पिण्डपितृयज्ञः। ये तु देवास्तेषां दर्शपूर्णमासादिका इतरे यज्ञाः। तस्मादेतेन पिण्डपितृयज्ञेनैष पुरुषः पितृलोके चरति॥

अथ प्रजापते न त्वदेतानीतिमन्त्रेण गार्हपत्यदेशं प्रत्यागमनं विधत्ते। "यः पितृभ्यः करोति। स ईश्वरः प्रमेतोः। प्राजापत्ययर्चा पुनरैति। यज्ञो वै प्रजापतिः। यज्ञेनैव सह पुनरैति। न प्रमायुको भवति" इति। यः पुमान् पित्रर्थमुक्तं कर्म करोति। स पितृप्रियत्वात् सहसागन्तुं सुसमर्थो भवति। तत्परिहाराय प्राजापत्यमन्त्रेण गार्हपत्यदेशं पुनरागच्छेत। प्रजापतेर्यज्ञस्वरूपत्वेन यज्ञरूपत्वात् यज्ञेनैव सह पुनरागतो भवति। अतो न म्रियते॥

एतदेव समन्त्रकं पुनरागमनं प्रशंसति। "पितृलोके वा एतद्यजमानश्चरति। यत्पितृभ्यः करोति। स ईश्वर आर्त्तिमार्त्तोः। प्रजापतिस्त्वावैनं तत उन्नेतुमर्हतीत्याहुः। यत्प्राजापत्ययर्चा पुनरैति। प्रजापतिरेवैनन्तत उन्नयति। नार्त्तिमार्च्छति यजमानः" [१०] इति। पितृभ्यः करोति इति यदस्ति एतेन यजमानः पितृलोक एव सञ्चरति। अतः स यजमानो मनुष्यलोके निस्पृहत्वादत्र पीडां प्राप्तुं प्रभवति। तमेनं प्रजापतिरेव तत आर्त्तेरुद्धर्त्तुं अर्हतीत्येवमभिज्ञा आहुः। अतः प्राजापत्यमन्त्रेणागच्छन्तं प्रजापतिरुद्धरति। सोऽप्यार्त्तिं न

प्राप्नोति ॥ अत्र मीमांसाचतुर्थाध्यायस्य चतुर्थपादे चिन्तितम् ,

क्रत्वङ्गः स्यात् न वा पिण्डपितृयज्ञः क्रतौ हि सः ।
अमावास्योक्तितो नैवं तत्कालोक्तेः पुमर्थता ॥

इदमाम्नायते, अमावास्यायामपराह्णे पितृयज्ञेन चरन्तीति तत्रामावास्याशब्दवाच्ये कर्मणि विधीयमानत्वादयं पिण्डपितृयज्ञः क्रत्वङ्गमिति चेन्नैवम् । अमावास्याशब्दस्य कालवाचित्वात् कर्मणि त्वयं शब्दो लाक्षणिकः । न च वाक्येन क्रत्वङ्गत्वाभावेऽपि प्रकरणेन तद्भवेदिति वाच्यम् । तस्यानारभ्याधीतत्वात् तस्मादयं पुरुषार्थः ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे प्रथमकाण्डे तृतीयप्रपाठके दशमोऽनुवाकः ॥
॥ १० ॥

समाप्तश्च तृतीयप्रपाठकः ।

# तैत्तिरीय-ब्राह्मणभाष्ये

## आद्यकाण्डे चतुर्थप्रपाठके

### प्रथमोऽनुवाकः ।

हरिः ॐ ।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्म्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
तृतीये वाजपेयो यः स प्राधान्येन वर्णितः ।
पुनराधेयकं पिण्डपितृयज्ञस्य वर्णितः ॥
सोमादिब्राह्मणे पूर्व्वं यन्नोक्तं तच्चतुर्थके ।
प्रवक्ष्यते ग्रहास्तस्मिन्ननुवाके समीरिताः ॥

तत्रादौ ग्रहाणां ग्रहणं विधत्ते। "उभये वा एते प्रजापतेरध्यसृज्यन्त। देवाश्चासुराश्च। तान्न व्यजानात्। इमेन्य इमेन्य इति। स देवानꣳशूनकरोत्। तानभ्यषुणोत्। तान् पवित्रेणापुनात्। तान् परस्तात् पवित्रस्य व्यगृह्णात्। ते ग्रहा अभवन्। एतद्ग्रहाणां ग्रहत्वम् [१]। देवता वा एता यजमानस्य गृहे गृह्यन्ते। यद्ग्रहाः। विदुरेनं देवाः। यस्यैवंविदुष एते ग्रहा गृह्यन्ते" इति। देवा असुराश्चेत्येते द्विविधा अपत्यविशेषाः प्रजापतेः सकाशादधिकत्वेन सृज्यन्ते। सृष्टानाञ्च तेषामतिबहुत्वेन सङ्कीर्णत्वादिमेऽन्ये पृथग्भूता देवा इमे चान्ये पृथग्भूता असुरा इति प्रजापतिस्तद्विभागं न ज्ञातवान्। अतो विभागज्ञानाय देवान् सर्व्वानꣳशूनकरोत्।

सोमलतावयवरूपाणि शरीराणि देवानां कृतवान्। तानि लताशरीराणि स्वचिह्नत्वेन धृत्वा देवा व्यावृतत्वेन प्रजापतिना विज्ञाताः। तांश्च लतादेहानभिषुत्य दशापवित्राख्येन वस्त्र-खण्डेन ऋजीषं यथा न सङ्कीर्य्यते तथा रसं शोधयित्वा पवि-त्रस्य परस्तादूर्द्धं अवस्थितस्याधोभागे विविधमिन्द्रवाय्वादि-देवार्थं गृहीतवान्। ते च रसाग्रहा अभवन्। तस्माद्गृह्यन्त इति व्युत्पत्त्या रसानां ग्रहत्वं सम्पन्नम्। य एते ग्रहास्ता एता देवता भूत्वा ता एव यजमानस्य गृहे हविर्धाने गृह्यन्ते। अत एते ग्रहीतव्या इत्यर्थः। एवं महिमानं जानतो यस्य यजमानस्य ग्रहा एते गृह्यन्ते। तमेनं यजमानं देवाः विदुः सम्यगनुष्ठि-तवानित्येवं देवलोके प्रसिद्धिं गच्छतीत्यर्थः॥

सौमिकमन्त्रव्याख्यानरूपे षष्ठकाण्डे ऐन्द्रवाय्वादिग्रहविशेषा एव विहिताः न तु ग्रहसामान्यम्। इह तु तद्विधीयत इत्ययमनुवाकस्तत्काण्डशेषः। ग्रहग्रहणं विधायोपांशुग्रहस्य होमं विधत्ते। "एषा वै सोमस्याहुतिः। यदुपाꣳशुः। सो-मेन देवाꣳस्तर्पयामीति खलु वै सोमेन यजते। यदुपाꣳशु जुहोति। सोमेनैव तद्देवाꣳस्तर्पयति" इति। वाचस्पतये पवस्व वाजिन्नित्यनुवाकेन सिद्धो योऽयमुपांशुग्रहः, एषैव सोमस्य समन्ताद्धुतिः। अत्र हि पात्रस्थः सर्व्वोऽपि सोमो हूयते। नतु ग्रहान्तरवत् कियानप्यवशिष्यते। यजमानोऽपि सोमेन देवांस्तृप्तान् करोमीतिअभिप्रेत्य सोमयागे प्रवृत्तः। तस्मादुपांशु जुहुयात्। तेन सम्पूर्णसोमेनैव देवांस्तर्पयति॥

अथेतरग्रहहोमं विधत्ते। "यद्ग्रहाञ्जुहोति [१]। देवा एव तद्देवान् गच्छन्ति" इति। तेन ग्रहहोमेन लताशरीरधारिणो देवा एव दिव्यविग्रहधारिण इन्द्रवाय्वादिदेवान् गच्छन्ति॥

ऊर्द्ध्वपात्रस्थाः सोमरसा ये ग्रहास्तेषां होमं विधायानूर्द्ध्वं चतुरस्रपात्रस्थिताः सोमरसात्मका ये चमसास्तेषां होमं विधत्ते। "यच्चमसञ्जुहोति। तेनैवानुरूपेण यजमानः सुवर्गं लोकमेति" इति। ग्रहैरेव देवानां तुष्टत्वात् यजमानस्य स्वर्गार्थत्वेनानुरूपस्चमसहोमः। अतस्तेनैवानुरूपेण यजमानः स्वर्गं लोकं प्राप्नोतीति॥

अथ प्रश्नोत्तराभ्यां रसग्रहणाधाररूपाणि पात्राणि विधत्ते। "किन्त्वेतदग्र आसीदित्याहुः। यत्पात्राणीति। इयं वा एतदग्र आसीत्। मृण्मयानि वा एतान्यासन्। तैर्देवा न व्यावृतमगच्छन्। त एतानि दारुमयाणि पात्राण्यपश्यन्। तान्यकुर्व्वत [२]। तैर्वै ते व्यावृतमगच्छन्। यद्दारुमयाणि पात्राणि भवन्ति। व्यावृतमेव तैर्यजमानो गच्छति" इति। यज्ञशालायां दृश्यमानानि पात्राणीति यत्तदेतत् पात्रनिष्पत्तेः पुरा किन्नु नाम वस्त्वासीदिति। एवं पात्रोपादानभूतवस्तुप्रश्नः। एतानि पात्राणि मृण्मयान्येव दृष्टानि तस्मात् पात्रोत्पत्तेः पूर्व्वं तदुपादानं भूमिरासीदित्युत्तरम्। मनुष्यार्थपाकशालायामपि मृण्मयपात्राणां विद्यमानत्वात् तैः पात्रैर्देवा मनुष्येभ्यो व्यावृत्तिं न प्राप्ता इति पुनः प्रश्नवादिनां वचनम्। ते देवा क्वचिदवस्थितान्येव दारुमयाणि पात्राणि

दृष्ट्वा तानि स्वार्थं स्वीकृत्य तैर्दारुमयैर्मनुष्येभ्यो व्यावृत्तिं प्राप्ता इत्युत्तरवादिनां वचनम्। तस्माद्दारुमयाणि पात्राणि कर्त्तव्यानि। तैर्यजमान इतरेभ्यो व्यावृत्तिं प्राप्नोति॥

तत्र देवार्थानि दारुमयाणि पात्राणि यानि सन्ति यानि चान्यद्रव्यसङ्ग्रहार्थानि मृण्मयानि तदुभयं प्रशंसति। "यानि दारुमयाणि पात्राणि भवन्ति। अमुमेव तैर्लोकमभिजयति। यानि मृण्मयानि। इममेव तैर्लोकमभियजति" इति॥

अथ प्रश्नोत्तराभ्यां स्थालीं निरूप्य मृण्मयानां दारुमयाणां ग्रहणहोमयोर्व्यवस्थां विधत्ते। "ब्रह्मवादिनो वदन्ति। कास्वतस्स्थालीर्वायव्याः सोमग्रहणीरिति। देवा वै पृश्निमदुहन् [४]। तस्या एते स्तना आसन्। इयं वै पृश्निः। तामादित्या आदित्यस्थाल्या चतुष्पदः पशूनदुहन्। यदादित्यस्थाली भवति। चतुष्पद एव तया पशून्यजमान इमां दुहे। तामिन्द्र उक्थ्यस्थाल्येन्द्रियमदुहत्। यदुक्थ्यस्थाली भवति। इन्द्रियमेव तया यजमान इमां दुहे। तां विश्वे देवा आग्रयणस्थाल्योर्जमदुहन्। यदाग्रयणस्थाली भवति। ऊर्ज्जमेव तया यजमान इमां दुहे। तां मनुष्या ध्रुवस्थाल्यायुरदुहन्। यद्ध्रुवस्थाली भवति। आयुरेव तया यजमान इमां दुहे। स्थाल्या गृह्णाति। वायव्येन जुहोति। तस्मादन्येन पात्रेण पशून् दुहन्ति। अन्येन प्रतिगृह्णन्ति। अथो व्यावृत्तमेव तद्यजमानो गच्छति" [५] इति। वायुः स्वामिर्येषां दारुमयाणां पात्रविशेषाणां ते वायव्याः। यद्यप्येकैकस्य पात्रस्यैकैको देवस्त-

थापि वायुना वरस्य वृतत्वात् वायव्यसब्देनैव तेषां व्यवहारः। तथा चैन्द्रवायवग्रह-ब्राह्मणे समाम्नायते, ते वायुमब्रुवन् । इमं नः स्वदयेति। सोऽब्रवीद्वरं वृणैम। दैवत्यान्येव वः पात्रा-ण्युच्यान्त इति। तस्मान्नानादेवत्यानि सन्ति वायव्यान्युच्यन्त इति। ते च वायव्याः पात्रविशेषाः सोमग्रहणार्था ऐन्द्रवायवं गृह्णाति मैत्रावरुणं गृह्णातीत्यादिश्रवणात्। तद्वन्मृण्मयस्था-ल्यापि चतस्रः सोमग्रहण्यः इत्येवमत्र प्रसिद्धिः। तास्त्र स्थाल्यः किंविधा इति प्रश्नः। तस्योत्तरमुच्यते। पुरा कदाचिद्भूमिः पृश्निः श्वेतगोरूपाभूत्। भूविकारभूतादित्यस्थाल्युक्थ्यस्था-ल्याग्रयणस्थाली ध्रुवस्थालीत्येते चत्वारः स्थालीविशेषास्तस्या गोः स्तना आसन्। तांश्च स्तनानादित्यादयो दुग्धा पश्वा-दिफलानि प्राप्तवन्तः। एवं यजमानोऽपि तानि प्राप्तुं स्थाली-चतुष्टयं कुर्य्यात्। कृत्वा च मृण्मयस्थाल्या तत्तद्देवतासम्ब-न्धिन्या तत्तद्देवार्थं सोमरसं गृह्णीयात्। तञ्च सोमरसं होम-काले दारुमये वायव्यपात्रेऽवनीय तेन पात्रेण जुहुयात्। यस्मादेवं तस्माल्लोकेऽपि दोहपात्रमन्यत् चीरग्रहणपात्रञ्चा-न्यत्। अपि चैवं कुर्व्वाणो यजमान इतरेभ्यो व्यावृत्तिं प्रा-प्नोति ॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे प्रथमकाण्डे चतुर्थप्रपाठके प्रथमोऽनुवाकः ॥

॥ १ ॥

## अथ द्वितीयोऽनुवाकः ।

प्रथमेऽनुवाके सोमविशेषो ग्रहविधिरुक्तः । द्वितीयानुवाके सौत्रामणीशेषा मन्त्रा उच्यन्ते । तत्राश्विनसारस्वतैन्द्रग्रहेषु त्रिष्वपि साधारणं याज्यानुवाक्यायुगलम् । तथा च सौत्रामणि ब्राह्मणमेवमाम्नातम्, युवꣳ सुराममश्विनेति सर्व्वदेवत्ये याज्यानुवाक्ये भवतः इति । तत्र पुरोऽनुवाक्यामाह, "युवꣳ सुराममश्विना। नमुचा वासुरे सचा । विपिपाना शुभस्पती। इन्द्रं कर्म्मस्वावतम्" इति। हे अश्विनौ नमुचावासुरे नमुचिनामके कस्मिंश्चिदसुरे सचासम्बन्धं सुरया सम्पादितमिमं पात्रस्थं द्रव्यशेषं विपिपाना विशेषेण पिबन्तौ शुभस्पती शोभनस्य कर्म्मणः पालकौ युवां कर्म्मस्वेतेषु इन्द्रमावतं सहपानेन पालयतम् ॥

याज्यामाह । "पुत्रमिव पितरावश्विनोभा । इन्द्रावतं कर्म्मणा दꣳसनाभिः । यत्सुरामं व्यपिबः शचीभिः । सरस्वती त्वा मघवन्नभीष्णात्" इति । हे अश्विनौ युवामुभौ यथा लोके पितरौ पुत्रं पालयतः। तद्वद्यजमानमनेन कर्म्मणा रक्षतम्। दंसनाशब्दः कर्म्मवाची। शचीशब्दः शक्तिवाची। हे इन्द्र यद्यस्मात् कारणात् कर्म्मविशेषेण याभिः शक्तिभिः सह त्वं सुरया सम्पादितमिमं रसविशेषं विशेषेण पीतवान् । तस्माद्यजमानं रक्षेति शेषः । हे मघवन् इयं सरस्वती त्वामभीष्णात् भिषज्यतु पानेन परितोषयत्वित्यर्थः। अथ मन्त्रद्वयेन

सुरायाऽनुमन्त्रणम्। तथा च सूत्रकारः, ऊतां ह्रयमानां वा यजमानोऽनुमन्त्रयत इति॥

तत्र प्रथमं मन्त्रमाह। "अहाव्यग्ने हविरास्ये ते। स्रुचीव घृतञ्चमू इव सोमः [१]। वाजसनिꣳ रयिमस्मे सुवीरम्। प्रशस्तं धेहि यशसं बृहन्तम्" इति। हे अग्ने ते तव आस्ये मुखे अहावि इदं द्रव्यं ऊतम्। यथा स्रुचि जुह्वादौ घृतं निहितम्। यथा वा चमू चमसेषु सोमो निहितः। तद्वत्तस्मादस्मे अस्मासु सुवीरं शोभनकर्म्मशूरं पुत्रं धेहि सम्पादय। कीदृशं, वाजनिं अन्नदातारम्। रयिं धनवन्तम्। प्रशस्तं विद्यादिगुणयुक्तम्। यशसं यशस्विनम्। बृहन्तं महान्तं सर्व्वकार्य्यसमर्थम्॥

अथ द्वितीयमन्त्रमाह। "यस्मिन्नश्वा स ऋषभा स उक्षणः। वशामेषा अवसृष्टास आऊताः। कीलालपे सोमपृष्ठाय वेधसे। हृदा मतिं जनय चारुमग्नये" इति। यस्मिन्नग्नावश्वादय आऊताः अश्वासः। अश्वमेधयागे अश्वा ऊताः। ऐन्द्रमृषभमित्यादिषु विहितेषु कर्म्मसु ऋषभा ऊताः। ऐन्द्रमुक्षाणमित्यादिषूक्षाणो ऊताः। सेचनसमर्था उक्षाणः। पुङ्गवगात्रा ऋषभाः। मैत्रावरुणीं वशामालभेतेत्यादिषु विहितेषु वशा ऊताः। सारस्वतं मेषमित्यादिषु मेषा ऊताः। ते च सर्व्वे अवसृष्टासः यजमानेन समर्पिताः। तादृशायाग्नये हृदा अन्तःकरणेन चारुं मतिं कर्म्मानुष्ठानविषयत्वेन समीचीनां बुद्धिं जनय। अहं सम्पादयामि। कीदृशायाग्नये, कीलालपे, अन्नरसपायिने। सोमयागस्थितानि पृष्ठानि यस्यासौ सोमपृष्ठः तस्मै वेधसे विधात्रे॥

कल्पः। "ब्राह्मणं परिक्रीणीयादुच्छेषणस्य पातारम्। नाना हि वां देवहितꣳ सदो मितम्। मा सꣳसृक्षाथां परमेव्योमन्। सुरा त्वमसि शुष्मिणी सोम एषः। मा माहिꣳसीः स्वां योनिमाविशन् [२]। यदत्र शिष्टꣳ रसिनः सुतस्य। यदिन्द्रो अपिबच्छचीभिः। अहं तदस्य मनसा शिवेन। सोमꣳ राजानमिह भक्षयामि" इति। वा स्वयं पिबेदिति। अत्र सुरोच्छेषस्य ब्राह्मणपातारं किञ्चिन्मूल्यदानेन परिक्रीणीयात्। नाना हि वामितिमन्त्रेण यदत्रेतिमन्त्रेण वा स्वयं पिबेत् इत्यर्थः। हे सोमग्रहसुराग्रहौ वां युवयोः सदो निवासस्थानं नानामितं पृथगेव सम्पादितम्। अतः परमे व्योमन् प्रकृष्ट आकाशे भक्षणस्थाने मा संसृक्षाथां परस्परसंसृष्टौ माभूताम्। हे पात्रस्थद्रव्य त्वं शुष्मिणी बलतो सुरासि। एष खलु सोमः सुप्रसिद्धविभवः त्वं स्वां योनिं स्वकीयस्थानमुदररूपं आविशन् मामिह माहिंसीः। अत्र पात्रे रसिनो रसवतः सुतस्याभिषुतस्य यच्छिष्टमस्ति, यच्चेन्द्रः शचीभिः स्वशक्तिभिः सहापिबत्। तत्रास्य पात्रस्थद्रव्यस्यैकदेशं सोमं राजानमहं शिवेन भक्तियुक्तेन मनसा इह कर्मणि भक्षयामि॥

कल्पः। "द्वे सृती अशृणवं पितॄणाम्। अहं देवानामुत मर्त्यानाम्। ताभ्यामिदं विश्वं भुवनꣳ समेति। अन्तरा पूर्वमपरञ्च केतुम्" इति। वा वल्मीकवपायामवनयेदिति। पितॄणामस्मत्पूर्वपुरुषाणां द्वे सृती अशृणवं द्वौ मार्गाविति शास्त्रमुखेनाहं श्रुतवानस्मि। तयोर्मध्ये देवानामेको मार्गः।

येन गत्वा ब्रह्मलोके देवा भूत्वा न पुनरावर्त्तन्ते। उत अपि च मर्त्या येन गत्वा स्वर्गमनुभूय पुनरावर्त्तन्ते। ताभ्यामुभाभ्यां मार्गाभ्यां इदं विश्वं भुवनं शास्त्रार्थानुष्ठानपरं सर्व्वप्राणिजातं समेति सम्यग्गच्छति। पूर्व्वं केतुं चिह्नं पृथिवीमपरं केतुं दिवं चान्तरा द्यावापृथिव्योर्मध्ये द्वे सृती वर्त्तेते इत्यर्थः॥

कल्पः। "यस्ते देव वरुण गायत्रच्छन्दाः पाशः। तन्त एतेनावयजे [१]। स्वाहेत्याश्विनपात्रमवभृथे प्रविध्यन्ति" इति। हे वरुणदेवते त्वदीयः पाशो गायत्र्या गायत्र्याख्येन छन्दसा युक्तो यो विद्यते तं पाशमेतेन पात्रेण विनाशयामि॥

कल्पः। "एतेनैव त्रिष्टुप् छन्दा इति सारस्वतस्य जगतीच्छन्दा इत्यैन्द्रस्य" इति। एतेन यस्तेदेवेति मन्त्रेण त्रिष्टुपछन्दाइतिविशेषयुक्तेन सारस्वतस्य पात्रं प्रविध्यन्ति। एवमुत्तरत्रापि। पाठस्तु। यस्ते देव वरुण त्रिष्टुपछन्दाः पाशः। तन्त एतेनावयजे। यस्ते देव वरुण जगतीच्छन्दाः पाशः। तन्त एतेनावयजे इति। समाप्ताः सौत्रामणिशेषा मन्त्राः॥

अथ सोमविशेषः कश्चिद्विधिः। यदुक्तं सूत्रकारेण, राज्ञो राजन्यस्यानूबन्ध्यायाः पशुपुरोडाशमष्टौ देवसुवां हवींष्यनुनिर्व्वपतीति। तदिदं विधत्ते। "सोमो वा एतस्य राज्यमादत्ते। यो राजा सन् राज्यो वा सोमेन यजते। देवसुवामेतानि हवीꣳषि भवन्ति। एतावन्तो वै देवानाꣳ सवाः। त एवास्मै सवान् प्रयच्छन्ति। त एनं पुनः सुवन्ते राज्याय। देवसू राजा भवति" इति। यः पूर्व्वं राजा राजत्वयोग्यो वा

भूत्वा सोमेन यजते एतस्य राज्यं सोमदेव एव गृह्णाति। अतस्तन्निवारणाय हविर्निर्वापः। सुवन्ते प्रेरयन्ति राज्यार्थमिति सुवः देवाश्च ते सुवश्च देवसुवोऽग्न्यादयः, तत्सम्बन्धीनि हवींषि अग्नये गृहपतये पुरोडाशमष्टाकपालमित्यनुवाकोक्तानि यावन्त ऐश्वर्य्यविशेषाः तस्मिन्ननुवाके श्रूयन्ते, अग्निरेवैनं गृहपतीनाꣳ सुवते सोमो वनस्पतीनामित्यादिना एतावन्त एव गृहपतित्वादयोऽपेक्षिता देवानां सम्बन्धिनः ऐश्वर्य्यविशेषाः। ततस्तैर्हविर्भिस्तुष्टास्त एवाग्न्यादयो देवा असौ यजमानाय तान् गृहपतित्वाद्यैश्वर्य्यविशेषान् प्रयच्छन्तीति देवा एनं यजमानं पुनरपि राज्याय प्रेरयन्ति। असावपि देवैः प्रेरितो राजा भवति। अत्र विनियोगसङ्ग्रहः।

युवंसुरामंयाज्यानुवाक्ये सौत्रामणौ गते।
अद्य यस्मिन्निनि द्वाभ्यां तत्र होमानुमन्त्रणम्॥
नानेति वा यदत्रेति वा मन्त्राङ्गत्रयेद्बुधिः।
द्वे स्तुतीति च वल्मीकवपायां वाचिपेद्धि तत्॥
यस्ते देवाश्विनादीनि बिध्यन्त्यवभृते त्रिभिः।
अनुवाके द्वितीयेऽस्मिन् दशमन्त्रा उदाहृताः॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे प्रथमकाण्डे चतुर्थप्रपाठके द्वितीयोऽनुवाकः॥ २॥

अथ तृतीयोऽनुवाकः ।

द्वितीये सौत्रामणिमन्त्रा उक्ताः । तृतीयचतुर्थयोरग्निहोत्रविषयं प्रायश्चित्तमुच्यते । तत्राप्यस्मिन्ननुवाके दोहविषयं प्रायश्चित्तम् । तत्र कञ्चिन्मन्त्रं पठति । "उदस्थाद्देव्यदितिर्विश्वरूपी । आयुर्यज्ञपतावधात् । इन्द्राय कृण्वती भागम् । मित्राय वरुणाय च" इति । येयमग्निहोत्रहविर्दोहनार्था धेनुः सेयं देवी देवतारूपा उदस्थादुत्तिष्ठतु । कीदृशी देवी अदितिर्भूमिरूपा विश्वरूपी कृष्णशुक्लादिनानारूपयुक्ता सेयं यज्ञपतावायुः सम्पादयतु । किं कुर्व्वन्ती इन्द्रमित्रावरुणेभ्यो हविर्भागं सम्पादयन्ती ॥

तमेतं मन्त्रं विनियुङ्क्ते । "इयं वा अग्निहोत्री । इयं वा एतस्य निषीदति । यस्याग्निहोत्री निषीदति । तामुत्थापयेत् । उदस्थाद्देव्यदितिरिति । इयं वै देव्यदितिः [१] । इमामेवास्मा उत्थापयति" इति । यस्याग्निहोत्रहविर्दोहनाय प्रवृत्तस्याग्निहोत्री धेनुरुपविशति । एतस्य पुरुषस्याग्निहोत्री भूमिरूपेति कृत्वा भूमिदेवतैव दोहं प्रतिबध्नन्ती निषीदति । तस्मादुदस्थादितिमन्त्रेण तामुत्थापयेत् । मन्त्रगतस्यादितिशब्दस्य भूमिवाचित्वात् भूमिमेवोत्थापयति ॥

मन्त्रस्य द्वितीयपादतात्पर्य्यं दर्शयति । "आयुर्यज्ञपतावधादित्याह । आयुरेवास्मिन्दधाति" इति ॥

उत्तरार्द्धस्य यथार्थतां दर्शयति । "इन्द्राय कृण्वती भाग मित्राय वरुणाय चेत्याह । यथा यजुरेवैतत्" इति ॥

प्रायश्चित्तान्तरं विधत्ते। "अवर्त्तिं वा एवैतस्य पाप्मानं प्रतिख्याय निषीदति। यस्याग्निहोत्र्युपसृष्टा निषीदति। तां दुग्ध्वा ब्राह्मणाय दद्यात्। यस्यान्नं नाद्यात्। अवर्त्तिमेवास्मिन् पाप्मानं प्रमुञ्चति" [२] इति। वर्त्तिर्वर्त्तमानं जीवनोपायः। अवर्त्तिर्दारिद्र्यम्। यस्मानुष्ठातुर्दोहनार्थं वत्सेन संसृष्टा धेनुरूपविशति। एतस्यावर्त्तिं दारिद्र्यहेतुं पाप्मानमेषा धेनुः प्रतिख्याय सर्वत्र प्रख्याप्योपविशति। अतस्तां धेनुं दुग्ध्वा पश्चाद्ब्राह्मणाय दद्यात्। कीदृशाय, यस्य ब्राह्मणस्यान्नमित ऊर्द्ध्वं यजमानो नाद्यात् तादृशाय। तेन दानेन स्वकीयं दारिद्र्यहेतुं पाप्मानं अस्मिन् ब्राह्मणे कवचादिवत् प्रतिमुञ्चति॥

दोहनपूर्व्वकं दानं प्रशंसति। "दुग्ध्वा ददाति। नह्यदृष्टा दक्षिणा दीयते" इति। यस्मात् प्रतिग्रहीत्रा पुरुषेणादृष्टा दक्षिणा दानयोग्या न भवति। तस्माद्दुग्ध्वा क्षीरं तस्मै प्रदर्श्य त्वमेवं दुग्ध्वा भुङ्क्ष्वेति एवं दद्यात्॥

अथ प्रायश्चित्तान्तरं विधातुं स्तौति। "पृथिवीं वा एतस्य पयः प्रविशति। यस्याग्निहोत्रं दुह्यमानꣳ स्कन्दति" इति। यस्य यजमानस्याग्निहोत्रार्थं हविर्दोहनकाले स्वल्पमपि पतति। एतस्य कृत्स्नमपि पृथ्वीमेव प्रविशति॥

तत्प्रायश्चित्तरूपं मन्त्रपाठं विधत्ते। "यदद्य दुग्धं पृथिवीमसक्त। यदोषधीरप्यसरद्यदापः। पयो गृहेषु पयो अघ्नियासु। पयो वत्सेषु पयो अस्तु तन्मयीत्याह। पय एवात्मन् गृहेषु पशुषु धत्ते" इति। अद्यास्मिन् दिने यत् दुग्धं पृथि-

वीभत्सञ्च पृथिव्यां पतितं यच्च विन्दुरूपेणौषधीरपो वा प्राविशत्। तत्पयो मदीयेषु गृहेष्ववस्थितमस्तु। तथा तत्पयो मदीयासु गोषु स्थितमस्तु। तथा तत्पयो मदीयवत्सेषु स्थितमस्तु। तथा तत्पयो मयि स्थितमस्तु। तमेतं मन्त्रं पठेत्। तेन स्कन्नं पयः अस्मान् गृहेषु पशुषु च स्थापितं भवति॥

एतदभिमन्त्रणानन्तरमुदकस्पर्शं विधत्ते। "अप उपस्पृजति [१]। अद्भिरेवैनदाप्नोति" इति। स्वेनोपस्पृष्टाभिरद्भिरेव स्कन्नमेतत् पयः पुनः प्राप्नोति॥

प्रायश्चित्तान्तरं विधत्ते। "यो वै यज्ञस्यार्त्तेनानार्त्तꣳसꣳसृजति। उभे वै ते तर्ह्यार्च्छतः। आर्च्छति खलु वा एतदग्निहोत्रम्। यद्दुह्यमानं स्कन्दति। यदभिदुह्यात्। आर्त्तेनानार्त्तं यज्ञस्य सꣳसृजेत्। तदेव यादृक्कीदृक् च होतव्यम्। अथान्यां दुग्ध्वा पुनर्होतव्यम्। अनार्त्तेनैवार्त्तं यज्ञस्य निष्करोति" [४] इति। यज्ञस्य सम्बन्धि हविर्द्विविधम्, आर्त्तमनार्त्तञ्चेति, दुह्यमानस्य स्कन्दने सति तदार्त्तं भवति। इतःपरं धोक्ष्यमाणमनार्त्तं भवति। तथा सति स्कन्दनादूर्द्ध्वं तदेव पात्रस्थमभिलक्ष्य यदि पुनर्दुह्यात् तदानीमार्त्तस्योपर्य्यनार्त्तस्य स्थापनात् उभयमपि पयः संसृजेत्। तत् संसर्गे च द्वितीयमप्यार्त्तमेव भवेत्। तस्मादार्त्तस्योपरि दोहनं न कुर्य्यात्। किन्तु तदेवार्त्तं यादृशं तादृशं पर्य्याप्तमपर्य्याप्तं वा होतव्यम्। तावता नित्यानुष्ठानसिद्धिः॥

अथार्त्तपरिहारार्थमन्यां दुग्ध्वा पुनर्होतव्यं तेन पुन-

होमेनैव यज्ञस्य यत् पूर्वमार्त्तं तत् समादधाति, प्रायश्चित्ता-न्तरं विधत्ते। "यद्युद्रुतस्य स्कन्देत्। यत्ततो हुत्वा पुनरे-यात्। यज्ञं विच्छिन्द्यात्। यत्र स्कन्देत्। तन्निषद्य पुनर्गृह्णी-यात्। यत्रैव स्कन्दति। तत एवैनत् पुनर्गृह्णाति। तदेव या-दृक्कीदृक् च होतव्यम्। अथान्यां दुग्ध्वा पुनर्होतव्यम्। अना-र्त्तेनैवार्त्तिं यज्ञस्य निष्करोति [५] इति। दोहनादूर्ध्वमुद्रु-तस्य आहवनीयं प्रत्युन्नीतस्य लेशो यदि भूमौ पतेत्। तदा-नीमहुत्वा यदि ततो देशात् पुनरागच्छेत्। तदानीं यज्ञो विच्छिद्येत। अतस्तत्परिहाराय यस्मिन् देशे स्कन्नं तस्मिन्नेव देशे स्वयमुपविश्य तत्पतितं पुनः पात्रे गृह्णीयात्। तथा सति यस्मिन्नेव देशे स्कन्नं तस्मिन् देशे पुनर्गृहीतत्वात् तेन दुग्धान्तरं न भवेत्। तदेव पुनर्गृहीतेन सहितं पात्रस्थं नित्यार्थं हुत्वा प्रायश्चित्तार्थमन्यां दुग्ध्वा जुहुयात्॥

पुनरपि प्रायश्चित्तान्तरं विधत्ते। "वि वा एतस्य यज्ञ-श्छिद्यते। यस्याग्निहोत्रेऽधिश्रिते श्वाऽन्तरा धावति। रुद्रः खलु वा एषः। यदग्निः। यद्गामन्वत्यावर्त्तयेत्। रुद्राय पशूनपि दध्यात्। अपशुर्यजमानः स्यात्। यदपोऽन्वतिषिञ्चेत्। अना-द्यमग्नेरापः। अनाद्यमाभ्यामपि दध्यात्। गार्हपत्याद्भस्मा-दाय। इदं विष्णुर्विचक्रम इति वैष्णव्यर्चाहवनीया ध्वꣳसय-न्नुद्रवेत्। यज्ञो वै विष्णुः। यज्ञेनैव यज्ञꣳ सन्तनोति। भ-स्मना पदमपि वपति शान्त्यै" [६] इति। यस्य यजमानस्या-ग्निहोत्रहविषि पाकार्थं गार्हपत्येऽधिश्रिते सति आहवनीय

गार्हपत्ययोर्मध्ये यदि श्वा धावेत्। तदानीमेतस्य यज्ञो विच्छिद्येत्। अतस्तत्परिहाराय तेन शुनोमार्गेण गामतिनीय पुनरावर्त्तयेत्। तदानीमाग्नेः क्रूरत्वेन रुद्रपशुरूपत्वात् तस्मै रुद्राय पशून् समर्पयेत्। ततो यजमानः पशुरहितः स्यात्। यदि तु शुनः पदे जलमनुक्रमेणातिशयेन निषिञ्चेत्। तदानीमग्नेरनाद्यभूता आपः सम्पन्नाः। तादृशमनाद्यं वस्तु द्वाभ्यामग्निभ्यां समर्पयेत्। ततो गोर्नयनमुदकस्य निषेचनञ्च न कुर्य्यात्। किन्तु गार्हपत्यात् किञ्चिद्भस्मादाय इदं विष्णुरितिमन्त्रेण आहवनीयपर्य्यन्तं भस्म प्रसारयन् तस्योपरि स्वयं गच्छेत्। ततो यज्ञस्य विष्णुत्वात् विष्णुरूपेणैव यज्ञेन वर्त्तमानं यज्ञं सन्ततं करोति। तेन भस्मना शुनः पदमाच्छादयेत्। तच्च दोषस्य शान्त्यै भवति। अत्र विनियोगसङ्ग्रहः।

उदस्थादित्यग्निहोत्रीमुत्थापयति दोहने।
यदद्यदुग्धमित्येतत् स्कन्नं चीराभिमन्त्रणे॥
इदं विष्णुस्त्वान्तराये ध्वंसयेद्भस्मवह्निगम्।
अनुवाके तृतीयेऽस्मिन् मन्त्रास्त्रय उदीरिताः॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे प्रथमकाण्डे चतुर्थप्रपाठके तृतीयोऽनुवाकः॥ ॥ ३॥

## अथ चतुर्थोऽनुवाकः।

तृतीये दोहविषयं प्रायश्चित्तमुक्तम्। चतुर्थे वह्निविषयं प्रायश्चित्तमुच्यते। तत्रैकं प्रायश्चित्तं विधत्ते। "नि वा एत-

स्याहवनीयो गार्हपत्यं कामयते। नि गार्हपत्य आहवनीयम्। यस्याग्निमनुद्धृतꣳ सूर्योऽभिनिम्रोचति। दर्भेण हिरण्यं प्रबध्य पुरस्ताद्धरेत्। अथाग्निम्। अथाग्निहोत्रम्। यद्धिरण्यं पुरस्ताद्धरति। ज्योतिर्वै हिरण्यम्। ज्योतिरेवैनं पश्यन्नुद्धरति। यदग्निं पूर्वꣳ हरत्यथाग्निहोत्रम् [१]। भागधेयेनैवैनं प्रणयति" इति। यस्य पुरुषस्यानुद्धृतमग्निमुपलक्ष्य सूर्योऽस्तमेति। सायङ्कालीनाग्निहोत्रार्थादाहवनीयं प्रत्यग्निप्रणयनात् प्रागेव यद्यस्तमियात् तदानीमेतस्य पुरुषस्य आहवनीयो गार्हपत्यं न्यक्कर्त्तुं कामयते। गार्हपत्यश्चैनं न्यक्कामयते। ततोऽग्निद्वयमपि फलप्रदं न भवति। ततोऽस्तमयादूर्द्ध्वमग्निं प्रणयन् पुरुषः केनचिद्दर्भेण हिरण्यं प्रकर्षेण बध्वा तत्पुरस्तान्नयेत्। तस्य पृष्ठतोऽग्निं नयेत्। तस्यापि पृष्ठतोऽग्निहोत्रहविर्नयेत्। तत्र हिरण्यनयनेन ज्योतीरूपं हिरण्यं पुरतः पश्यन् पृष्ठतोऽग्नेरुद्धारात् अस्तमयदोषं न प्राप्नोति। पुरतोऽग्निं पश्चाद्धविर्नयनं तदीयेन भागधेयेन युक्तमेवाग्निं प्रणयति ॥

अस्मिन्नुद्धरणे कञ्चिद्विशेषं विधत्ते। "ब्राह्मण आर्षेय उद्धरेत्। ब्राह्मणो वै सर्व्वा देवताः। सर्व्वाभिरेवैनं देवताभिरुद्धरति" इति। स्वकीयानृषीन् यो वेत्ति, स आर्षेयः प्रवराभिज्ञ इत्यर्थः। तादृशो ब्राह्मणो दर्भेण प्रबद्धस्य हिरण्यस्य पृष्ठतो वह्निमुद्धरेत्। अतएव सूत्रकारेणोक्तम्, अन्वङ्कार्षेयो ब्राह्मणो बहुविदग्निमुद्धरेदिति। यावतीर्वै देवतास्ताः

सर्व्वा वेदविदि ब्राह्मणे वसन्ति इति श्रुत्यन्तरात् सर्व्वदेवता-कर्त्तृकमिदमुद्धरणं भवति॥

अत्रैवापरं विशेषं विधत्ते। "अग्निहोत्रमुपसाद्यातमितो-रासीत। व्रतमेव हृतमनुम्रियते" इति। आर्षेयस्य ब्राह्मणस्य पृष्ठतोऽग्निहोत्रहविर्नीत्वा तदधस्तादुपसाद्य श्वासं निरुध्य ग्लानिपर्य्यन्तमवतिष्ठेत। एवं सति सूर्य्यास्तमयेन विनाशितं व्रतमनु स्वयमपि मरणोपचारं नटयति। लोकेऽपि हि म्रिय-माणं स्निग्धमनुम्रियन्ते॥

पुनरपि विशेषान्तरं विधत्ते। "अन्तं वा एष आत्मनो गच्छति। यस्ताम्यति। अन्तमेष यज्ञस्य गच्छति। यस्याग्निम-नुद्धृतꣳ सूर्य्योऽभिनिम्रोचति [२]। पुनः समन्य जुहोति। अन्तेनैवान्तं यज्ञस्य निष्करोति" इति। यो ग्लानिं प्राप्नोति, एष विनाशमेव प्राप्नोति। यस्य चाग्न्युद्धरणात् पुरा सूर्य्यो-ऽस्तमेति। एष यज्ञस्य विनाशं प्राप्नोति। अतो दोषद्वयनिवृ-त्त्यर्थं पुनः श्वासं कृत्वा जुहुयात्। तथा सति स्वकीयेन विना-शेन सह यज्ञस्य विनाशं समादधाति॥

पुनरप्यपरं विशेषं विधत्ते। "वरुणो वा एतस्य यज्ञं गृ-ह्णाति। यस्याग्निमनुद्धृतꣳ सूर्य्योऽभिनिम्रोचति। वारुणं चरुं निर्वपेत्। तेनैव यज्ञं निष्क्रीणीते" इति। वरुणेनापहृतो यज्ञ-स्वरूणा मूल्येन पुनः क्रीतो भवति। हिरण्यबन्धनमारभ्य चरु-पर्य्यन्तमेकमिदं प्रायश्चित्तम्॥

अस्तमयनिमित्तं प्रायश्चित्तमभिधायोदयनिमित्तं प्राय-

श्चित्तं विधत्ते। "नि वा एतस्मादाहवनीयो गार्हपत्यं कामयते। निगार्हपत्य आहवनीयम्। यस्याग्निमनुद्धृतꣳ सूर्य्योऽभ्युदेति। चतुर्गृहीतमाज्यं पुरस्ताद्धरेत् [३]। अथाग्निम्। अथाग्निहोत्रम्। यदाज्यं पुरस्ताद्धरति। एतद्वा अग्नेः प्रियं धाम। यदाज्यम्। प्रियेणैवैनं धाम्ना समर्द्धयति। यदग्निं पूर्व्वꣳ हरत्यथाग्निहोत्रम्। भागधेयेनैवैनं प्रणयति। ब्राह्मण आर्षेय उद्धरेत्। ब्राह्मणो वै सर्व्वा देवताः [४]। सर्व्वाभिरेवैनं देवताभिरुद्धरति" इति। पूर्व्ववद्व्याख्येयम्॥

अत्र पूर्व्वस्मादधिकं कञ्चिद्विशेषं विधत्ते। "पराची वा एतस्मै व्युच्छन्ती व्युच्छति। यस्याग्निमनुद्धृतꣳ सूर्य्योऽभ्युदेति। उषाः केतुना जुषताम्। यज्ञं देवेभिरन्वितम्। देवेभ्यो मधुमत्तमꣳ स्वाहेति प्रत्यङ्ङुपविश्याज्येन जुहुयात्। प्रतीचीमेवास्मै विवासयति" इति। यस्य पुरुषस्याग्न्युद्धरणात् प्राक् सूर्य्योदयो भवेत्। एतस्मै पुरुषाय उषःकालदेवता व्युच्छन्ती प्रभातं कुर्व्वती। पराची वै पुनरावृत्तिरहितैव व्युच्छति प्रभातं करोति। एकस्मिन् दिने प्रभातं कृत्वा विनश्यति दिनान्तरेषु प्रभातं कर्त्तुं न तिष्ठतीत्यर्थः। एतद्दोषपरिहाराय प्रत्यङ्मुख उपविश्य उषाइत्यादिमन्त्रमुच्चार्य्याज्येन जुहुयात्। ततोऽस्मै यजमानार्थं प्रतीचीं पुनरावृत्तियुक्तां स्वाहुतिं कृत्वा विवासयति। दैनन्दिनं प्रभातं सम्भावयति। मन्त्रस्यायमर्थः, इयमुषःकालदेवता केतुना दिवसचिह्नभूतेनादित्येन सह देवेभिरन्वितम्। अन्यैर्देवैः प्रीतिपूर्व्वकं मिश्रीकृतमिमं यज्ञं

जुषताम्। देवेभ्योऽत्यन्तमाधुर्य्यापेतमाज्यं स्वादुतममस्त्विति ॥

होमानन्तरकर्त्तव्यं विधत्ते। "अग्निहोत्रमुपसाद्यातमितोरासीत। व्रतमेव हृतमनुम्रियते। अन्तं वा एष आत्मनो गच्छति [५]। यस्माम्यति। अन्तमेष यज्ञस्य गच्छति। यस्याग्निमनुद्धृतꣳ सूर्य्योऽभ्युदेति। पुनः समन्य जुहोति। अन्तेनैवान्तं यज्ञस्य निष्करोति। मित्रो वा एतस्य यज्ञं गृह्णाति। यस्याग्निमनुद्धृतꣳ सूर्य्योऽभ्युदेति। मैत्रं चरुं निर्वपेत्। तेनैव यज्ञं निष्क्रीणीते" इति। पूर्व्ववत् सर्व्वं व्याख्येयम्। आज्योद्धरणमारभ्य मैत्रचरुपर्य्यन्तमेकं प्रायश्चित्तम् ॥

अथाग्न्युद्दातनिमित्तं प्रायश्चित्तं विधत्ते। "यस्याहवनीयेऽनुद्दाते गार्हपत्य उद्दायेत् [६]। यदाहवनीयमनुद्दाप्य गार्हपत्यं मन्थेत्। विच्छिन्द्यात्। भ्रातृव्यमस्मै जनयेत्। यद्वै यज्ञस्य वास्तव्यं क्रियते। तदनु रुद्रोऽवचरति। यत् पूर्व्वमन्ववस्येत्। वास्तव्यमग्निमुपासीत। रुद्रोऽस्य पशून् घातुकः स्यात्। आहवनीयमुद्दाप्य। गार्हपत्यं मन्थेत्" [७] इति। यस्य पुरुषस्याहवनीयाग्नौ विद्यमाने सति गार्हपत्याग्निर्नश्येत्। तदानीमयं पुरुषस्तं विद्यमानमाहवनीयमविनाश्य यदि गार्हपत्यार्थं मन्थनं कुर्य्यात्। तदानीमाहवनीयजनकस्य गार्हपत्यस्याभावाद्यज्ञो विच्छिद्येत्। पूर्व्वो ह्याहवनीयजनको गार्हपत्यो विनष्टः। इत ऊर्द्ध्वं मन्थनीयस्तु नैतस्याहवनीयस्य जनकः। किञ्च तन्मन्थनेन यजमानस्य भ्रातृव्यमुत्पादयेत्। मन्थनीयस्य पूर्व्वाहवनीयविरोधित्वात्। एवं तर्हि शास्त्रीयौ गार्हपत्याहव-

नीयौ माभूताम्। लौकिकमेवाग्निहोत्रं क्रियतामिति चेत्। तदप्यनुपपन्नम्। यज्ञस्य सम्बन्धि यदङ्गं वास्तव्यं लौकिकं क्रियते। वास्तव्ये लोकव्यवहारे भवं वास्तव्यम्। तल्लौकिकमङ्गमनु रुद्रः क्रूरो देवो यज्ञशालायां प्रविशति। एवं सति यदि पूर्व्वं विद्यमानमाहवनीयमनु कर्म्म समापयेत्। तदानीं लौकिकमेवाग्निमुपासीतवान् भवति। ततो रुद्रोऽस्य पशून् विनाशयेत्। तस्मात् पूर्व्वसिद्धमाहवनीयं विनाश्य पश्चाद्गार्हपत्यार्थमग्निं मन्थेत्॥

तत्र मन्थनमन्त्रं विधत्ते। "इतः प्रथमं जज्ञे अग्निः। स्वाद्योनेरधि जातवेदाः। स गायत्रिया त्रिष्टुभा जगत्याम्। देवेभ्यो हव्यं वहतु प्रजानन्निति। छन्दोभिरेवैनꣳ स्वाद्योनेः प्रजनयति" इति। जातवेदा उत्पन्नसर्व्वजगदभिज्ञोऽग्निः स्वाद्योनेः स्वकीयात् कारणादित अरणेः प्रथममुत्पन्नः। स च गायत्र्यादिच्छन्दस्त्रयेण सहकारिणा देवान् हविश्च प्रकर्षेण जानन् अस्मदीयं हव्यं देवेभ्यो वहतु इत्यनेन मन्त्रेण मन्थनं कुर्य्यात्। तथा सति गायत्र्यादिछन्दोभिरेवानुगृहीतः स्वकीयात् कारणादुत्पादितो भवति॥

अथोक्तं मन्थनविधिमनूद्यानुमन्त्रणं विधत्ते। "गार्हपत्यं मन्थति। गार्हपत्यं वा अन्वाहिताग्नेः पशव उपतिष्ठन्ते। स यदुद्वायति। तदनु पशवोऽपक्रामन्ति। इषे रय्यै रमस्व [८]। सहसे द्युम्नाय। ऊर्ज्जे पत्यायेत्याह। पशवो वै रयिः। पशुरेवास्मै रमयति" इति। मन्थनेन निष्पन्नो योगार्हपत्यवदनु-

पशवोऽस्य सम्पद्यन्ते। तदुद्वासने तु पशवो नश्यन्ति। अतस्तदु-द्वासनं वारयितुं इष इत्यादिमन्त्रेणाभिमन्त्रयेत्। मन्त्रस्य चायमर्थः। हे अग्ने इषे अन्नार्थं रय्यै धनार्थं सहसे बलार्थं द्युम्नाय यशोऽर्थम् ऊर्जे क्षीरादिरसार्थं पत्याच स्वामित्वार्थं च रमस्व त्वमत्र क्रीडां कुरु। अस्मिन्मन्त्रे धनवाचिना रयि-शब्देन पशूनामप्यभिमतत्वात् पशूनस्मै सम्पादयति ॥

अथ मन्त्रेण समिन्धनविधिमभिप्रेत्य तस्य भागमनूद्य व्याचष्टे। "सारस्वतौ त्वोत्सौ समिन्धातामित्याह। ऋक्सामे वै सारस्वतावुत्सौ। ऋक्सामाभ्यामेवैनꣳ समिन्धे" इति। हे अग्ने उत्सावत्युत्सकौ सारस्वतौ सरस्वतिसम्बन्धिनौ ऋग्वेदसामवेदौ त्वां समिन्धातां सम्यग् दीपयताम् ॥

भागान्तरमुदाहृत्य व्याचष्टे।"सम्राडसि विराडसीत्याह। रथन्तरं वै सम्राट्। बृहद्विराट् [८]। ताभ्यामेवैनꣳ समि-न्धे" इति। सम्यग्राजत इति सम्राट्। विविधं राजत इति विराट्। हे अग्ने सामद्वयरूपस्त्वमसि ॥

अथ निमित्तान्तरकृतं प्रायश्चित्तं विधत्ते। "वज्रो वै चक्रम्। वज्रो वा एतस्य यज्ञं विच्छिनत्ति। यस्यानो वा रथो वान्तराग्नी याति। आहवनीयमुद्वाप्य। गार्हपत्यादुद्ध-रेत्। यदग्ने पूर्वं प्रभृतं पदꣳ हि ते" इति। गार्हपत्ययोर्मध्ये रथस्य शकटस्य वाऽऽगमने सति वज्रेण यज्ञो विच्छिद्येत। अतस्तत्परिहारार्थमाहवनीयं विनाश्य यदग्नय इत्यादिमन्त्रेण। "सूर्यस्य रश्मीनन्वाततान। तत्र रयिष्ठामनुसम्भरैतम्। सन्नः

सृज सुमत्या वा जवत्येति। पूर्व्वेणैवास्य यज्ञेन यज्ञमनुसन्त-नोति" इति। शकटस्य रथस्य वा चक्रं तस्मादिवद्धुतया वज्रमसानम्। रथस्तृतीयमिति वज्रांशत्वश्रुतेस्य। तथामत्या-हवनीचगार्हपत्यात् पुनरुद्धरेत्, मन्त्रस्य चायमर्थः। हे अग्ने ते नव प्रभृतं प्रकर्षेण पुष्टं यत्पदं स्वरूपं सूर्य्यस्य रश्मी-ननुक्रमणेन सर्व्वतः प्रसारयामास। तच पद्रयिष्ठां धनसमृ-द्धामवस्थितमेतमाहवनीयमनुक्रमेण ससार सम्यक् पोषय। नोऽस्मान् वाजवत्या अन्नेनोपेतया, सुमत्या शोभनबुद्ध्या सꣳसृजय। अनेन मन्त्रेणाहवनीयोद्धरणे सति पूर्व्वसिद्धे-नैव यज्ञेनास्य यजमानस्य करिष्यमाणं यज्ञमनुक्रमेण सन्ततं करोति॥

अस्मिन्नेवोद्धरणे मन्त्रान्तरं विधत्ते। "त्वमग्ने सप्रथा असीत्याह। अग्निः सर्व्वा देवताः। देवताभिरेव यज्ञꣳ सन्त-नोति" इति। हे अग्ने त्वं सप्रथाः कीर्त्तियुक्तोऽसि। अस्य मन्त्रस्योत्तरभागमुपहोमकाण्डे समाम्नास्यते, अस्मिन्पादे प्रशस्य-मानोऽग्निः सर्व्वदेवतात्मकः। ते देवा बिभ्यतोऽग्निं प्राविशन्। तस्मादाहुरग्निः सर्व्वदेवता इति अन्यत्राम्नानात्। अतो देव-ताभिरेव सहायभूताभिर्यज्ञं सन्ततं करोति॥

अत्रैव कर्त्तव्यशेषं विधत्ते। "अग्नये पथिकृते पुरोडाशम-ष्टाकपालं निर्वपेत्। अग्निमेव पथिकृतꣳ स्वेन भागधेयेनोप-धावति। स एवैनं यज्ञियं पन्थानमपि नयति। अनड्वान् दक्षिणा। वहीह्येष समृद्ध्यै" [१०] इति। पन्थानं करोतीति

पथिकृत्। तादृशोऽग्निर्निरुप्तेन स्वकीयेन भागधेयेन सेवित एनं यजमानं यज्ञयोग्यं पन्थानं प्रापयति। तत्र चानड्वान् दक्षिणा देया। स च भारवाहित्वात् समृद्धो समाद्यो॥

अत्र विनियोगसङ्ग्रहः।

उषामन्त्रेण होमः स्यात् पुरा सूर्य्योदये सति।
इतः प्रथेतिमन्त्रेण पश्चिमानलमन्थनम्॥
इषे रय्यै तं मथितं मन्त्रयेतानलं तदा।
सारस्वतौ लेति मन्त्रादेतमग्निं समिन्धयेत्॥
यदग्न इत्यन्तराये रथेनाग्निं समुद्धरेत्।
त्वमग्न इत्यपि तथा षण्मन्त्रा इति कीर्त्तिताः॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे प्रथमकाण्डे चतुर्थप्रपाठके चतुर्थोऽनुवाकः॥ ४॥

## अथ पञ्चमोऽनुवाकः।

चतुर्थे अग्निविषयं प्रायश्चित्तमुक्तम्। पञ्चमे सोमविषयं प्रायश्चित्तमुच्यते। तत्र प्रातःसवनविषयं प्रायश्चित्तं विधत्ते। "यस्य प्रातःसवने सोमोऽतिरिच्यते। माध्यन्दिनꣳ सवनं कामयमानोऽयतिरिच्यते। गौर्धयति मरुतामिति धयद्वतीषु कुर्व्वन्ति। हिनस्ति वै सन्ध्यधीतम्। सन्धीव खलु वा एतत्। यत्सवनस्यातिरिच्यते। यद्धयद्वतीषु कुर्व्वन्ति। सन्धेः शान्त्यै" इति। यस्य यजमानस्य प्रातःसवनेऽनुष्ठिते सति तत्राभिषुतः

सोमः कियानप्यवशिष्यते तस्मात् सोमो माध्यन्दिनसवनेऽपि स्वस्योपयोगमपेक्ष्यातिरिक्तो भवति। तस्यातिरेकदोषस्य परिहाराय पञ्चदशस्तोमोपेतासृचु गौर्धयति मरुतामित्यादिषु स्तोत्रं कुर्वन्ति। यद्वेदवाक्यमहोरात्रयोः सन्धावधीतं तदध्येतारं हिनस्ति। तथा चाध्ययननिषेधेषु प्रस्तुतेष्वापस्तम्बः स्मरति, तावन्तं कालं नाधीयीताध्यापयेद्वा सन्ध्योस्तथेति। प्रातःसवनस्य सोमातिरेको यत्तदेतत्सन्धीव। यथा सन्ध्याकालोऽहोरात्रोभयस्पर्शी एवमतिरिक्तसोमोऽपि प्रातःसवने सम्पादितत्वान्माध्यन्दिनसवनकामित्वाच्चोभयस्य स्पर्शी। ततः सन्ध्याकालाध्ययनसमानो दोषः प्राप्नुयात्। तत्र पञ्चदशेषु स्तोत्रे क्रियमाणे सति अतिरिक्तस्य सोमस्यापि प्रातःसवनान्तःपातित्वात् सन्धित्वं शाम्यति। तदेतत् सूत्रकारेणातिस्पष्टमुक्तम्, यदि प्रातःसवने प्रागचोमात्सोममतिरिक्तं पश्येत् तस्मसेष्वभ्युन्नयेत्। उपजुह्याद्वा ऊते दृष्ट्वा स्तुतशस्त्रवत्तं कुर्यादिति। एवं सति प्रातःसवनस्यैतदन्तत्वादनन्तरभाविनो माध्यन्दिनसवनत्वात् उभयव्यतिरिक्तः सन्धिर्नाम कश्चिन्न भविष्यति॥

अतिरिक्तसोमस्य स्तोमार्थं पञ्चदशेषु यत् स्तोत्रं क्रियते तत्र सामस्तोमविशेषौ विधत्ते। "गायत्रꣳ साम भवति पञ्चदशः स्तोमः। तेनैव प्रातःसवनान्नयन्ति" [१] इति। प्रातःसवने बहिष्पवमानस्तोत्रं गायत्रसाम्ना निष्पाद्यते। आज्यस्तोत्राणि पञ्चदशस्तोमेन तस्मोभयस्यात्र क्रियमाणत्वेन प्रातःस-

वनलक्षणसद्भावादतिरिक्तसोमस्यानुष्ठातारः प्रातःसवनन्नापगच्छन्ति॥

अथ मरुत्वतीष्वृचु मरुच्छब्दस्य विद्यमानत्वात्तत्प्रयुक्तं गुणं दर्शयति। "मरुत्वतीषु कुर्व्वन्ति। तेनैव माध्यन्दिनात्सवनान्नयन्ति" इति। मरुतो हि माध्यन्दिनसवनसम्बन्धिनः। तत्र हि तदीया ग्रहा आम्नाताः। यन्माध्यन्दिने सवने मरुत्वतीया गृह्यन्त इति श्रुतेः। अतो मरुत्वतीषु स्तोत्रकरणेन माध्यन्दिनसवनलक्षणसद्भावात् अतिरिक्तसोमेन कामितमाध्यन्दिनसवनन्नापगच्छन्ति॥

अतिरिक्तसोमानुष्ठानप्रकारं विधत्ते। "होतृचमसमनून्नयन्ते। होतानुशꣳसति। मध्यत एव यज्ञꣳ समादधाति" इति। दशसु चमसेषु मध्ये योऽयं होतृचमसः तमादावतिरिक्तसोमेन पूरयित्वा पश्चात् अन्यान् पूरयेत्। अत्र होतैव शस्तं पठेत्। अत एव सूत्रकार आह, ऐन्द्रावैष्णवं होतानुशंसति इति। एवं कुर्व्वन् यज्ञं मध्यतः समादधाति। अन्यूनातिरिक्तं सवनद्वयं समीकरोति यथा सन्धिदोषो न भवति तथा करोतीत्यर्थ॥

अथ माध्यन्दिनसवनविषयं प्रायश्चित्तं विधत्ते। "यस्य माध्यन्दिने सवने सोमोऽतिरिच्यते। आदित्यं तृतीयसवनं कामयमानोऽभ्यतिरिच्यते। गौरिवीतꣳ साम भवति। अतिरिक्तं वै गौरिवीतम्। अतिरिक्तं त्वत्सवनस्यातिरिच्यते [१]। अतिरिक्तस्य शान्त्यै" इति। यद्गौरिवीताख्यं साम तत्राचराति-

रेवस्य विद्यमानत्वात् तेनायगातिरिक्तदोषः शाम्यति। इतरत् पूर्ववद्व्याख्येयम् ॥

अत्र सामाधारमृग्विशेषं विधत्ते। "बण्महाꣳ असि सूर्य्येति कुर्व्वन्ति। यस्यैवादित्यस्य सवनस्य कामेनातिरिच्यते। तेनैवैनं कामेन समर्धयन्ति" इति। बडित्यादिकमृक् प्रतीकम्। तत्र चादित्यवाचकः सूर्य्यशब्द आम्नातः। तृतीयसवनस्यादित्यसम्बन्धि। आदित्यग्रहस्य तत्र विहितत्वात्। अत एव सूत्रकारेणोक्तम्, आदित्यारम्भणं तृतीयसवनमित्येवञ्च सत्यतिरिक्तेन सोमेन काम्यमानमादित्यसम्बन्धितृतीयसवनं सूर्य्यशब्दघटितेनेन मन्त्रेण लब्धमिति कृत्वा तेन कामेन अतिरिक्तसोमं समृद्धं करोति ॥

ऋचं विधाय सामविशेषं विधत्ते। "गौरिवीतꣳ साम भवति। तेनैव माध्यन्दिनात्सवनान्नयन्ति" इति। माध्यन्दिनसवने गौरिवीतसाम्नः पृष्ठस्तोत्रे विकल्पेन विहितत्वात् तत्साम तत्सवनलक्षणम्। अतस्तेन साम्ना माध्यन्दिनसवनान्नापगच्छन्ति ॥

स्तोमविशेषं विधत्ते। "सप्तदशः स्तोमः। तेनैव तृतीयसवनान्नयन्ति" इति। तृतीयसवनगतस्यार्भवपवमानस्य सप्तदशस्तोमयुक्तत्वात् असौ स्तोमः। तत्सवनलक्षणं तेन तृतीयसवनान्नापगच्छन्ति ॥

अनुष्ठानप्रकारं विधत्ते। "होतुश्चमसमनून्नयन्ते। होतानुशꣳसति [३]। मध्यत एव यज्ञꣳ समादधाति" इति। पूर्व्ववद्व्याख्येयम् ॥

अथ तृतीयसवनविशेषप्रायश्चित्तं विधत्ते। "यस्य तृतीयसवने सोमोऽतिरिच्येत। उक्थं कुर्व्वीत। यस्योक्थ्येऽतिरिच्येत। अतिरात्रं कुर्व्वीत। यस्यातिरात्रेऽतिरिच्यते। तं वै दुष्प्रज्ञानम्। यजमानं वा एतत्पशव आसाद्य यन्ति। बृहत्साम भवति। बृहद्वा इमांल्लोकान्दाधार। बार्हताः पशवः। बृहतैवास्मै पशून्दाधार" इति। द्वादशस्तोत्रयुक्तेऽग्निष्टोमे प्रयुक्ते सति तृतीयसवने यदि सोमातिरेकः तदानीं तस्योपयोगाय द्वादशभ्य उपरिस्तोत्रत्रयोपेतमुक्थ्यं कुर्व्वीत। तत्रापि सोमातिरेके सति एकोनत्रिंशत्स्तोत्रयुक्तं अतिरात्रं कुर्व्वीत। तत्रापि सोमातिरेके ततोऽधिकस्तोत्रयुक्तस्य क्रतोरभावात् अतिरेकसमाधानं ज्ञातुं दुःशकं तर्हि माभूत् समाधानमिति चेत् न। पशुहानिप्रसङ्गात्। एतेनातिरेकेण पशवो यजमानमासाद्य सर्व्वतोऽपि भूयो यत्र क्वापि यन्ति। तस्मात् कार्य्यमेतत् समाधानम्। बृहत्सामगानेन तत्समाहितं भवति। बृहतः सर्व्वलोकधारणसमर्थत्वात्। पशूनाञ्च तत्सामसम्बन्धित्वेनाबृहतत्वात् पलायमानान् पशून् यजमानार्थं तेन साम्ना धारयति॥

तस्य साम्न आधारभूता ऋचा विधत्ते। "शिपिविष्टवतीषु कुर्व्वन्ति। शिपिविष्टो वै देवानां पुष्टम्। पुष्ट्यैवैनꣳ समर्द्धयन्ति" इति। शिपिविष्टशब्दो यास्वृक्षु विद्यते ताः शिपिविष्टवत्यः। शिपिविष्टशब्दो विष्णुवाची। यः पशोर्भूमा या पुष्टिस्तद्विष्णुः शिपिविष्ट इति श्रुत्यन्तरात्। स च देवानां पुष्टिहेतुः।

अतः शिपिविष्टवतीषु कुर्वतीषु गायन्तीषु गाने सति पुष्ट्यैव यजमानं समृद्धं कुर्वन्ति ॥

अनुष्ठानप्रकारं विधत्ते। "होतुश्चममनून्नयन्ते। होतानुशꣳसति। मध्यत एव यज्ञꣳ समादधाति" [५] इति। पूर्ववत् ॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे आद्यकाण्डे चतुर्थप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

## अथ षष्ठोऽनुवाकः।

पञ्चमे सोमातिरेकप्रायश्चित्तमुक्तम्। षष्ठे त्वेकग्रामवर्त्तिबहुसोमयागविषयविशेषोऽभिधीयते। तत्रैकं विशेषं विधत्ते। "एकैको वै जनतायामिन्द्रः। एकं वा एताविन्द्रमभिसꣳसुनुतः। यौ द्वौ सꣳसुनुतः। प्रजापतिर्वा एष वितायते। यद्यज्ञः। तस्य ग्रावाणो दन्ताः। अन्यतरं वा एते सꣳसुन्वतोर्निर्वप्सति। पूर्व्वेणोपसृता देवता इत्याहुः। पूर्व्वोपसृतस्य वै श्रेयान् भवति। एतावन्त्याज्यानि भवन्त्यभिजित्यै" [१] इति। जनानां समूहो जनता। एकैकस्यां जनतायां मध्ये यौ यजमानौ सꣳसुनुतः सम्भूय सोमयागं कुरुतः। एकस्मिन् काले कुरुत इत्यर्थः। ता एतावुभौ यजमानावेकमेवेन्द्रमभिलक्ष्य सम्भूयैकस्मिन् कालेऽनुतिष्ठतः। तथा सति ममायमिन्द्रोऽस्त्विति तयोर्विप्रतिपत्तिर्भवेत्। अतएवाश्वलायनेनोक्तम्, विमतानां समवसन्निपाते अंशव इति। तत्र यो यज्ञः स एषः

प्रजापतिरूप एव भूत्वा विस्तार्य्यते। तस्य प्रजापतिरूपस्य यज्ञस्योपांशुसवनादयो ग्रावाणः तीक्ष्णदन्तस्थानीयाः। एते ग्रावाणः सम्भूय सोममतिसुन्वतो द्वयोर्मध्येऽन्यतरयजमानं निर्व्वपन्ति, निःशेषेण भर्त्सयति। एकेन यजमानेनेन्द्रस्य परिगृहीतत्वात् इतरस्येन्द्राभावेन यागाभाव एव भर्त्सनम्। अत एवाभिज्ञाः पूर्व्वेण प्रथमप्रवृत्तेन यजमानेन देवता उपसृत्या प्राप्ता इत्याहुः। लोकेऽपि हि प्रथमं सेवमाने भृत्ये स्वामी पक्षपातं करोति। तस्मात्पश्चादुपगच्छन्तं निर्द्देवतं यजमानं ग्रावरूपा दन्ता दंशन्ति। अतस्तत्परिहारायाज्यस्तोत्राण्येतिवन्ति कर्त्तव्यानि। इण्गतावित्यस्य धातोरर्थमेतिशब्दो ब्रूते। क्तिन्प्रत्ययान्तस्यास्य धातो-राङ्पूर्व्वत्वे सति एतिशब्दनिष्पत्तेस्तदर्थवाचिनः शब्दा एषु स्तोत्रेषु विद्यन्ते तादृशानि स्तोत्राणि प्रातःसवने कर्त्तव्यानि। तथा सति इन्द्राभावदोषपरिहारेणास्याभिजयो भवति॥

तत्रापरं विशेषं विधत्ते। "मरुत्वतीः प्रतिपदः। मरुतो वै देवानामपराजितमायतनम्। देवानामेवापराजित आयतने यतते" इति। मरुच्छब्दो यास्वृक्षु अस्ति ताः मरुत्वत्यः। तथाविधा ऋचः आज्यस्तोत्रे प्रतिपदः प्रथमभाविनीः कुर्य्यात्। देवानां मध्ये मरुतो बलवत्वेन पराजयरहितं स्थानम्। ततो देवसम्बन्धिन्यपराजिते स्थाने प्रयत्नं करोति॥

ऋग्विशेषं विधाय सामविशेषं विधत्ते। "उभे बृहद्रथन्तरे भवतः। इयं वाव रथन्तरम्। असौ बृहत्। आभ्या-

मेवैनमन्तरेति। वाचश्च मनश्च। प्राणाच्चापानाच्च। दिवश्च पृथिव्याश्च [२]। सर्व्वस्मादित्ताद्वेद्यात्'' इति। एकस्मिन् स्तोत्रे बृहत्सामान्यस्मिन् रथन्तरमित्येवं चतुर्ष्वप्याज्यस्तोत्रेषु पर्य्यायेणोभे सामानी भवतः। रथन्तरस्य भूलोकरूपत्वात्, बृहतो द्युलोकरूपत्वात्, एतद्रूपाभ्यां सामाभ्यामेवैनं यजमानं संसवदोषादन्तरितं व्यवहितं करोति। किञ्च सामद्वयस्य वागादियुग्मरूपत्वात् वागादिभिरपि व्यवधानं करोति। वित्तं पूर्व्वं लब्धम, वेद्यमितः परं लब्धव्यम्॥

आज्यस्तोत्रेषु सामविशेषं विधाय तृतीये पृष्ठस्तोत्रे सामविशेषं विधत्ते। "अभिवर्त्तो ब्रह्म साम भवति। सुवर्गस्य लोकस्याभिवृत्त्यै'' इति। ब्रह्मसम्बन्धिनि पृष्ठस्तोत्रे अभिवर्त्ताख्यं सामोद्गाता गायेत्। यामृचं ब्रह्माशंसति। तस्यामृच्युद्गात्रा गातव्यं साम ब्रह्म साम अभिवर्त्तसाम्ना स्वर्गोऽभिमुखत्वन वर्त्तते॥

अथाहर्विशेषं विधत्ते। "अभिजिद्भवति। सुवर्गस्य लोकस्याभिजित्यै। विश्वजिद्भवति। विश्वस्य जित्यै'' इति। अभिजिद्विश्वजिताख्ययोरेकाह्नयोरन्यतरं कुर्य्यात्। उभयोरपि जयहेतुत्वात्॥

अथापरं विशेषं विधत्ते। "यस्य भूयाꣳसो यज्ञक्रतव इत्याहुः। स देवता वृङ्क्ते इति। यद्यग्निष्टोमः सोमः पुरस्तात्स्यात् [३]। उक्थ्यं कुर्व्वीत। यद्युक्थ्यं स्यात्। अतिरात्रं कुर्व्वीत। यज्ञक्रतुभिरेवास्य देवता वृङ्क्ते'' इति। उभयोर्मध्ये यस्य यजमानस्य यज्ञक्रतवो भूयांसोऽङ्गभूतैर्यज्ञैर्युक्ताः प्रधानक्रतवोऽ-

नुष्ठेयधर्म्मा बहुला भवन्ति। स तादृशो यजमानोऽल्पधर्म्मानुष्ठायिनोऽन्यस्य यजमानस्य देवता विनाशयति। अतोपरस्मादन्यस्य यजमानस्य गृहे यद्यग्निष्टोमाख्यः सोमः स्यात्। तदा स्वयं ततोऽधिकं उक्थ्यं कुर्व्वीत। यदि उक्थ्यस्तदा ततोधिकं अतिरात्रं कुर्व्वीत। एवं स्वकीयैरधिकयज्ञक्रतुभिरेवेतरस्य देवता विनाशयति। तस्य फलाधिक्याभाव एव विनाश इत्युच्यते॥

विशेषान्तरं विधत्ते। "यो वै छन्दोऽभिरभिभवति। स सꣳसुन्वतोरभिभवति। संवेशाय त्वोपवेशाय त्वेत्याह। छन्दाꣳसि वै संवेश उपवेशः। छन्दोभिरेवास्य छन्दाꣳस्यभिभवति" इति। यो यजमानः स्वकीयैः छन्दोभिरितरस्य छन्दांस्यभिभवितुमुद्युङ्क्ते, स एव संसुन्वतोर्मात्सर्य्येण सोममभिसुन्वतोर्मध्ये परकीयानि छन्दांस्यभिभवितुं समर्थो भवति। तस्मात्तत्सामर्थ्याय संवेशादिमन्त्रहोमं कुर्य्यात्। सम्प्राप्यावस्थितिः संवेशः, तत्रैवासनमुपवेशः। हे देव मम संवेशाय त्वां भजे, तथोपवेशाय च त्वां भजे इत्येवं मन्त्रं होमकाले ब्रूयात्। एतन्मन्त्रशेषस्य संहितायां तृतीयकाण्डे समाम्नातो व्याख्यातस्य। स्वकीयानि छन्दांस्येव संवेशोपवेशौ तत्साधनत्वादतः स्वकीयैश्छन्दोभिरेव होमतुष्टैरन्यस्य छन्दांस्यभिभवति॥

पुनरप्यन्यं विशेषं विधत्ते। "इष्टर्गो वा ऋत्विजामध्वर्य्युः [४]। इष्टर्गः खलु वै पूर्व्वोऽर्ष्टुः क्षीयते। प्राणापानौ मृत्योर्मापातमित्याह। प्राणापानयोरेव श्रयते। प्राणापानौ मा-

माहासिष्टमित्याह। नैनं पुरायुषः प्राणापानौ जहितः" इति।
इष्टं चट्रम्हि विनाशयतीति इष्टर्गः, अध्वर्युः सर्वेषामृत्विजामिष्टं
विनाशयति। तस्यानुष्ठानबाहुल्येन प्रमादसम्भवात्। आर्त्तिं
गच्छत ऋत्विक्सङ्घात् पूर्व्वः प्रथमभावी सन् अयमिष्टर्गो-
ऽध्वर्य्युः क्षीणो भवति। ततः क्षयव्यावृत्तये प्राणापानवित्या-
दिमन्त्रं होमकाले ब्रूयात्। हे प्राणापानौ मृत्योः सकाशा-
न्मायातं मां रक्षतम्। अनेन मन्त्रपूर्व्वभागेन प्राणापानयो-
रेवाश्रितो भवति। हे प्राणापानौ मां माहासिष्टम्। मां
कदाचिदपि मा परित्यज्यताम्। अनेन मन्त्रस्योत्तरभागेन
शतसम्वत्सरादायुषः पुरा प्राणापानावेनं परित्यज्यतः। इत्ये-
वमेकदेशवर्त्तिनोः सोमयाजिनोः संशये प्राप्ते विशेषोऽभिहितः॥

अथ सत्रविषये कञ्चिद्विशेषं विधत्ते। "आर्त्तिं वा एते
नियन्ति। येषां दीक्षितानां प्रमीयते। तं यदववर्ज्जेयुः।
क्रूरकृतामिवैषां लोकः स्यात्। आहर दहेति ब्रूयात् [५]।
तं दक्षिणतो वेद्यै निधाय। सर्पराज्ञिया ऋग्भिस्तुयुः। इयं
वै सर्पतो राज्ञी। अस्या एवैनं परिददति" इति। सत्राय
दीक्षितानां येषां मध्ये कश्चिन् म्रियेत। तदानीमेते सर्व्वे स-
त्त्रिण आर्त्तिं यज्ञविनाशरूपां बाधां निरन्तरं प्राप्नुवन्ति।
तं मृतमन्ये दीक्षिताः यद्यवज्ञाय दूरतो वर्ज्जयेयुः। तदानी-
मेषां वर्ज्जयितॄणां क्रूरकृतामिव ब्रह्महत्यादिरूपं पापं कृत-
वतामिव नरकलोकः स्यात्। अतोऽवज्ञामकृत्वा तं मृतमिहा-
नीय दाहादिसंस्कारञ्च कुर्व्वीति। तदीय पुत्रादिकं प्रत्याद-

रेण ब्रूयात्। अथ तं प्रेतं वेद्या दक्षिणभागे निधाय सर्पराज्ञी-देवताकाभिर्भूमिर्भूमेत्यादिभिर्ऋग्भिः स्तोत्रं कुर्य्युः। इयमेव भूमिः सर्प्पतः सञ्चरतः प्राणिजातस्य राज्ञी, अतोऽस्यै भूम्यै एवैनं मृतं समर्पयन्ति॥

अथ स्तुतेरूर्द्ध्वं शंसनं विधत्ते। "व्यृद्धं तदित्याहुः। यत्स्तुतमननुशस्तमिति। होता प्रथमः प्राचीनावीती मार्ज्जालीयं परीयात्। यामीरनुब्रुवन्। सर्पराज्ञीनां कीर्त्तयेत्। उभयोरेवैनं लोकयोः परिददाति [६]। अथो धुवन्त्येवैनम्। अथोऽन्ये चास्मै कुर्वते" इति। यत् देवतारूपं स्तोत्रेण विषयीकृतं तदनन्तरमेव शस्त्रेण विषयीकृतं न स्यात्। तत्समृद्धिहीनं भवतीत्यभिज्ञा आहुः। अतः सर्पराज्ञीभिः स्तोत्रे कृते सत्यनन्तरमेव होता प्रथमः पुरोगामी सन् प्राचीनावीती भूत्वा मार्ज्जालीयन्धिष्णियं परितो गच्छेत्। किं कुर्व्वन् योऽस्य कौष्णेत्यादिका यामीर्ऋचोनुब्रुवन्। ततो भूमिर्भूमेत्यादिकाः सर्पराज्ञी ब्रूयात्। तथासति यमविषयाभिर्भूमिविषयाभिश्च लोकद्वयेऽप्येनं प्रतितिष्ठन्ति। अपि चैतं मृतं सचिणं धुवं इत्येव वस्त्रधूननादिभिरितरश्चोपचारैरुपचरन्त्येव। अपि चास्मै मृतयजमानाय निह्नुवत एव वियोगासहिष्णुत्वप्रलापादिभिरपलपन्त्येव॥

मार्ज्जालीयपरिभ्रमणस्यावृत्तिं विधत्ते। "त्रिः परियन्ति। त्रय इमे लोकाः। एभ्य एवैनं लोकेभ्यो धुवते। त्रिः पुनः परियन्ति। षट् सम्पद्यन्ते। षड्वा ऋतवः। ऋतुभिरेवैनं

ध्रुवते'' इति। त्रिवारं प्रादक्षिण्येन लोकत्रयप्राप्त्यर्थमेनमुपचरन्ति। पुनस्त्रिवारमप्रदक्षिणावृत्तौ सत्यां षट्सङ्ख्यया ऋतुभिरेवैनमुपचरन्ति ॥

अथ बहिःपवमानार्थं ऋक्सामविशेषं विधत्ते। ''अग्न आयूꣳषि पवस इति प्रतिपदं कुर्व्वीरन्। रथन्तरसामैषाꣳ सोमः स्यात्। आयुरेवात्मन् दधते। अथो पाप्मानमेव विजहतो यन्ति'' इति। बहिष्पवमानस्तोत्रस्यादौ पूर्व्वप्राप्तामृचं बाधित्वा अग्न आयूꣳषीत्यृचं पठेत्। तथा गायत्रं साम बाधित्वा रथन्तरं साम गायेत्। तथा प्रतिपत्पाठेनात्मन्यायुष्यं धारयन्ति। रथन्तरसाम्ना यत् कूरकृत् समानलोकप्राप्ति पापं त्यजन्तः पुण्यलोकं प्राप्नुवन्ति। अत्र मीमांसाषष्ठाध्यायस्य तृतीयपादे चिन्तितम्।

मृते सत्रिणि नान्यः स्यात् स्यादाचाराचापि पूर्व्ववत्।
स्यादस्यात्येपि कर्त्तृत्वे साप्तदश्यस्य सिद्धये ॥

सत्रिषु बहुषु यजमानेषु एकस्मिन् मृते प्रतिनिधिर्नास्ति पूर्व्वाधिकरणेऽयजमप्रतिनिधेर्निराकृतत्वादिति चेत्। मैवम्। भङ्ग्यन्तरेण तत्सिद्धेः। सत्रिणां हि कार्य्यद्वयं फलभोक्तृत्वं यागकर्त्तृत्वञ्च। तत्र प्रतिनिधेः फललाभावेऽपि कर्त्तृत्वं सम्भवति। ऋत्विक्कार्य्ये कर्त्तृत्वे प्रतिनिधिमन्तरेण सा सदश्याभावात् षोडशैव कर्म्माणि निष्पद्येरन्। एकं कार्य्यं लुप्येत तस्माद् यजमानस्य प्रतिनिध्यभावेऽपि ऋत्विजः प्रतिनिधिसम्भवात् पुरुषान्तरं प्रतिनिधातव्यम्। तत्रैवान्यच्चिन्तितम् ॥

स: स्वाम्यप्युतकर्त्तैव स्वामी तत् स्थानगलतः।
अनारब्धफलाभावादस्वामी कर्तृमात्रता॥

य: सचिण: प्रतिनिधिस्तस्य यजमानस्थाने स्वीकृतत्वेन यजमानत्वमप्यस्तीति चेत्। मैवम्। आरभ्यासमाप्तिपर्य्यन्तमनुष्ठितु: फलं युक्तम्। प्रतिनिधिस्तु नारब्धवान्। अत: फलाभावाद्यजमानत्वं नास्ति। किन्तु कर्तृत्वमेव। मृतस्य तु समाप्त्यभावेऽपि फलमाम्नायते। यो दीक्षितानां प्रमीयेतापि तत्र फलमिति। तत्रैवान्यचिन्तितम्।

नास्य स्युः फलिसंस्काराः कार्य्यवानफलित्वतः।
अन्येषां साप्तदश्यार्थमफलिन्यपि ते मताः॥

सत्रे योऽयं प्रतिनिधिः तस्य फलित्वाभावात् फलयोग्यताहेतवः पवमानादिसंस्कारा न कर्त्तव्या इति चेत्। मैवम्। अस्य फलाभावेऽप्यस्मिन् संस्कृते सत्यन्येषां यत् साप्तदश्यं तत् संस्कृतेषु सप्तदशसु स्थितं भवति। ततः सप्तदशावराः सत्रमासीरन्नित्येतत् शास्त्रमनुगृहीतं भवति। अन्यथा संस्कृता षोडशैवेति तच्छास्त्रं बाध्येत। यदि बहूनां यजमानानां अभावात् अवराल्पसङ्ख्याः यजमानाः स्युः, तदापि सप्तदशापेक्षिताः। न तु ततोऽप्यल्पसङ्ख्या इत्यर्थः। तस्मादफलित्वेऽपि तस्मिन् संस्काराः कर्त्तव्याः॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे प्रथमकाण्डे चतुर्थप्रपाठके षष्ठोऽनुवाकः॥

॥ ६ ॥

अथ सप्तमोऽनुवाकः।

षष्ठे सवननिमित्तं प्रायश्चित्तमुक्तम्। सप्तमे यूपविरोहणादिप्रायश्चित्तान्युच्यन्ते। तत्र यूपविरोहणप्रायश्चित्तं विधत्ते। "असुर्यं वा एतस्माद्वर्णं कृत्वा। पशवो वीर्य्यमक्रामन्ति। यस्य यूपो विरोहति। त्वाष्ट्रं बहुरूपमालभेत। त्वष्टा वै रूपाणामीशे। य एव रूपाणामीशे। सोऽस्मिन् पशून् वीर्य्यं यच्छति। नास्मात्पशवो वीर्य्यमपक्रामन्ति" इति। यस्य यजमानस्य यूपो विरोहणमङ्कुरान् जनयति। एतस्माद्यजमानात् पशवो वीर्य्यं अपक्रामन्ति। किं कृत्वा असुर्य्यं वर्णं असुरेभ्यो हितं कृत्वा तदेतदपक्रमणं निवारयितुं त्वष्टृदेवताकं बहुवर्णोपेतं पशुमालभेत। त्वष्टा हि रूपाणां स्वामी त्वष्टा वै पशूनां मिथुनानां रूपकृदिति श्रुत्यन्तरात्। अतः पशूनां त्वष्टारूपस्वामी यजमाने तान् पशून् वीर्य्यञ्च नियच्छति। ततो नास्मात् पशवो वीर्य्यमपक्रामन्ति॥

अथाग्निविनाशप्रायश्चित्तं विधत्ते। "आर्त्तिमेते नियन्ति। येषां दीक्षितानामग्निरुद्वायति [१]। यदाहवनीय उद्वायेत्। यत्तं मन्थेत्। विच्छिन्द्यात्। भ्रातृव्यमस्मै जनयेत्। यदाहवनीय उद्वायेत्। आग्नीध्रादुद्धरेत्। यदाग्नीध्र उद्वायेत्। गार्हपत्यादुद्धरेत्। यद्गार्हपत्य उद्वायेत्। अत एव पुनर्मन्थेत् [२]। अत्र वाव स निलयते। यत्र खलु वै निलीनमुत्तमं पश्यन्ति। तदेनमिच्छन्ति" इति। दीक्षितानां येषां पुरुषाणां अग्निर्विनश्यति, ते पुरुषा विनाशमेव प्राप्नुवन्ति। तत् परिहाराय कश्चि-

ह्णान्त आहवनीयस्य नाशे यद्याहवनीयार्थमेव मन्थनं कुर्य्यात्। तदानीं तस्य मथिताहवनीयस्य गार्हपत्यजन्यत्वाभावात् तयो-रुभयोरैकमत्याभावेन यज्ञो विच्छिद्येत। मथितस्य गार्ह-पत्यस्य विरोधात् यजमानस्य भ्रातृव्यं जनयेत्। तस्मादाह-वनीयनाशे सति आग्नीध्राद्धिष्णियात् वह्निमुद्धरेत्। न तु मन्थनं कुर्य्यात्। आग्नीध्रस्य नाशे गार्हपत्यादग्निमुद्धरेत्। तस्य गार्हपत्यनाशे तत एव गार्हपत्यादर्द्धदग्धकाष्ठात् पुनर्मन्थनं कुर्य्यात्। यस्मादत्रैव गार्हपत्ये सोऽग्निर्विलीनोऽन्तर्हितः। तस्मात्तत्रैव मन्थनं युक्तम्। लोकेऽपि मणिमुक्तादिकमुत्तमं वस्तु यत्र भूप्रदेशे पतित्वा निलीनं भवति, तत्रैव तदन्विष्य लब्धुमिच्छन्ति। तस्माद्गार्हपत्यस्थितकाष्ठे मन्थनमुचितम्॥

तस्मिन्मन्थने कञ्चिद्विशेषं विधत्ते। "यस्माद्दारोरुद्दायेत्। तस्यारणी कुर्य्यात्। क्रुमुकमपि कुर्य्यात्। एषा वा अग्नेः प्रिया तनूः। यत् क्रुमुकः। प्रिययैवैनं तनुवा समर्द्धयन्ति" इति। गार्हपत्यात्रस्थितेष्वर्द्धदग्धकाष्टेषु मध्ये चरमं वह्न्युद्गासनं य-स्मिन् दारुणि पश्यति। तद्दारुसम्बन्धिन्यावेवारणी कुर्य्यात्। तयोररण्योर्मन्थनवेलायां क्रुमुकं प्रक्षिपेत्। तद्गुणेन निष्पन्नोऽ-तिलघुः शकलः योऽयं क्रुमुकः सैषाग्नेरतिप्रिया तनूः, क्रुमुके हि सहसा वह्निर्ज्वलति। अतः प्रियेणैव शरीरेण वह्निं समृद्धं करोति॥

आहवनीयमन्थने यो दोष उक्तः। तदभावेन गार्हपत्य-मन्थनं प्रशंसति। "गार्हपत्यं मन्थति [२]। गार्हपत्यो वा

अग्नेर्योनिः। स्वादेवैनं योनेर्जनयति। नास्मै भ्रातृव्यं जनयति" इति। आधानकाले गार्हपत्यस्येतराग्नियोनित्वं दृष्टम्। अतोऽत्रापि गार्हपत्यमन्थने सति स्वकीयादेव योनेरुत्तरभाविनमेनमाहवनीयाद्यग्निं जनयति। अतो विरोधाभावात् यजमानस्य भ्रातृव्यं नोत्पादयति॥

पूर्व्वं यस्य प्रातःसवन इत्यनुवाके सोमातिरेकप्रायश्चित्तमुक्तम्। इदानीं सोमोपचयनिमित्तं प्रायश्चित्तं विधत्ते। "यस्य सोम उपदस्येत्। सुवर्णꣳ हिरण्यं द्वेधा विच्छिद्य ऋजीषेऽन्यदा धुनुयात्। जुहुयादन्यत्। सोमं जुहोति" इति। सोऽयं यस्य यजमानस्याभिषुतः सोम उपचीयेत कृत्स्नानुष्ठानाय न पर्य्याप्नुयात्। सम्यग् वर्णोपेतं हिरण्यं द्वेधा विभज्य तदीयमेकं शकलं पूर्वं निष्पीडितरसैः सोमवल्लीसम्बन्धिन्यृजीषे आधुनुयात् मिश्रयित्वा पुनरभिषुणुयात्। इतरच्छकलं मुख्ये चमसे निधाय रसेन सह जुहुयात्। तथा कृते सोम एवाभिषुतोऽहुतस्य भवति॥

तदेतत् सुवर्णं प्रशंसति। "सोमस्य वा अभिषूयमाणस्य प्रिया तनूरुदक्रामत् [४]। तत्सुवर्णꣳ हिरण्यमभवत्। यत्सुवर्णꣳ हिरण्यं कुर्व्वन्ति। प्रिययैवैनं तनुवा समर्द्धयन्ति" इति। रजतव्यावृत्त्यर्थं सुवर्णमिति विशेषणम्॥

अपचयप्रायश्चित्तमुक्त्वापहारप्रायश्चित्तं विधत्ते। "यस्याक्रीतꣳ सोममपहरेयुः। क्रीणीयादेव। सैव ततः प्रायश्चित्तिः" इति। दीक्षणीयेष्टेः पूर्व्वमेव सोमं सम्पाद्य क्रयपर्य्यन्तं क्वचि-

द्वस्थापयेत्। अतएव सूत्रकार आह, अत्र राजानमाहृत्य पयसौदनेन परिविवेषयन्त्याक्रयादिति। अत्र क्रयात् पूर्वं दीक्षादिवसेषु परिचर्य्यमाणं सोमं यदि केचिदपहरेयुः। तदानीमन्यमपि कञ्चित्सोमं सम्पाद्य क्रयः कर्त्तव्य एव। क्रयानुष्ठितिरेव तस्यापहारस्य प्रायश्चित्तिः॥

अथ क्रीतस्यापहारे प्रायश्चित्तं विधत्ते। "यस्य क्रीतमपहरेयुः। आदाराꣳश्च फाल्गुनानि चाभिषुणुयात्। गायत्री यꣳ सोममाहरत्। तस्य योꣳशुः परापतत् [५]। त आदारा अभवन्। इन्द्रो वृत्रमहन्। तस्य वल्काः परापतत्। तानि फाल्गुनान्यभवन्। पशवो वै फाल्गुनानि। पशवः सोमो राजा। यदादाराꣳश्च फाल्गुनानि चाभिषुणोति। सोममेव राजानमभिषुणोति" इति। क्रीतस्य सोमस्यापहारे सोमप्रतिनिधित्वेनादाराणां फाल्गुनानाञ्चाभिषवः। आद्रियन्ते सोमरहितैतत्तात्पर्य्येण स्वीक्रियन्त इत्यादाराः चौरयुक्तवल्लीविशेषाः। लोकव्यवहारे फल्गु स्वल्पमेव प्रयोजनं येषां आर्द्रदुर्व्वाङ्कुरादीनां तृणानां तानि फाल्गुनानि। पुरा गायत्र्या समानीयमानस्य सोमस्य कश्चिदवयवो भूमौ पतितः स आदाररूपेणोत्पन्नः। इन्द्रेण हतस्य वृत्रस्य वल्काः त्वक् शकले भूमौ पतित्वा फाल्गुनरूपेणोद्भूत्। फाल्गुनानां पशुप्रियत्वात् पशुरूपत्वं सोमस्य च पशुप्राप्तिहेतुत्वात् पशुरूपत्वम्। एवं सत्यादारफाल्गुनाभिषवणे सोम एवाभिषुतो भवति॥

तत्र कर्त्तव्यविशेषान्विधत्ते। "शृतेन प्रातःसवने श्रीणीयात्। दध्ना मध्यन्दिने [६]। नीतमिश्रेण तृतीयसवने। अग्निष्टोमः सोमः स्याद्रथन्तरसाम। य एव ऋत्विजो वृताः स्युः। त एनं याजयेयुः। एकां गां दक्षिणां दद्यात्तेभ्य एव। पुनः सोमं क्रीणीयात्। यज्ञेनैव तद्यज्ञमिच्छति। सैव ततः प्रायश्चित्तिः" इति। अभिषुतं आदारफाल्गुनरसं शृतेन पक्वेन क्षीरेण श्रीणीयान्मिश्रयेत्। नवनीतोत्पत्तेः पूर्व्वावस्थमीषन्मथितं दधि नीतमिश्रम्। यद्यप्ययमुक्थ्यषोडश्यादिरूपं क्रत्वन्तरमारब्धवान्। तथापि तत्परित्यागेन प्रायश्चित्तरूपेऽस्मिन् प्रयोगे रथन्तरपृष्ठोऽग्निष्टोमरूप एव सोमयागः कार्य्यः। तत्र पूर्व्वं वृता ऋत्विज एव याजकाः, तेभ्यः सर्व्वेभ्य एकैव गौर्दक्षिणा। तथा नैमित्तिकं प्रयोगमनुष्ठाय पुनर्नित्यप्रयोगार्थं सोमं क्रीणीयात्। एवं सति नैमित्तिकप्रयोगरूपेणैव यज्ञेन नित्यप्रयोगरूपं यज्ञं प्राप्तुमिच्छति सोऽयमेवंविधैवानुष्ठितिः। ततः क्रीतसोमापहारदोषात् प्रायश्चित्तिर्विमुक्तिहेतुः॥

अथ सत्रं सङ्कल्प्य ततो निवृत्तौ प्रायश्चित्तं विधत्ते। "सर्व्वाभ्यो वा एष देवताभ्यः सर्व्वेभ्यः पृष्ठेभ्य आत्मानमागुरते। यः सत्रायागुरते। एतावान् खलु वै पुरुषः। यावदस्य वित्तम्। सर्व्ववेदसेन यजेत। सर्व्वपृष्ठोऽस्य सोमः स्यात्। सर्व्वाभ्य एव देवताभ्यः सर्व्वेभ्यः पृष्ठेभ्य आत्मानं निष्क्रीणीते" इति। यो यजमानः सत्रार्थं सङ्कल्पयति सत्रं न करोति स पुरुषः सर्व्वदेवताभ्यः तत्प्रतिपादकस्तोत्रेभ्यश्च स्वात्मानं सङ्कल्पयति।

अस्य पुरुषस्य यावद्वित्तमस्ति तावदेवास्य पुरुषस्य स्वरूपं सर्व्व-कर्म्मनिर्व्वाहकं सारूपं दरिद्रस्य होमदानयोरशक्तत्वादेवं सति सङ्कल्पितं स्वात्मानं निष्क्रीणीत इति। यो यजमानः सत्रार्थं सङ्कल्पयति। स पुरुषः सर्व्वदेवताभ्यः तत्प्रतिपाद-केभ्यः पृष्ठेभ्यः स्तोत्रेभ्यः भागदानायाशक्तत्वादेवं सति सङ्क-ल्पितं स्वात्मानं देवताभ्यः सकाशात् निष्क्रीतुं स्वप्रतिनिधि-त्वेन सर्व्वस्वदक्षिणोपेतं सर्व्वपृष्ठस्तोत्रयुक्तं सोमयागं कुर्य्यात्। सकारान्तो वेदशब्दो धनवाची। सर्व्वं वेदसं धनं दक्षिणा-त्वेन यस्मिन् यज्ञे सोऽयं सर्व्ववेदसः। तेन यज्ञेन स्वात्मानं निष्क्रीणीते नीयन्ति। सेयं सत्रेषु सङ्कल्पभ्रमस्य प्रायश्चित्तिः। तदिदं सोम प्रतिनिधिरूक्तं प्रायश्चित्तं सूत्रकारेण स्पष्टमुदा-हृतम्, सोमाभावे पूतिकानभिषुणुयात्। पूतिकाभावे आ-दारान् फाल्गुनानि। यानि श्वेतसूलानि स्युः। तदभावे याः कास्चोषधीः चीरणीः अरुणदूर्व्वाः कुशान् वा हरितानिति वाजसनेयकमिति। यदि सत्रायागूर्य्या न यजेत विश्वजितानति-रात्रेण सर्व्वपृष्ठेन सर्व्वस्तोमेन सर्व्ववेदसदक्षिणेनयजेतेति। अत्र मीमांसाषष्ठाध्यायस्य तृतीयपादे चिन्तितम्।

सोमाभावे भवेत् पूतिविधिः प्रतिनिधावुत।
नियमो वचनादाद्यो लाघवात्तु नियम्यते॥
यदि सोमं न विन्देत पूतिकानभिषुणुयात्। इति।

लिङ्प्रत्ययस्य विधिवाचित्वादिदं वाक्यं पूतिकलताख-ण्डानां विधायकमिति चेत्। नैवम्। सदृशतया प्रतिनिधेय-

त्वेन प्राप्तेषु नियममात्रविधौ लाघवात् तस्मात् पूर्व्वकद्रव्यं नियम्यते। अत्रैवान्यच्चिन्तितम्।

पूतिकस्यापचारे स्यात्तेन सोमेन वा समम्।

आद्यः श्रुतांशसादृश्यात् पूतिकाविधितोऽन्तिमः॥

यदा सोमप्रतिनिधेः पूतिकस्यापचारः स्यात् तदा तेन पूतिकेन सदृशं द्रव्यान्तरं उपादेयम्। पूतिकानभिषुणुया-दिति श्रुतेः, पूतिकांशैः सादृश्यस्य लाभादिति चेत्। मैवम्। नास्ति पूतिकानां विधिः। किन्तु नियमार्थं तद्वचनमित्युक्तम्। अतः श्रुतस्य सोमस्य सादृश्यलाभाय समांशलाभाय सोमसमं द्रव्यान्तरमुपादेयम्। दशमाध्यायस्य तृतीयपादे चिन्तितम्।

एकां पञ्चेति कृत्स्नां वा गोसङ्ख्याञ्च निवर्त्तयेत्।

स्यादाद्यो दक्षिणायोगान्नैवं व्यवहितत्वतः॥

इदं श्रूयते। यस्य सोममपहरेयुरेकां गां दक्षिणां दद्यात्। अभिदग्धे पञ्च गा इति। तदिदं सङ्ख्याविशिष्टं द्रव्यं विधीय-मानं गवादिदक्षिणां कृत्स्नां निवर्त्तयेत्। तस्य दक्षिणाशब्द-प्रयोगेन कार्य्यैकत्वात्। मैवम्। विशिष्टविधौ गौरवात् गवां प्राप्तत्वाच्च सङ्ख्यामात्रं विधेयम्। तस्य च गोपदेन व्यवधानान्न दक्षिणायोगोऽस्ति। गोपदयोगे तु गोगतां स्वविरोधिनीं पूर्व्वप्राप्तसङ्ख्यामेव निवर्त्तयेत् न त्वन्यत् किञ्चिदिति राद्धान्तः। षष्ठाध्यायस्य चतुर्थपादे चिन्तितम्।

सत्रायागुरते योऽयं यजेद्विश्वजितेत्यसौ।

यः कोप्युत प्रवृत्तः स्यादप्रवृत्तोऽथवाग्रिमः॥

अविशेषप्रवृत्तस्तु मन्त्राङ्गं हि तथाभवेत् ।
निमित्तोक्तेरप्रवृत्तः प्रायश्चित्तं चरेदिदम् ॥

इदमाम्नायते। यः सत्त्रायागुरते स विश्वजिता यजेतेति। आगुरते सङ्कल्पयति। तत्र सत्त्रं सङ्कल्प्य कश्चिदनुष्ठातुं प्रवृत्तः अपरो न प्रवृत्तः। तयोरुभयोर्मध्ये यः कोऽपि विश्वजिता यजेत। कुतः प्रवृत्त एव यजेतेति विशेषस्याश्रवणात्। एवमप्रवृत्त एव यजेतेत्यपि विशेषो न श्रूयते। तस्मादुभयोरन्यतर इत्याद्यः पक्षः। यः सत्त्रायागुरत इति निमित्तत्वेनोपन्यासात् सङ्कल्पयति। सत्त्रं नानुतिष्ठेत् स एव तदा प्रायश्चित्तार्थं विश्वजिद्यागं कुर्यादिति राद्धान्तः। षष्ठाध्यायस्य सप्तमपादे चिन्तितम्।

सर्व्वस्वदाने पित्रादावपि तद्धन एव वा।
स्वत्वादाद्यः पितृत्वादावत्यागाद्धन एव तत् ॥

इदमामनन्ति, विश्वजिति सर्व्वस्वं ददातीति। तत्र धन इव पित्रादिष्वप्यात्मीयत्वस्य समानत्वादस्ति पित्रादीनामपि तद्दानमिति प्राप्ते ब्रूमः। आत्मसम्बन्धत्यागपूर्व्वकं परसम्बन्धापादनं दानमित्युच्यते। न हि दीयमाने पितरि स्वकीयपितृत्वत्यागः परकीयपितृत्वापादनं वा सम्भवति। किञ्च स्वशब्दस्यात्मा ज्ञातिरात्मीयं धनञ्चेति चत्वारोऽर्थाः। तेष्वेकस्मिन् प्रयोगे एक एवार्थो वाच्यः। प्रकृतौ गवादिधनस्यैव दक्षिणात्वादिहापि धनवाचित्वं युक्तम्। तस्माद्धनस्यैव दानम्। तत्रैवान्यच्चिन्तितम्।

देया न वा महाभूमिः स्वत्वाद्राजा ददातु ताम्।
पालनस्यैव राज्यत्वं न स्वं भूर्दीयते न सा॥

यदा सार्व्वभौमो राजा विश्वजिति सर्व्वं ददाति। तदा गोपथराजमार्गजलाशयाद्यन्विता महाभूमिस्तेन दातव्या। कुतः भूमेस्तदीयधनत्वात्। राजा सर्व्वस्येष्टे ब्राह्मणवर्जमिति स्मृतेरिति प्राप्ते ब्रूमः। दुष्टशिक्षाशिष्टपरिपालनाभ्यां राज्ञ ईशितृत्वं स्मृत्यभिप्रेतमिति न राज्ञो भूमिर्धनम्। किन्तु तस्यां भूमौ स्वकर्म्मफलं भुञ्जानानां सर्व्वेषां प्राणिनां साधारणं धनम्। अतोऽसाधारणस्य भूखण्डस्य सत्यपि दाने महाभूमेर्दानं नास्ति। तत्रैवान्यच्चिन्तितम्।

दानं केसरिणां नो वा विहितप्रतिषेधतः।
विकल्पः पर्य्युदासोऽयं ये यजामहनीतितः॥

न केसरिणो ददातीति विश्वजिति श्रूयते। तत्र सर्व्वस्वदानविधानात् केसरिदाननिषेधाच्चाश्वदानं विकल्पितमिति प्राप्ते ब्रूमः। नायं प्रतिषेधः। किन्तु पर्य्युदासः। तत्प्रकारश्च दशमाध्यायस्याष्टमपादे ये यजामहमन्त्रोदाहरणेन व्युत्पादयिष्यते। ततस्तेन न्यायेनाश्वपर्य्युदासे सत्यश्वव्यतिरिक्तं सर्व्वस्वं देयमिति विधिनिषेधयोरेकवाक्यतालाभान्नास्ति अश्वस्य पाक्षिकमपि दानम्। तत्रैवान्यच्चिन्तितम्।

अर्ज्जयित्वापि किं सर्व्वं देयं द्रव्यं यदस्ति तत्।
सर्व्वोद्देशविधेराद्यो न प्राप्ते सर्व्वता विधेः॥

पूर्व्वोक्ते सर्व्वस्वदाने सर्व्वमुद्दिश्य दानं विधीयते। तं पुरु-

षेण भोगं राज्यासनादिकं यत्सर्व्वं तद्दातव्यमिति तस्माद्विद्य-
मानं सर्व्वं अर्ज्जयित्वापि देयमिति चेत् । मैवम् । चोदकप्राप्तं
दानमुद्दिश्य सर्व्वत्वविधानात् सर्व्वशब्दः प्रसिद्धवाचित्वाद्दीय-
मानविषयः । तस्माद्यदस्ति तदेव देयम् । तत्रैवान्यच्चिन्तितम् ।

धर्म्मार्थी सेवकः शूद्रो देयो नो वा स दासवत् ।
देयोऽस्वत्वात् पराधीनत्वाभावान्न च दीयते ॥

यस्तु शूद्रो विहितं स्वधर्म्ममेव गन्तुं सेवते । सोऽपि स्व-
मध्यपातित्वाद्गर्भदासवद्देय इति चेत् । मैवम् । जीविताद्यदा-
नेन तस्मिन्सेवके स्वत्वाभावात् स्वेच्छाचारित्वेन परस्वत्वापा-
दनासम्भवाच्च न देयः । तत्रैवान्यच्चिन्तितम् ।

भूतं भावि च देयं स्यात् कालेऽवस्थितमेव वा ।
आद्यः सर्व्वश्रुतेरन्त्योऽसम्भवाधन्ययोस्तथा ॥

विश्वजिन्मया कर्त्तव्य इत्यध्यवसायादूर्द्ध्वं दक्षिणाकालात्
पूर्व्वं यत् स्वेन भोग्यं स्वं चितं यद्भूतम्, यच्च दक्षिणाकाला-
दूर्द्ध्वं भविष्यत्येवेति निश्चितं तद्भावि, तदुभयमपि सर्व्वपदार्थ-
त्वाद्दातव्यमिति चेत् । मैवम् । भूतस्य विनाशसम्भवात् भावि-
नस्तदानीमप्राप्तत्वात् अविद्यमानस्य दानायोगाच्च दक्षिणा-
कालेऽवस्थितमेव सर्व्वं देयम् । तत्रैवान्यच्चिन्तितम् ।

दक्षिणाक्रतुभुत्त्यर्थं त्रयं देयमुतेष्यते ।
शिष्टाथवा दक्षिणार्थमेवाद्यः सर्व्वशब्दतः ॥
क्रतुशेषस्तदाबाध्यः प्रधानत्वादबाधनात् ।
सध्योन्त्यो दक्षिणार्थस्यानुवादात् सर्व्वतोविधेः ॥

प्रकृतौ कर्म्मारम्भ एव यजमानेनात्मीयं धनञ्च वचन-बलात्त्रिधा व्यवस्थापितम्। इदं मे भुक्त्यर्थमिदं मे यज्ञार्थ-मिदं मे दक्षिणार्थमिति। तदेतत्त्रयमपि दक्षिणार्थत्वाद्दा-तव्यमित्येकः पक्षः। दक्षिणा हि माध्यन्दिने सवने दीयते। तत ऊर्द्ध्वं तृतीयसवनमारभ्योदवसानीयान्तः क्रतुभागो-ऽवशिष्टः। स चन्द्रलाभाद्बाध्येत। न चाङ्गभूतया दक्षिणया प्रधानस्य क्रतोर्बाधो युक्तः। ततस्तद्बाधनाय क्रत्वर्थं भाग-मवस्थाप्यावशिष्टं सर्व्वं देयमिति द्वितीयपक्षः। यद्दक्षिणा-त्वेन विधीयते तत् सर्व्वमित्यनूद्यविधानाद्दक्षिणार्थभाग एव दातव्य इति सिद्धान्तः। अष्टमाध्याये प्रथमपादे चि-न्तितम्।

इष्टेः सोमस्य वा धर्म्मा विश्वजित् प्रमुखेष्विह।

अविशेषादैष्टिकाः स्युः सोमस्याव्यक्तिसाम्यतः॥

विश्वजिता यजेत। अभिजिता यजेता द्वादशाहेन यजेते-त्यादिषु नियामकाभावादिष्टिसोमयोरन्यतरस्य धर्म्मा इष्टया ग्रहीतव्याः। मैवम्। अव्यक्तलिङ्गेन सोमसाम्यादुत्पत्तिवाक्ये देवतानभिधानमव्यक्तिस्तस्मात् सोमस्य धर्म्मानतिदिशेत्॥

इति सप्तमोऽनुवाकः॥ ७॥

## अथाष्टमोऽनुवाकः।

सप्तमे विरोहणादिप्रायश्चित्तमुक्तम्। अथाष्टमे शुद्धि-हेतवो मन्त्रा उच्यन्ते। ते चानारभ्याधीतं प्रकृतिगामीति

न्यायेन प्रकृतौ विनियोक्तव्याः। तत्रापि शुद्धिलिङ्गेन शोधन-
क्रियासम्बन्धिन एते भवन्ति। सा च क्रिया सोमप्रकरणे
दीक्षितसंस्कारेष्वाम्नाता, दर्भपुञ्जीलैः पवयतीति। तत्रा-
ध्वर्य्यवा मन्त्राश्चित्पतिस्त्वा पुनात्वित्यादिकास्तत्प्रकरण एव
समाम्नाताः। अतः परिशेषात् पुनीमह इत्युत्तमपुरुषलि-
ङ्गाच्च पाव्यमानस्य यजमानस्य जप इति गम्यते। अतएव
सूत्रकारेणोक्तम्, पाव्यमानो जपति तस्य ते पवित्रपत इति
च पवमानः। सुवर्ज्जन इत्यस्मिन्ननुवाके प्रथमामृचमाह,
"पवमानः सुवर्ज्जनः। पवित्रेण विचर्षणिः। यः पोता
स पुनातु मा" इति। यो देवः पोता सर्व्वेषां शोधयिता
स देवः पवित्रेण शुद्धिसाधनेनास्मदीयजपध्यानादिना मां
पुनातु शोधयतु। कीदृशः पोता पवमानः शोधनकुशलः
सुवर्ज्जनः स्वर्ग एवोत्पन्नः विचर्षणिः विविधशोधनप्रका-
राभिज्ञः॥

अथ द्वितीयामाह। "पुनन्तु मा देवजनाः। पुनन्तु मन-
वो धिया। पुनन्तु विश्व आयवः" इति। ये कल्पादौ स्वर्ग-
लोकेषु समुत्पन्नत्वेन देवरूपा जनाः, ये च स्वायम्भुवमनुप्रभृ-
तयः ऋषयः, येऽपि स्वकर्म्मवशान्मनुष्यलोकं आयन्तीत्यायवो
मनुष्याः सदाचारपराः शुश्रुवांसः, ते विश्वे सर्व्वेऽपि धिया-
ऽनुग्रहबुद्ध्या मां पुनन्तु॥

अथ तृतीयामाह। "जातवेदः पवित्रवत्। पवित्रेण पुनी-
हि मा। शुक्रेण देवदीद्यत्। अग्ने क्रत्वाक्रतूꣳरनु" [१] इति।

हे जातवेदः उत्पन्नसर्व्वजगदभिज्ञाग्ने देव शुक्रेण दीद्यत् भास्वत् दीप्त्या भासमानस्त्वं क्रतूꣳ रनु अस्मदनुष्ठेयान् कर्म्मविशेषाननुसृत्य पवित्रेण क्लाशोधकेन त्वत्सङ्कल्पेन पवित्रवदस्मदनुष्ठितं कर्म्म शुद्धियुक्तं यथा भवति तथा मां पुनीहि शोधय ॥

अथ चतुर्थीमाह। "यत्ते पवित्रमर्च्चिषि। अग्ने विततमन्तरा। ब्रह्म तेन पुनीमहे" इति। हे अग्ने ते तवार्च्चिषि ज्वालायां अन्तरा मध्ये विततं विस्तृतं यत् पवित्रं शुद्धिसाधनं ब्रह्म प्रवृद्धमस्ति तेन वयं पुनीमहे ॥

अथ पञ्चमीमाह। "उभाभ्यां देव सवितः। पवित्रेण सवेन च। इदं ब्रह्म पुनीमहे" इति। हे सवितर्देव त्वदीयं यत् पवित्रं शुद्धिसाधनं यश्च सवः कर्म्मस्वस्मद्विषयं प्रेरणं ताभ्यां उभाभ्यामिदं ब्रह्म परिवृढं कर्म्म पुनीमहे शोधयामः ॥

अथ षष्ठीमाह। "वैश्वदेवी पुनती देव्यागात्। यस्यै बह्वीस्तनुवो वीतपृष्ठाः। तया मदन्तः सधमाद्येषु। वयꣳ स्याम पतयो रयीणाम्" [२] इति। सर्व्वदेवसम्बन्धिनी या देवी शोधनकुशला सास्मान् पुनती शोधयन्ती आगादागच्छतु। यस्यै यस्या देव्यास्तनुवः शुद्धिहेतवो देहविशेषाः वीतपृष्ठाः कान्तस्तुतयः तया देव्याऽनुगृहीताः सधमाद्येषु ऋत्विग्भिः सह हर्षयोग्येषु कर्म्मसु मदन्तो हृष्यन्तो वयं रयीणां धनानां पतयः स्याम ॥

अथ सप्तमीमाह । "वैश्वानरो रश्मिभिर्मा पुनातु । वातः प्राणेनेषिरो मयोभूः । द्यावापृथिवी पयसा पयोभिः । ऋतावरी यज्ञिये मा पुनीताम्" इति । विश्वेषां नराणां हितोऽग्निरादित्यो वा देवः स्वकीयरश्मिभिर्मां पुनातु । वातो वायुदेवः प्राणेनेषिरः प्राणरूपेण देहेषु गच्छन् मयोभूः सुखस्य भावयिता भवतु । द्यावापृथिव्यौ च ऋतावरी सत्यवत्यौ यज्ञिये यज्ञाय हिते सत्यौ पयसा जलेन पयोभिः क्षीरादिरसैश्च मां पुनीताम् ॥

अथाष्टमीमाह । "बृहद्भिः सवितस्तृभिः । वर्षिष्ठैर्देवमन्मभिः । अग्ने दक्षैः पुनीहि मा" इति । हे सवितः कर्मसु प्रेरकाग्ने देव मन्मभिः मननैरस्मदनुग्रहविषयैर्मां पुनीहि । कीदृशैर्बृहद्भिः महद्भिरादरयुक्तैस्तृभिः पापतरणसाधनैर्वर्षिष्ठैश्चिरकालानुवृत्त्या वृद्धतमैर्दक्षैः शोधनकुशलैः ॥

अथ नवमीमाह । "येन देवा अपुनत । येनापो दिव्यं कशः । तेन दिव्येन ब्रह्मणा [२] । इदं ब्रह्म पुनीमहे" इति । येन शुद्धिसाधनेन देवाः पूर्वान् यजमानान् अपुनत । कशगताविति धातोरुत्पन्नः शकारान्तः कशशब्दो गतिवाची । येन शुद्धिसाधनेन आपो देवताः दिव्यंकशोऽपुनत दिवलोकविषयां गतिं शोधितवन्तः । दिव्येन द्युलोकयोग्येन ब्रह्मणा परिवृढेन तेन शुद्धिसाधनेनेदं ब्रह्मानुष्ठीयमानं परिवृढं कर्म पुनीमहे ॥

अथ दशमीमाह । "पावमानीरध्येति । ऋषिभिः सम्भृ-

तꣳ रसम्। सर्व्वꣳ स पूतमश्नाति। स्वदितं मातरिश्वना" इति। यः पुमान् पावमानीः शोधकदेवतासम्बन्धिनीः एता ऋचः अध्येति पठति, अर्थतः स्मरति स पुरुषः सर्व्वं रसं सारभूतं फलमश्नाति भुङ्क्ते। कीदृशं रसं ऋषिभिः सम्भृतं मन्त्रैस्तद्भिज्ञैर्मुनिभिश्च सम्पादितम्। अतएव पूतं शुद्धं मातरिश्वना वायुना स्वदितं स्वादूकृतम्॥

अथैकादशीमाह। "पावमानीर्यो अध्येति। ऋषिभिः सम्भृतꣳ रसम्। तस्मै सरस्वती दुहे। क्षीरꣳ सर्पिर्मधूदकम्" इति। याः पावमानीरध्येति तस्मै पुरुषाय सरस्वती रसं दुहे। कीदृशं, क्षीरादिरूपम्॥

अथ द्वादशीमाह। "पावमानीः स्वस्त्ययनीः [४]। सुदुघा हि पयस्वतीः। ऋषिभिः सम्भृतो रसः। ब्राह्मणेष्वमृतꣳ हितम्" इति। याः पावमान्य ऋचस्ताः स्वस्त्ययनीः क्षेमप्रापिकाः सुदुघाः सुष्ठुफलं दुहानाः पयस्वतीः क्षीरादिरसहेतवश्च प्रसिद्धास्ता अस्माननुगृह्णन्त्विति शेषः। ऋषिभिर्मन्त्रदर्शिभिर्मुनिभिः रसः फलसारः सम्भृतोऽस्मासु सम्पादितोऽस्तु। ब्रह्ममन्त्रास्तत्पाठका ब्राह्मणाः तेष्वस्मासु अमृतमविनाशिफलं हितं सम्पादितमस्तु॥

अथ त्रयोदशीमाह। "पावमानीर्दिशन्तु नः। इमं लोकमथो अमुम्। कामान्त्समर्द्धयन्तु नः। देवीर्देवैः समाभृताः" इति। देवैः इन्द्रादिभिः समाभृताः सम्पादिताः पावमानीः देवीः पवमानमन्त्राभिमानिन्यो देव्यो नोऽस्माकं लोकद्वयं

दिशन्तु प्रयच्छन्तु तत्रत्यान् कामान्नोऽस्मदर्थं मम्हद्धान् कुर्व्वन्तु॥

अथ चतुर्दशीमाह। "पावमानीः स्वस्त्ययनीः। सुदुघा हि घृतश्चुतः" इति। अन्यत्पूर्व्ववत्॥

अथ पञ्चदशीमाह। "येन देवाः पवित्रेण। आत्मानं पुनते सदा। तेन सहस्रधारेण। पावमान्यः पुनन्तु मा" इति। देवा इन्द्राद्या येन पवित्रेण शुद्धिसाधनेन सदा स्वदेहं शोधयन्ति। सहस्रावान्तरभेदयुक्तेन तेन साधनेन पावमान्य ऋचो मां पुनन्तु॥

अथ षोडशीमाह। "प्राजापत्यं पवित्रम्। शतोद्यामꣳ हिरण्मयम्। तेन ब्रह्मविदो वयम्। पूतं ब्रह्म पुनीमहे" इति। यत्पवित्रं शुद्धिसाधनं प्राजापत्यं प्रजापतिसम्बन्धिशतोद्यामं दर्भैर्निर्म्मितत्वात् शतसङ्ख्याकैरुद्यमैर्नाडीभिर्युक्तं हिरण्मयं पापहरणसाधनेन द्रव्येण निर्म्मितं तेन तादृशेन पवित्रेण ब्रह्मविदो वेदार्थविदो वयं पूतं ब्रह्म पूर्व्वमपि शुद्धं परिदृढं कर्म्म पुनीमहे भूयोऽपि शोधयामः॥

अथ सप्तदशीमाह। "इन्द्रः सुनीति सह मा पुनातु। सोमः स्वस्त्या वरुणः समीच्या। यमो राजा प्रमृणाभिः पुनातु माम्। जातवेदामोर्जयन्त्या पुनातु" [६] इति। इन्द्रः सुनीत्या शोभनफलप्रापयिकया देव्या सह मां पुनातु। सोमः स्वस्त्या क्षेमप्रापयिकया देव्या सह मां पुनातु। वरुणः समीच्या अनुकूलया देव्या सह मां पुनातु। यमो राजा प्रमृणाभिः प्रकर्षेण मारिकाभिः

देवीभिः सह मां पुनातु। जातवेदा ऊर्जयन्त्या क्षीरादि-रसप्रापयिकया देव्या सह मां पुनातु ॥

इति अष्टमोऽनुवाकः ॥ ८ ॥

अथ नवमोऽनुवाकः।

अष्टमे शुद्ध्यर्था मन्त्रा उक्ताः। तावता सोमशेषमवशेषमव-स्थाप्य नवमे राजसूयगतचातुर्मास्यशेष उच्यते। तानि चातु-र्मास्यानि विधातुमादावाख्यायिकामाह। "प्रजा वै सत्र-मासत तपस्तप्यमाना अजुह्वतीः। देवा अपश्यञ्चमसं घृतस्य पूर्णं स्वधाम्। तमुपोदतिष्ठन्तमजुहवुः। तेनार्द्धमास ऊर्ज्ज-मवारुन्धत। तस्मादर्द्धमासे देवा इज्यन्ते" इति। पुरा कदा-चिद्देवपितृमनुष्यपश्वसुराख्याः प्रजाः सत्रमन्वतिष्ठन्। सत्र-सदृशं सुकृतं सम्पादितवन्त इत्यर्थः। किं कुर्व्वन्त्यः उपवासा-दिरूपं तपोऽनुतिष्ठन्त्यः अजुह्वतीः न कञ्चिदपि होमं कुर्व्वन्त्यः, तासां प्रजानां मध्ये देवाः कञ्चित्कालं तपस्तप्त्वा घृतपूरितं स्वोचितान्नधारकं कञ्चिच्चमसं दृष्ट्वा तं प्राप्य समीप उत्थाय तद्धोमेनैकैकस्मिन्नर्द्धमासे स्वैर्भोज्यं रसविशेषं प्राप्त-वन्तः। तस्मात् कारणादर्द्धमासे पौर्णमास्यमावास्यायां देवा दर्शपूर्णमासाभ्यामिज्यन्ते ॥

अथ देवे पित्रादीनां तपःफलं दर्शयति। "पितरोऽप-श्यञ्चमसं घृतस्य पूर्णं स्वधाम्। तमुपोदतिष्ठन्तमजुहवुः। तेन मास्यूर्ज्जमवारुन्धत। तस्मान्मासि पितृभ्यः क्रियते। मनुष्या अपश्यञ्चमसं घृतस्य पूर्णं स्वधाम् [१]। तमुपोदतिष्ठन्तमजु-

हुवुः। तेन द्वयीमूर्जमवारुन्धत। तस्माद्विरह्नो मनुष्येभ्य उप-ह्रियते। प्रातश्च सायञ्च। पशवोऽपश्यञ्चमसं घृतस्य पूर्णꣳ स्वधाम्। तमुपोदतिष्ठन्तमजुहवुः। तेन त्रयीमूर्जमवारुन्धत। तस्मात् त्रिरह्नः पशवः प्रेरते। प्रातः सङ्गवे सायम्। असुरा अपश्यञ्चमसं घृतस्य पूर्णꣳ स्वधाम् [२]। तमुपोदतिष्ठन्तम-जुहवुः। तेन संवत्सर ऊर्जमवारुन्धत" इति। पितृभिरेक-स्मिन्मासे एकभोज्यान्नस्य प्राप्तत्वात् प्रतिमासममावास्यायां पिण्डपितृयज्ञः क्रियते। मनुष्यैरेकस्मिन्नेवाह्नि कालद्वयवर्त्तिनो भोज्यस्य प्राप्तत्वात् प्रातःकाले सायङ्काले च भुञ्जते। पश्वभि-मानिभिर्देवैरेकस्मिन्नह्नि कालत्रयभोज्यस्यान्नस्य प्राप्तत्वात् त्रिषु कालेषु पशवः तृणभक्षणार्थं सञ्चरन्ति। तत्तन्मध्यकाले तु रोमन्थं कुर्व्वन्तो वर्त्तन्ते। असुरास्त्वेकस्मिन् संवत्सरे स्वभोज्य-मन्नं प्राप्तवन्तः॥

अथ देवैरनुष्ठितं व्यापारं दर्शयति। "ते देवा अमन्यन्त। अमी वा इदमभूवन्। यद्वयꣳ स्म इति। त एतानि चातु-र्मास्यान्यपश्यन्। तानि निरवपन्। तैरेवैषां तामूर्जमवृञ्जत। ततो देवा अभवन्। परासुराः" [३] इति। ते देवा मिलित्वा एवं विचारितवन्तः यदैश्वर्य्यं वयमिदानीं प्राप्य वर्त्तामहे तत् इदं सर्व्वममी असुरा एव प्राप्तवन्तः। यस्मात् संवत्सरे सकृद्भुक्त्वा तृप्ताः सन्तः, पुनः संवत्सरसमाप्तिपर्य्यन्तं स्वभोजन-व्यापाराभावात् निरन्तरं युध्यन्तोऽस्मान् क्लेशयिष्यन्ति। एवं विचार्य्य ते देवा असुरविनाशहेतुत्वेनैतानि वक्ष्यमाणानि

वैश्वदेवादीनि चातुर्मास्यानि दृष्टवन्तः। यस्मात् संवत्सरे तैर्नि-र्वापेणासुराणां भोज्यं विनाशितवन्तः॥

ततो देवा विजयं प्राप्ताः असुराश्च पराभूता इत्यमाख्यायिकया चातुर्मास्यानामत्यन्तं प्रशस्तत्वं दर्शयितुं दर्शपूर्णमास्यादिप्रशंसापूर्व्वकं तत्तत्प्रशंसामुपन्यस्य दर्शादिविध्यनुवादपुरःसरं तद्विधत्ते। "यद्यजते। यामेव देवा ऊर्ज्जमवारुन्धत। तां तेनावरुन्धे। यत् पितृभ्यः करोति। यामेव पितर ऊर्ज्जमवारुन्धत। तां तेनावरुन्धे। यदावसथेऽन्नꣳ हरन्ति। यामेव मनुष्या ऊर्ज्जमवारुन्धत। तां तेनावरुन्धे। यद्दक्षिणां ददाति [४]। यामेव पशव ऊर्ज्जमवारुन्धत। तां तेनावरुन्धे। यच्चातुर्मास्यैर्यजते। यामेवासुरा ऊर्ज्जमवारुन्धत। तां तेनावरुन्धे। भवत्यात्मना। परास्य भ्रातृव्यो भवति" इति। यजते दर्शपूर्णमासावनुतिष्ठति। पितृभ्यः करोति। पिण्डपितृयज्ञमनुतिष्ठति। आवसथेऽन्नꣳ हरन्ति। वैश्वदेवान्ते अतिथीनन्नेन पूजयन्ति। अन्वाहार्य्यगवादिरूपां दक्षिणां ददाति। तत्फलप्राप्तये दर्शपूर्णमासादयः कर्त्तव्याः। एवमत्रापि फलप्राप्तये चातुर्मास्यानि यजेत। तत आत्मना भवति। स्वयमेव जययुक्तो भवति। भ्रातृव्यस्तु पराभवति॥

अत्र चातुर्मास्यविधौ तात्पर्य्यं दर्शयितुं पुनः प्रशंसति। "विराजो वा एषा विक्रान्तिः। यच्चातुर्मास्यानि। वैश्वदेवेनास्मिँल्लोके प्रत्यतिष्ठत्। वरुणप्रघासैरन्तरिक्षे। साकमेधैरमुष्मिँल्लोके। एष ह त्वा वै तत्सर्व्वं भवति। य एवं विद्वाꣳश्चातु-

मास्यैर्यजते" [५] इति । विशेषेण राजत इति विराट् । प्रजापतिस्तस्य विशेषेण लोकत्रयाक्रमणसाधनानि चातुर्मास्यानि वैश्वदेवादीनि चतुर्षु मासेष्वनुष्ठेयत्वाच्चातुर्मास्यानि । फाल्गुन्यां पौर्णमास्यां वैश्वदेवाख्यं पर्व्वानुष्ठाय मासचतुष्टयमतीत्याषाढ्यां पौर्णमास्यां वरुणप्रघासाख्यं कर्मानुष्ठाय पुनर्मासचतुष्टयमतीत्य कार्त्तिक्यां पौर्णमास्यां तदीयचतुर्द्दश्यां वा साकमेधाख्यं पर्व्वानुष्ठेयम् । एतैर्यथा प्रजापतेर्लोकत्रये प्रतिष्ठा एवमन्योऽप्येतत् सर्व्वं प्राप्नोति ॥

इति नवमोऽनुवाकः ॥ ९ ॥

अथ दशमोऽनुवाकः ।

नवमे चातुर्मास्यानि विहितानि । अथ दशमे तत्र विशेषं विधातुं प्रस्तौति । "अग्निर्वाव संवत्सरः । आदित्यः परिवत्सरः । चन्द्रमा इदावत्सरः । वायुरनुवत्सरः" इति । प्रभवविभवादीनां षष्टिसंवत्सराणां मध्ये एकैकसंवत्सरपञ्चक एकैकं युगम् । तस्मिन् युगे वर्त्तमानानां पञ्चानां संवत्सराणां क्रमेण संवत्सरः परिवत्सर इदावत्सरोऽनुवत्सर इद्वत्सरा इत्येतानि नामधेयानि । तथा चोक्तम्,

चान्द्राणां प्रभवादीनां पञ्चके पञ्चके युगे ।
सम्परीदान्विदित्येतच्छब्दपूर्व्वास्तु वत्सराः ॥ इति ।

तत्र संवत्सरादीनां चतुर्णामभिमानित्वात् अग्न्यादयस्तद्रूपाः ॥

एवं प्रस्तुत्य वैश्वदेवाख्ये कर्मणि संवत्सरस्वरूपाग्निप्राप्ति-

प्रतिपादनपुरःसरं कञ्चिन्मन्त्रविशेषं विधत्ते । "यद्वैश्वदेवेन यजते । अग्निमेव तत्संवत्सरमाप्नोति । तस्माद्वैश्वदेवेन यजमानः । संवत्सरीणाꣳ स्वस्तिमाशास्त इत्याशासीत" इति । वैश्वदेवाख्यस्य प्रथमपर्व्वणः संवत्सररूपाग्निप्राप्तिहेतुत्वात्तद्यागकाले तदीयसूक्तवाकमध्ये संवत्सरीणामिति वाक्यं पठेत् । सूक्तवाके हि भूयो हविष्करणमाशास्ते दिव्यं धामाशास्त इति वाक्यद्वयं पठितं तयोर्वाक्ययोर्मध्ये संवत्सरीणामिति वाक्यं पठेत् । अतएव सूत्रकार उदाहृत्य पठति, संवत्सरीणाꣳ स्वस्तिमाशास्ते दिव्यं धाम शास्त इति । सूक्तवाकस्याशीःषु होतानुवर्त्तयत इति ॥

अथ द्वितीयतृतीयपर्व्वणोः परिवत्सरेदावत्सररूपादित्यचन्द्रमसोः प्राप्तिप्रतिपादनपुरःसरं क्रमेण मन्त्रविशेषं विधत्ते । "यद्वरुणप्रघासैर्यजते । आदित्यमेव तत्परिवत्सरमाप्नोति [१] । तस्माद्वरुणप्रघासैर्यजमानः । परिवत्सरीणाꣳ स्वस्तिमाशास्त इत्याशासीत । यत्साकमेधैर्यजते । चन्द्रमसमेव तदिदावत्सरमाप्नोति । तस्मात्साकमेधैर्यजमानः । इदावत्सरीणाꣳ स्वस्तिमाशास्त इत्याशासीत" इति ॥

इत्थं चातुर्मास्यावयवरूपाणि वैश्वदेवादीनि त्रीणि पर्व्वाणि तदीयमन्त्रविशेषांश्च विधाय तदवयवरूपं महापितृयज्ञं विधत्ते । "यत्पितृयज्ञेन यजते । देवानेव तदन्ववस्यति" इति । तत्तेन पितृयज्ञेन पितृमद्विशेषणयुक्तसोमादीन् देवानन्ववस्यति अनुक्रमेण प्रीणयति ॥

अथ चतुर्थपर्व्वणि अनुवत्सररूपवायुप्राप्तिप्रतिपादनपुरःसरं मन्त्रविशेषं विधत्ते। "अथवा अस्य वायुश्चानुवत्सरश्चाप्रीतावु-च्छिष्येते। यच्छुनासीरीयेण यजते [२]। वायुमेव तदनु-वत्सरमाप्नोति। तस्माच्छुनासीरीयेण यजमानः। अनुवत्सरी-णाꣳ स्वस्तिमाशास्त इत्याशासीत" इति। वैश्वदेवादिभि-स्त्रिभिः पर्व्वभिः संवत्सरादयस्तथा कालास्तदभिमानिदेवा अग्न्यादयः प्रीता अनुवत्सरः कालः तदभिमानी वायुश्चेत्येता-वुभौ पूर्व्वमप्रीताववशिष्टौ। सुनासीरीयाख्येन चतुर्थेन पर्व्वणा तदुभयप्रीतिर्भवति। तस्माच्छुनासीरीयेण यजमानः अनुवत्स-रीणाꣳ स्वस्तिमाशास्त इत्याशासीतेति पूर्व्ववद्व्याख्येयम्॥

पर्व्वचतुष्टयसङ्घात्मकं चातुर्मास्ययागं प्रशंसति। "संवत्सरं वा एष ईप्सतीत्याहुः। यश्चातुर्मास्यैर्यजत इति। एष ह वै संवत्सरमाप्नोति। य एवं विद्वाꣳश्चातुर्मास्यैर्यजते" इति। यः पुमान् पर्व्वचतुष्टयोपेतैः चातुर्मास्यैर्यजते। स एष संवत्सरा-भिमानिनं प्रजापतिं प्राप्तुमिच्छतीति एवमभिज्ञा आहुः। तस्मात्तद्याजी संवत्सराभिमानिनं प्राप्नोति॥

अथ वैश्वदेवाख्यं कर्म्म प्रशंसति। "विश्वे देवाः समयजन्त। तेऽग्निमेवायजन्त। त एतं लोकमयजन् [३]। यस्मिन्नग्निः। यद्वैश्वदेवेन यजते। एतं मे लोकं यजति। यस्मिन्नग्निः। अग्नेरेव सायुज्यमुपैति" इति। विश्वदेवा इति देवगणविशेषाः। तद्गणस्था देवा यदा सम्यग्यष्टुमुपक्रान्तवतः। तदानीमग्निमे-वेष्ट्वा यस्मिंल्लोकेऽग्निर्वर्त्तते एतमेव लोकं ते प्राप्नुवन्। अतो-

ऽन्योऽपि वैश्वदेवेनेष्ट्वा यस्मिन्नग्निर्वर्त्तते तं लोकं प्राप्य तस्याग्नेः सायुज्यं सहावस्थानमेव प्राप्नोति ॥

पुनरपि वैश्वदेवं प्रकारान्तरेण प्रशंसति। "यदा वैश्वदेवेन यजते। अथ संवत्सरस्य गृहपतिमाप्नोति। यदा संवत्सरस्य गृहपतिमाप्नोति। अथ सहस्रयाजिनमाप्नोति। यदा सहस्रयाजिनमाप्नोति [४]। अथ गृहमेधिनमाप्नोति। यदा गृहमेधिनमाप्नोति। अथाग्निर्भवति। यदाग्निर्भवति। अथ गौर्भवति। एषा वै वैश्वदेवस्य मात्रा। एतद्वा एतेषामवमम्। अतोऽतो वा उत्तराणि श्रेयाꣳसि भवन्ति। यद्विश्वे देवाः समयजन्त। तद्वैश्वदेवस्य वैश्वदेवत्वम्" [५] इति। संवत्सराख्यस्य सत्रस्य गवामयनस्य यजमानेषु मुख्यो गृहपतिः सहस्रदक्षिणायुक्तेनाप्तोर्यामादिना यजमानः सहस्रयाजी स एकः श्रुतिस्मृत्युदितगार्हस्थ्यानुष्ठायी गृहमेधी, एते गृहपत्यादयो मनुष्येषु श्रेष्ठाः। अग्निर्देवतात्मा गौर्गवाभिमानिदेवविशेषः। यस्मिन् दिने वैश्वदेवेन यजते तस्मिन्नेव दिने गृहपतिः सहस्रयाजी गृहमेधी वह्निगवाख्यदेवानां महिम्ना योग्यो भवति। येयं फलक्लृप्तिरुक्ता एषैव वैश्वदेवपर्व्वणो मात्रा इयदेव फलमित्यर्थः। एतच्च वैश्वदेवफलमेतेषां इतरपर्व्वफलानां मध्ये चरमं अत्यल्पं, अतो त एकैकस्मात् सर्व्वफलात् उत्तरोत्तरपर्व्वफलानि अत्यन्तं प्रशस्तानि। यस्माद्विश्वेदेवा एतत्पर्व्व सम्यगनुष्ठितवन्तः। तस्मादस्य वैश्वदेवत्वं सम्पन्नम् ॥

द्वितीयं पर्व्व प्रशंसति। "अथादित्यो वरुणꣳ राजानं वरुणप्रघासैरयजत। स एतं लोकमयजत्। यस्मिन्नादित्यः। यद्वरुणप्रघासैर्यजते। एतमेवं लोकं जयति। यस्मिन्नादित्यः। आदित्यस्यैव सायुज्यमुपैति। यदादित्यो वरुणꣳ राजानं वरुणप्रघासैरयजत। तद्वरुणप्रघासानां वरुणप्रघासत्वम्" इति। प्रकृष्टो घासो भक्ष्यविशेषः सेषसम्बन्धीयेषु हविर्विशेषेषु ते प्रघासाः। ते च वरुणसम्बन्धिनः। वरुणपाशविमोकार्थमनुष्ठीयमानत्वात्। तथा च राजसूयप्रकरणे समाम्नायते, तैर्वै स प्रजा वरुणपाशादमुञ्चदिति। तैरेतैर्वरुणप्रघासैरादित्यो वरुणꣳ राजानमिष्ट्वा यस्मिन्निदानीमादित्यो दृश्यते तमेतं लोकमजयत्। अतोऽन्योऽपि तं लोकं जित्वादित्यस्य सायुज्यमाप्नोति। वरुणमुद्दिश्येज्यमानत्वात् एते वरुणप्रघासनामका हविर्विशेषाः सम्पन्नाः॥

तृतीयं पर्व्व प्रशंसति। "अथ सोमो राजा छन्दाꣳसि साकमेधैरयजत [६]। स एतं लोकमयजत्। यत्साकमेधैर्यजते। एतमेव लोकं जयति। यस्मिꣳश्चन्द्रमा विभाति। चन्द्रमस एव सायुज्यमुपैति। सोमो वै चन्द्रमाः। एष ह वै साक्षात् सोमं भक्षयति। य एवं विद्वान् साकमेधैर्यजते। यत्सोमश्च राजा छन्दाꣳसि च समैधन्त [७]। तत्साकमेधानाꣳ साकमेधत्वम्"इति। सोमो राजा साकमेधाख्यैः हविर्भिश्छन्दोदेवान् पूजयित्वा यस्मिन्नयं चन्द्रमा विशेषेण भासते तमेतं लोकमजयत्। एवमन्योऽपि तं लोकं जित्वा चन्द्रमसः सायुज्यं

प्राप्नोति। एष यज्ञोऽप्यभिषूयमाणः सोम एव चन्द्रमाः चन्द्रमस एतदभिमानित्वादतश्चन्द्रप्रसादेन कालव्यवधानमन्तरेण साकमेधयाजी यागं कृत्वा सोमं भक्षयति। यस्मादस्मिन् यज्ञे पूज्यपूजकभावेन छन्दोदेवताः सोमस्य समैधन्त सम्भूय वृद्धिं प्राप्तास्तस्मात् साकमेधं ते वर्द्धन्ते, एभिर्हविर्विशेषैरिति तेषां साकमेधनाम सम्पन्नम्॥

पितृयज्ञं प्रशंसति। "अथर्त्तवः पितरः प्रजापतिं पितरं पितृयज्ञेनायजन्त। त एतं लोकमजयन्। यस्मिन्नृतवः। यत्पितृयज्ञेन यजते। एतमेव लोकं जयति। यस्मिन्नृतवः। ऋतूनामेव सायुज्यमुपैति। यदृतवः। पितरः प्रजापतिं पितरं पितृयज्ञेनायजन्त। तत्पितृयज्ञस्य पितृयज्ञत्वम्" [८] इति। वसन्ताद्यृतुदेवताः प्राणिनां पितरः प्राण्युत्पत्तेः कालाधीनत्वात् तेषामृतूणां पिता प्रजापतिः। तथा च ऋतवः प्रजापतिं स्वपितरं पितृयज्ञेन पूजयित्वा यस्मिन्निदानीं वसन्तादयो देवा वर्त्तन्ते। तं लोकमजयन् एवमन्योऽपि तं लोकं जित्वा वसन्तादीनां सायुज्यं प्राप्नोति। ऋत्वात्मकाः पितरो यजन्त्यनेनेत्ययं पितृयज्ञः। अथवा प्रजापत्यात्मकः पितेज्यतेऽनेनेति पितृयज्ञः। पितृकर्त्तृकत्वेन पितृकर्मकत्वेन वा पितृसम्बन्धी यज्ञः इत्यर्थः॥

त्र्यम्बकहवींषि प्रशंसति। "अथौषधय इमं देवं त्र्यम्बकैरयजन्त प्रथेमहीति। ततो वै ता अप्रथयन्त। य एवं विद्वाꣳस्त्र्यम्बकैर्यजते। प्रथते प्रजया पशुभिः" इति। ओषधि-

देवता वयं प्रथेमहि विस्तृतीभवेमेत्यभिप्रेत्य त्र्यम्बकहविर्भि-रिमं रुद्रं देवमिष्ट्वा प्रथिता अभवन्। एवमन्योऽपि तमिष्ट्वा प्रजया पशुभिः प्रथितो भवति। त्र्यम्बकस्य रुद्रस्य सम्बन्धेन हविषां त्र्यम्बकनामेत्युन्नेयम्॥

चतुर्थं पर्व्व प्रशंसति। "अथ वायुः परमेष्ठिनꣳ शुनासी-रीयेणायजत। स एतं लोकमजयत्। यस्मिन् वायुः। यच्छु-नासीरीयेण यजते। एतमेव लोकं जयति। यस्मिन् वायुः [८]। वायोरेव सायुज्यमुपैति" इति। वायुश्चतुर्थपर्व्वणा पर-मेष्ठिनमाराध्य यस्मिन्निदानीं वायुर्वर्त्तते तमेतं लोकं जित-वान्। एवमन्योऽपि तं लोकं जित्वा वायोः सायुज्यं प्रा-प्नोति। इन्द्राय शुनासीराय पुरोडाशं द्वादशकपालमिति शुनासीरसम्बन्धस्योक्तत्वात् अस्य पर्व्वणः शुनासीरीयत्वम्। आग्नेयमष्टाकपालं निर्वपति सौम्यं चरुमित्यनुवाकनिरूपितो वैश्वदेवः ऐन्द्राग्नमेकादशकपालं मारुतीमामिक्षामित्यनुवाकेन निरूपिता वरुणप्रघासा। आग्नये नीकावते पुरोडाशमष्टाक-पालं निर्वपतीत्यनुवाकेन निरूपिताः साकमेधाः। सोमाय पितृमते पुरोडाशꣳ षट्कपालमित्यनेन निरूपितः पितृयज्ञः। प्रतिपुरुषमेककपालां निर्वपतीत्यनेन निरूपितानि त्र्यम्बकाणि। ऐन्द्राग्नं द्वादशकपालं वैश्वदेवं चरुमित्यनुवाकैकदेशेन निरू-पितः शुनासीरीयः। अनेन शुनासीरीयेण सह चत्वारि पर्व्वाणि चतुर्षु चतुर्षु निष्पाद्यमानत्वात् चातुर्मास्यानीत्युच्यन्ते॥

एते चातुर्मास्ययाजिनः तेषां पुनरावृत्तिरहितं फलं

विचारेण दर्शयति । "ब्रह्मवादिनो वदन्ति स चातुर्मास्य-याजी मीयता३ न प्रमीयता३ इति । जीवन् वा एष ऋतू-नप्येति । यदि वसन्ते प्रमीयते । वसन्तो भवति । यदि ग्रीष्मे ग्रीष्मः । यदि वर्षासु वर्षाः । यदि शरदि शरत् । यदि हेमन् हेमन्तः ॥ ऋतुर्भूत्वा संवत्सरमप्येति । संवत्सरः प्रजा-पतिः । प्रजापतिर्वावैषः" [१०] इति । दर्शपूर्णमासयाजिनः तत्फलं प्राप्य तस्यानित्यत्वात्ततः प्रमीयन्ते पुनरावर्त्तन्ते । तथा चातुर्मास्ययाजी फलावस्थातः प्रच्यवते न वेति ब्रह्मवा-दिनां प्रश्नः । न प्रच्यवत इति अभिप्रेत्याभिज्ञस्योत्तरम् । अयमनुष्ठाता अनुष्ठानानन्तरमेव ऋतुदेवताः प्राप्नोति । य-द्यपि देवताशरीरमन्यैर्न दृश्यते तथाप्यन्तर्बीजरूपेणाङ्कुरितं वर्त्तते । अतएव देवताजन्मव्यतिरेकेण जन्मान्तरं न भवति । सामान्येनोक्तामृतुप्राप्तिमेव वसन्तादिवाक्यानि विस्पष्टीकुर्व्व-न्ति । यस्मिन् ऋतावस्य वर्त्तमानदेहपातः तद्देवतादेहः पूर्व्व-मङ्कुरितो विस्पष्टीभवति । एवमृतुदेहेन तद्भोगान् भुक्त्वा स संवत्सरदेवं प्रविशति । स च संवत्सरः प्रजापतिरूपः, स च प्रजापतिरेष एव शास्त्रैरिदानीमपि सर्व्वत्र वर्ण्यते । तस्मा-दयं फलावस्थातो न म्रियते । अस्य प्रपाठकस्यानुवाकार्थ-सङ्ग्रह उच्यते ।

दशानुवाका अत्र स्युराद्यो ग्रहविधिः स्मृतः ॥
श्रुताः सौत्रामणीमन्त्रा द्वितीयेऽथ तृतीयके ।
दोहप्रायश्चित्तिरग्निप्रायश्चित्तिश्चतुर्थके ॥

सोमाधिक्ये प्रतीकारः पञ्चमे सङ्सवे पुनः ।
षष्ठे प्रायश्चित्तिरुक्ता यूपारोहादिकारिता ॥
प्रायश्चित्तिः सप्तमेस्यात्पावमान्यजयोऽष्टमे ।
चातुर्मास्यान्युत्तरे स्युर्दशमे तत्प्रशंसनम् ॥
वेदार्थस्य प्रकाशेन तमो हार्द्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥
इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्ण-यजुर्ब्राह्मणे प्रथमकाण्डे चतुर्थप्रपाठके दशमोऽनुवाकः ॥ १० ॥
समाप्तश्चायं चतुर्थः प्रपाठकः ।

---

## तैत्तिरीय-ब्राह्मणभाष्ये

### प्रथमकाण्डे पञ्चमप्रपाठके

### प्रथमोऽनुवाकः ।

**हरिः ॐ ॥**

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
सोमयज्ञाद्या विहिताः चतुर्थे हि प्रपाठके ।
नक्षत्राख्येष्टका मन्त्रप्रमुखाः पञ्चमे श्रुताः ॥
अनारभ्योक्तितस्तेषां लिङ्गवाक्यानुसारतः ।
योजनीयास्तत्र तत्र न्यायाद्वा सम्प्रदायतः ॥

तत्र तु प्रथमानुवाके प्रोक्ता नक्षत्रेष्टका मन्त्राः क्वचिद्विकृतिरूपे चयने द्रष्टव्याः। यथाऽनारभ्याधीतं सामिधेनी साप्तदश्यं प्रकृते प्रत्यक्षश्रुतेन पाञ्चदश्येनावरुद्धायामवकाशमलभमानं विकृतौ निविशते। एवमेतेऽपि मन्त्राः प्रत्यक्षश्रुतैः कृत्तिकानक्षत्रमग्निर्देवतेत्यादिमन्त्रैरवरुद्धायां प्रकृतावकाशाभावात् विकृतौ निविशन्ते। तत्र प्रथमं मन्त्रमाह। "अग्नेः कृत्तिकाः। शुक्रं परस्ताज्ज्योतिरवस्तात्" इति। अग्निर्नक्षत्रस्य स्वामी तस्य स्वभूताः सप्तकृत्तिकाः अम्बदुलादयः। तासु मध्ये वर्त्तन्ते शुक्रं तेजः परस्तात् वर्त्तते। ज्योतिर्ज्वाला सा चावस्तादवरपार्श्वे वर्त्तते। तासामुभयपार्श्वयोः शुक्रज्योतिषोरभिमानिदेवते अत्यन्तदीप्तिमत्यौ परं दीपयत्यौ वर्त्तेते। एवमुत्तरेष्वपि मन्त्रेषु योज्यम्॥

द्वितीयं मन्त्रमाह। "प्रजापते रोहिणी। आपः परस्तादोषधयोऽवस्तात्" इति। प्रजापतिर्नक्षत्रस्वामी देवः तस्य स्वभूता रोहिणी मध्ये वर्त्तते। आप ओषधयस्य पार्श्वद्वये वर्त्तन्ते॥

तृतीयं मन्त्रमाह। "सोमस्येन्वका विततानि। परस्ताद्वयन्तोऽवस्तात्" इति। इन्वकाः मृगशीर्षसङ्गतास्तारकाः विततानि विस्तीर्णाः वयन्तः पटस्य निर्मातारो देवताविशेषाः॥

चतुर्थं मन्त्रमाह। "रुद्रस्य बाहू। मृगयवः परस्ताद्विक्षारोऽवस्तात्" इति। बाहुशब्देन द्विवचनान्तेन आर्द्रानक्षत्रमुपलक्ष्यते। बाहुवत् प्रयत्नहेतुत्वात्। मृगयवो व्याधविशेषा देवाः। विचारो विशिष्टो लक्ष्यवेधः॥

पञ्चमं मन्त्रमाह । "आदित्यै पुनर्वसू । वातः परस्तादार्द्रमवस्तात्" [१] इति । वातो वृष्टेः पूर्व्वभावी वायुः । आर्द्रं वृष्टिजन्यद्रवत्वम् ॥

षष्ठं मन्त्रमाह । "बृहस्पतेस्तिष्यः । जुह्वतः परस्ताद्यजमाना अवस्तात्" इति । जुह्वतो होमकर्त्तार ऋत्विजः यजमानाः स्वामिनः ॥

सप्तमं मन्त्रमाह । "सर्पाणामाश्लेषाः । अभ्यागच्छन्तः परस्तादभ्यानृत्यन्तोऽवस्तात्" इति । अभ्यागच्छन्तः सर्पनृत्तदर्शनार्थमुत्सुका अभिमुखमागच्छन्तः, पुरुषाः अभ्यानृत्यन्तः फणानां प्रसारणेनाभिमुखं नृत्तं कुर्व्वन्तः सर्पाः ॥

अष्टमं मन्त्रमाह । "पितॄणां मघाः । रुदन्तः परस्तादपभ्रंशोऽवस्तात्" इति । रुदन्तो रोदनं कुर्व्वन्तो, प्रभवः अपभ्रंशो देहपातः ॥

नवमं मन्त्रमाह । "अर्य्यम्णः पूर्व्वे फल्गुनी । जाया परस्तादृषभोऽवस्तात्" इति । जाया प्रसिद्धा ऋषभो सेक्ता पुरुषः॥

दशमं मन्त्रमाह । "भगस्योत्तरे । वहतवः परस्ताद्वहमाना अवस्तात्" [२] इति । उत्तरेत्यत्र फल्गुनीत्यनुवर्त्तते, पितृगृहात् कन्यया नीयमाना धनविशेषाः वहतवः । तेषां वोढारो वहमानाः ॥

एकादशं मन्त्रमाह । "देवस्य सवितुर्हस्तः । प्रसवः परस्तात्सनिरवस्तात्" इति । प्रसवः कार्य्येषु प्रेरणं सनिर्धनदानम् ॥

द्वादशं मन्त्रमाह। "इन्द्रस्य चित्रा। ऋतं परस्तात्सत्य-मवस्तात्" इति। चिन्त्यमानं वस्तुतत्त्वमृतमुच्यते। वाच्यमानं वस्तुतत्त्वं सत्यम्॥

त्रयोदशं मन्त्रमाह। "वायोर्निष्ट्या व्रततिः। परस्तादसि-द्धिरवस्तात्" इति। निष्ट्या स्वातिर्व्रततिर्वायुना चालयितुं शक्या वल्ली असिद्धिर्वल्ल्या अधः पातः॥

चतुर्दशं मन्त्रमाह। "इन्द्राग्नियोर्विशाखे। युगानि पर-स्तात्कृषमाणा अवस्तात्" इति। कर्षकेण बलीवर्दगलयोः स्था-प्यमानं काष्ठं युगम्। कृषमाणाः कृषिकर्त्तारः॥

पञ्चदशं मन्त्रमाह। "मित्रस्यानूराधाः। अभ्यारोहत्पर-स्तादभ्यारूढमवस्तात्"[१] इति। सम्मुखत्वेनावस्थितमुन्नतं देशं आरोढुमुद्यन्तं पदमभ्यारोहत्। पूर्व्ववत् कृतारोहणं पदम-भ्यारूढम्॥

षोडशं मन्त्रमाह। "इन्द्रस्य रोहिणी। शृणत्परस्तात् प्रतिशृणदवस्तात्" इति। रोहिणीशब्देन ज्येष्ठोच्यते, सङ्ग्रामा-रोहणहेतुत्वात्। शृणत् हिंसनोद्युक्तं स्वकीयं बलम्, प्रतिशृणत् प्रतिकूलत्वेन हिंसोद्युक्तं परकीयं बलम्॥

सप्तदशं मन्त्रमाह। "निर्ऋत्यै मूलवर्हणी। प्रतिभञ्जन्तः परस्तात् प्रतिशृणन्तोऽवस्तात्" इति। यन्मूलनक्षत्रं तदेव वि-रोधिपदार्थं निवर्हणशक्तित्वात् वर्हिणीत्युच्यते। प्रतिकूलां सेनां भग्नां कुर्व्वन्तः पुरुषाः प्रतिभञ्जन्तः स्वात्मानं प्रातिकूल्येन हिंसन्तः पुरुषाः प्रतिशृणन्तः॥

अष्टादशं मन्त्रमाह। "अपां पूर्व्वा आषाढाः। वर्च्चः परस्तात्समितिरवस्तात्" इति। परसैन्याभिभवक्षमबलं वर्च्चः समितिः युद्धम्॥

एकोनविंशं मन्त्रमाह। "विश्वेषां देवानामुत्तराः। अभिजयत्परस्तादभिजितमवस्तात्" इति। जयाभिमुखं सैन्यमभिजयत् लब्धजयमभिजितम्। अस्मिन्मन्त्रे उत्तरा इत्यनुवर्त्तते॥

विंशं मन्त्रमाह। "विष्णोः श्रोणा। पृच्छमानाः परस्तात्पन्था अवस्तात्" [४] इति। श्रवणनक्षत्रं श्रोणा तल्लोकजिज्ञासवः पुरुषाः पृच्छमानाः तल्लोकप्राप्त्युपायः पन्थाः॥

एकविंशं मन्त्रमाह। "वसूनाꣳ श्रविष्ठाः। भूतं परस्ताद्भूतिरवस्तात्" इति। धनिष्ठानक्षत्रं श्रविष्ठाः। पूर्व्वमनुभूतमैश्वर्य्यं भूतम्। अनुभूयमानमनुभविष्यमाणञ्च भूतिः॥

द्वाविंशमन्त्रमाह। "इन्द्रस्य शतभिषक्। विश्वव्यचाः परस्ताद्विश्वचितिरवस्तात्" इति। पूर्व्वं चित्रानक्षत्रस्वामी योऽयमिन्द्र उक्तः सोऽयं त्वष्टा परमैश्वर्य्ययोगादिन्द्र उच्यते। अन्यत्र त्वष्टा नक्षत्रमभ्येति चित्रामितिमन्त्राम्नानात्। यत्त्विन्द्रस्य रोहिणीत्युक्तं तत्र ज्येष्ठानक्षत्राधिपतिः प्रसिद्ध एवेन्द्रः। इन्द्रो ज्येष्ठामनुनक्षत्रमेतीत्येवाम्नानात्। अत्र त्विन्द्रशब्देन परमैश्वर्य्ययोगाद्वरुणो गृह्यते। क्षत्रस्य राजा वरुणोऽधिराजः। नक्षत्राणाꣳ शतभिषा वसिष्ठ इति मन्त्राम्नानात्। विश्वं व्यचति व्याप्नोतीति विश्वव्यचाः, वृष्टिर्विश्वेषां शस्यानामाधारभूतः क्षेत्रविशेषे विश्वचितिः॥

त्रयोविंशं मन्त्रमाह। "अजस्यैकपदः पूर्व्वे प्रोष्ठपदाः। वैश्वानरं परस्ताद्वैश्वावसवमवस्तात्" इति। अजशब्देनैकपात् शब्देन च सूर्य्योऽभिधीयते। तं सूर्य्यं देवमजमेकपादमिति मन्त्राम्नानात्। जगदनुग्रहाय स्वेच्छागृहीतं शरीरमुक्त्वा मनुष्यवत् कर्म्मपारतन्त्र्येण जन्माभावादजत्वम्। एक एव पद्यते सञ्चरतीति एकपात् सूर्य्य एकाकी चरतीति मन्त्रान्तरविशेषात्। विश्वेषां नराणां हितं जगत्प्रकाशनं वैश्वानरं आदित्याज्जायते वृष्टिरिति स्वत्यभिहितवृष्टिद्वारा विश्वेषां निवासहेतुत्वं वैश्वावसवम्॥

चतुर्व्विंशं मन्त्रमाह। "अहेर्बुध्नियस्योत्तरे। अभिषिञ्चन्तः परस्तादभिषुण्वन्तोऽवस्तात्" इति। अहिशब्देन बुध्नियशब्देन च आवसथ्यः पञ्चमोऽग्निरुच्यते। अतएवाधानप्रकरणे, अहे बुध्नियमन्त्रं मे गोपायेति आम्नातम्। सोऽयमहिंसकत्वादन्येन हिंसितुमशक्यत्वाच्चाहिः, बुध्ने मूले जगदादावुत्पन्नत्वाद्बुध्नियः, उत्तर इत्यत्र प्रोष्ठपदा इत्यनुवर्त्तते। राजसूयादि यागविशेषेष्वभिषेककर्त्तारः ऋत्विजोऽभिषिञ्चन्तः। सोमयागेष्वभिषुषवं कुर्व्वन्तोऽभिषुषवन्तः॥

पञ्चविंशं मन्त्रमाह। "पूष्णो रेवती। गावः परस्ताद्वत्सा अवस्तात्" इति। गावः प्रसिद्धाः वत्साः पश्च पोषणीयाः॥

षड्विंशं मन्त्रमाह। "अश्विनोरश्वयुजौ। ग्रामः परस्तात् सेनावस्तात्" इति। देवभिषग्भ्यामश्विभ्यां चिकित्सनीय एक-

स्थाननिवासो जनसङ्घो ग्रामः। परराष्ट्रे गच्छन् जनसङ्घः सेना साप्यश्विभ्यां चिकित्सनीयैव॥

सप्तविंशं मन्त्रमाह। "यमस्यापभरणीः। अपकर्षन्तः पर-स्तादपवहन्तोऽवस्तात्" इति। पापिजनान् घातयितुं बलादा-नयन्तो दूता अपकर्षन्तः। आनीतानां यातनां कुर्व्वन्तोऽप-वहन्तः। एतेषु सर्व्वेष्वपि मन्त्रेषु नक्षत्राधिपतिदेवताया अनु-कूलौ पार्श्वद्वयवर्त्तिनावर्थौ योजनीयौ॥

अष्टाविंशैकोनत्रिंशयोर्मन्त्रयोः प्रतीके दर्शयति। "पूर्णा पश्चाद्यत्ते देवा अदधुः"[५]इति। पूर्णा पश्चादुत पूर्णा पुरस्तात् इत्यृगेका। यत्ते देवा अदधुर्नामधेयमित्यृगन्या। एतच्चोभयं संहितायां तृतीयकाण्डे व्याख्यातम्। एतैरेकोनत्रिंशन्मन्त्रैः क्वचिद्विकृतिविशेषे चयने प्रकृतिमन्त्रान् बाधयित्वा नक्षत्रेष्टका उपदध्यात्॥

इति प्रथमोऽनुवाकः॥ १॥

---

अथ द्वितीयोऽनुवाकः।

प्रथमेऽनुवाके वैकृतिनक्षत्रेष्टका मन्त्रा उक्ताः। अथ द्वितीयतृतीययोरनुवाकयोः कर्म्मानुष्ठानाय पुण्यकालो निरूप्यते। तस्य चानारभ्याधीतत्वात् कर्म्मविशेषसम्बन्धापादकस्य वाक्यादेरभावाच्च क्रत्वर्थत्वं नास्ति, किन्तु पुरुषार्थत्वमित्यवगन्तव्यम्। तत्रास्मिन्ननुवाके नक्षत्रमुपजीव्य कालविशेषं विधत्ते। "यत् पुण्यं नक्षत्रम्। तद्बट्कुर्व्वीतोपव्युषम्। यदा वै सूर्य्य उदेति।

अथ नक्षत्रं नैति। यावति तत्र सूर्य्यो गच्छेत्। यत्र जघन्यं पश्येत्। तावति कुर्व्वीत यत्कारी स्यात्। पुण्याह एव कुरुते। एवꣳ ह वै यज्ञेषुञ्च शतद्युम्नञ्च मात्स्योनिरवसाययाञ्चकार [१]" इति। ज्योतिःशास्त्रप्रसिद्ध्या कर्त्तुः स्वस्य क्रियमाणस्य कर्म्मणश्चानुकूलत्वेन पुण्यं यन्नक्षत्रमस्ति, उपव्युषं उषःकालसमीपे तन्नक्षत्रं वषट्कुर्व्वीत वाढं कुर्व्वीत। आकाशे सूर्य्योदयदेशादूर्द्धमेतावति दूरे तं नक्षत्रं तिष्ठतीति बुद्धौ दृढनिश्चयं कुर्य्यात्। उपव्युषमित्यस्यैवाभिप्रायः स्पष्टीक्रियते। यस्मिन् काले सूर्य्य उदेति तस्मिन् काले तन्नक्षत्रं पुरुषो नैति न प्राप्नोति। सूर्य्यप्रकाशेन तिरोहितत्वाद्द्रष्टुं न शक्यते, इत्युदयात् प्रागेव नक्षत्रदर्शनकाले तस्य स्थानविशेषं निश्चिनुयात्। तच्च नक्षत्रं यावदुदयं प्राप्य पश्चिमाभिमुखं गच्छति। तथा सति यस्मिन् देशे नक्षत्रस्थानं स्वेन निश्चितं तत्स्थानात् प्राचीनसमीपदेशस्तन्नक्षत्रापेक्षया जघन्यः। तस्मिन् जघन्यदेशे यावति काले सूर्य्यो गच्छेत्। तावति काले स्वेन कर्त्तव्यं कर्म्म कुर्य्यात्। यत्कर्म्म करोतीति यत्कारी तादृशश्चिकीर्षुः पुरुषस्तस्मिन् काले प्रारभेत्। तथासति सत्स्वपि शास्त्रोक्तेषु कालदोषेषु तेषां दोषाणामुपशमादयं पुरुषः पुण्याहे एव तत् कृतवान् भवति। तदेतत् साम्प्रदायिकम्। यस्मात् मात्स्यो नाम कश्चिदृषिर्यज्ञेषुनामकं शतद्युम्नञ्च पुरुषमीदृशे मुहूर्त्ते कारयित्वा निःशेषेण श्रैष्ठ्यं प्रापयामास॥

अथ प्रसङ्गाल्लोकद्वये श्रेयःसाधनं नक्षत्रसमूहध्यानविशेषं

विधत्ते । "यो वै नक्षत्रियं प्रजापतिं वेद । उभयोरेनं लोकयोर्विदुः । हस्त एवास्य हस्तः । चित्रा शिरः । निष्ट्या हृदयम् । ऊरू विशाखे । प्रतिष्ठानूराधाः । एष वै नक्षत्रियः प्रजापतिः । य एवं वेद । उभयोरेनं लोकयोर्विदुः [२] । अस्मिꣳश्चामुष्मिꣳश्च" इति । नक्षत्राण्येव शरीरं यस्य प्रजापतेस्तं प्रजापतिं यः पुरुषः वेद उपास्ते तं पुरुषं लोकद्वये देवा मनुष्याश्च जानन्ति । तथाविधख्यातियुक्तो भवतीत्यर्थः । यदिदं हस्तनक्षत्रं तदेव प्रजापतेर्हस्तस्थानीयम् । चित्रानक्षत्रन्तु शिरस्थानीयम् । स्वातीनक्षत्रन्तु हृदयस्थानीयम् । विशाखानक्षत्रमुरूस्थानीयम् । अनूराधानक्षत्रं पादस्थानीयम् । एवमुपास्यमानः प्रजापतिर्नक्षत्रियः । य एवं वेदेत्यादेः पुनरभिधानमुपसंहारार्थम् ॥

अथ प्रासङ्गिकं किञ्चिल्लौकिकं काम्यं कर्म्म विधत्ते । "यां कामयेत दुहितरं प्रिया स्यादिति । तान्निष्ट्यायां दद्यात् । प्रियैव भवति । नैव तु पुनरागच्छति" इति । निष्ट्या स्वातीनक्षत्रं तस्मिन्नक्षत्रे दत्ता दुहिता पत्युः प्रियैव भवति । किन्त्वस्ति कश्चिदन्यो विशेषः । पितुर्गृहं नागच्छत्येव । आगन्तुं मनस्तु न कुरुते । नेयं नक्षत्रनिन्दा किन्तु प्रीत्यतिशयप्रदर्शनेन नक्षत्रस्तुतिरेव ॥

अथान्यत् किञ्चिल्लौकिकं कर्म्म विधत्ते । "अभिजिन्नाम नक्षत्रम् । उपरिष्टादषाढानाम् । अवस्ताच्छ्रोणायै । देवासुराः संयत्ता आसन् । ते देवास्तस्मिन्नक्षत्रेऽभ्यजयन् [३] ।

यदभ्यजयन्। तदभिजितोऽभिजित्त्वम्। यं कामयेतानपजय्यं जयेदिति। तमेतस्मिन्नक्षत्रे यातयेत्। अनपजय्यमेव जयति। पापपराजितमिव तु" इति। उत्तराषाढानक्षत्रस्य यस्तुर्थः पादः श्रवणनक्षत्रस्य यः प्रथमः पादः, तदुभयं मिलिला नक्षत्रसन्धिरूपमभिजिदाख्यं किञ्चिन्नक्षत्रं देवास्तस्मिन्नक्षत्रे युद्धं कृत्वाऽभितो जितवन्तः। तस्मादभिजिदिति नाम सम्पन्नम्। एवं सति केनापि जेतुमशक्यं सैन्यमयं राजा जयत्विति कामयमानोऽभिजिन्नक्षत्रे प्रयत्नं कारयेत्, ततो जयत्येव। किन्त्वस्ति किञ्चिदन्यत् शत्रोः पापेन तदीयं सैन्यं पराजितमिव भवति। अस्य राज्ञो न कश्चित् प्रयासः। इयमपि पूर्ववन्नक्षत्रप्रशंसैव॥

अथ श्रौतकर्माङ्गत्वेन रेवतीं विधत्ते। "प्रजापतिः पशूनसृजत। ते नक्षत्रं नक्षत्रमुपातिष्ठन्त। ते समावन्त एवाभवन्। ते रेवतीमुपातिष्ठन्त [४]। ते रेवत्यां प्राभवन्। तस्माद्रेवत्यां पशूनां कुर्वीत। यत्किञ्चार्वाचीनꣳ सोमात्। प्रैव भवन्ति" इति। प्रजापतिना सृष्टाः पशवः रेवतीव्यतिरिक्ते तस्मिन्नक्षत्रे स्वकीयस्वामिगृहे समागताः ते च समा एवाभवन्। समशब्दादुत्पन्न आवन्तुप्रत्ययः स्वार्थिकः। यावन्तः समागतास्तावन्त एव न तु वृद्धिं गताः। रेवत्यान्तु स्वामिगृहं प्राप्ताः प्रभूता अभवन्। तस्मात् सोमयागादर्वाचीनं पशूनां सम्बन्धि यत् कर्म वायव्यꣳ श्वेतमालभेतेत्यादि तद्रेवत्यां कुर्वीत तेन पशवः प्रभूता एव भवन्ति॥

नामनिरुक्त्या देवसम्बन्धेन च नक्षत्राणि प्रशंसति। "सलिलं वा इदमन्तरासीत्। यदतरन्। तत्तारकाणां तारकत्वम्। यो वा इह यजते। अमुꣳ स लोकं नक्षते। तन्नक्षत्राणां नक्षत्रत्वम् [५]। देवगृहा वै नक्षत्राणि। य एवं वेद। गृह्येव भवति" इति। द्यावापृथिव्योरन्तर्मध्ये यदिदं स्थावरजङ्गमात्मकं जगद्दृश्यते तत् सर्व्वं पुरा प्रलयकाले सलिलमेवासीत्। तदानीं कृत्तिकाद्याः सलिलं तीर्त्वा लोकान्तरेषु गताः। तस्मात्तरन्तीति व्युत्पत्त्या तारकत्वं सम्पन्नम्। यो यजमान इह नक्षत्रयुक्ते काले यागं करोति स यजमानोऽमुं स्वर्गं लोकं नक्षते प्राप्नोति। नक्षगताविति धातुः। अतो नक्षतेति व्युत्पत्त्या नक्षत्रत्वं सम्पन्नम्। किञ्च देवतागृहसदृशान्येतानि नक्षत्राणि यथा मनुष्यगृहेषु दीपप्रकाशेन व्यवहरन्ति। एवं देवा नक्षत्रप्रकाशेन व्यवहरन्ति। अतः प्रशस्तानि नक्षत्राणि। एवं वेदिता प्रशस्तगृहो बहुगृहो वा भवति॥

अथ प्रसङ्गाल्लौकिकं कञ्चिद्धर्म्मं विधत्ते। "यानि वा इमानि पृथिव्याश्चित्राणि। तानि नक्षत्राणि। तस्मादश्लीलनामꣳश्चित्रे। नावस्येन्न यजेत। यथा पापाहे कुरुते। तादृगेव तत्" इति। पृथिव्याःसम्बन्धीनि चित्राणि विविधानि ग्रामनगरादीनि स्थानानि सन्ति तानि नक्षत्रसदृशानि। यथा द्युलोके नक्षत्राणि विविधानि उपकारकानि च दृश्यन्ते, तद्वद्ग्रामादीन्यपि। तस्मात् कुसम्बन्धिचित्ररूपनिषिद्धत् स्थानमश्लीलनामप्रतिकूलनक्षत्रसदृशं निन्दितं स्थानं म्लेच्छजनभू-

यिष्टं तस्मिन्नश्लीलनाम्नि ग्रामे निवासं यागाद्यनुष्ठानञ्च न कुर्य्यात्। यथा पापाहे निषिद्धदिने कृतं नोपकारकं, निषिद्धदेशेऽपि कृतं तादृशमेव॥

नक्षत्राणामुत्तमाधमविभागं दर्शयितुं देवयमसम्बन्धित्वेन नक्षत्राण्युपन्यस्य तत्सञ्चारं दर्शयति। "देवनक्षत्राणि वा अन्यानि [६]। यमनक्षत्राण्यन्यानि। कृत्तिकाः प्रथमम्। विशाखे उत्तमम्। तानि देवनक्षत्राणि। अनूराधाः प्रथमम्। अथ भरणीरुत्तमम्। तानि यमनक्षत्राणि। यानि देवनक्षत्राणि। तानि दक्षिणेन परियन्ति। यानि यमनक्षत्राणि [७]। तान्युत्तरेण" इति। एवमन्यतरस्यामदूरेऽपञ्चम्या इतिविहितस्य नञ्प्रत्ययस्यादूरार्थवाचित्वाद्देवलोकस्य समीपे दक्षिणपार्श्वे कृत्तिकादीनि परिभ्रमन्ति। अनूराधादीनि तु यमलोकस्य समीपे उत्तरपार्श्वे परिभ्रमन्ति॥

अथ निर्व्वचनमुखेन यमनक्षत्राणामधमत्वं दर्शयति। "अन्वेषामरात्स्मेति। तदनूराधाः। ज्येष्ठमेषामवधिष्मेति। तज्ज्येष्ठघ्नी। मूलमेषामवृक्षामेति। तन्मूलवर्हणी। यन्नासहन्त। तदषाढाः। यदश्लोणत् [८]। तच्छ्रोणा। यदशृणोत्। तच्छ्रविष्ठाः। यच्छतमभिषज्यन्। तच्छतभिषक्। प्रोष्ठपदेषूदयच्छन्त। रेवत्यामवरन्त। अश्वयुजोरयुञ्जत। अपभरणीष्वपावहन्। तानि वा एतानि यमनक्षत्राणि" इति। पुरा कदाचिद्युयुत्सवो देवाः परस्परमेषामसुराणां युद्धार्थे वयमनुकूलया सामग्र्या अरात्स्म समृद्धा अभूमेति यस्मिन्नक्षत्रे

तदिदं वचनं परस्परमब्रुवन् तस्य नक्षत्रस्यानूराधेति नाम सम्पन्नम्। तदनुकूलया सामग्र्या राद्धिः समृद्धिरत्रेति व्युत्पत्तेः, एषामसुराणां मध्ये ज्येष्ठपुरुषं मुख्यं अवधिष्मेति यस्मिन्नक्षत्रेऽब्रुवन् तस्य नक्षत्रस्य ज्येष्ठघ्नीति नाम। तत्र नाम्नैकदेशेन ज्येष्ठेति लौकिको व्यवहारः। भीमसेनो भीम इतिवत्। एवमसुराणां मूलं निवासस्थानमवृचामविच्छिन्नं कृतवन्तो वयमिति यस्मिन्नक्षत्रेऽब्रुवन् तस्य नक्षत्रस्य मूलवर्हणीति नाम। मूलस्य वर्हणमुद्यमनं उच्छेदनमत्रेति व्युत्पत्तेः। अत्राप्येकदेशेन लौकिको मूल इति व्यवहारः। ययोर्नक्षत्रयोर्देवकृतमुपद्रवं सोढुमशक्ताः असुरास्तस्य नक्षत्रद्वयस्याषाढा इति नाम, न सहन्तेऽत्रेति व्युत्पत्तेः। श्रोणेतिधातुः सङ्घवाची। यस्मिन्नक्षत्रे प्रहारसङ्घोऽसुरेष्वभूत् तस्य श्रोणेति नाम। श्रवणमिति लौकिकव्यवहारः। यस्मिन्नक्षत्रे देवैरुक्तमधिक्षेपमसुरसङ्घोऽशृणोत्। तस्य श्रविष्ठा इति नाम। धनिष्ठेति लौकिकव्यवहारः। यस्मिन्नक्षत्रे असुरकृतं प्रहाराणां शतं देवा अभिषज्यन् अनायासेन चिकित्सितवन्तः, तस्य शतभिषगिति नाम। प्रोष्ठपदाख्ये नक्षत्रद्वये देवा स्वकीयान्यायुधायान्यासुरयोधनायोद्योतवन्तः। तस्मात् नक्षत्रद्वयस्य प्रोष्ठपदेति नामत्वम्। यस्मिन्नक्षत्रे देवा अरवन्त असुरभीकरं शब्दमकुर्व्वन्। तस्य रेवतीति नाम। यस्मिन्नक्षत्रे देवा रथेष्वश्वान् योजितवन्तस्तस्याश्वयुगिति नाम। यस्मिन्नक्षत्रे प्राणानामपहारमसुरा अवहन्, तस्यापभरणी नाम, प्राणभरणादपगतत्वात्। तान्येता-

न्यनूराधादीनि यमवदसुराणां मरणहेतुत्वाद्यमनक्षत्राणि॥

तत्र नामनिर्व्वचनादेव तेषामधमत्वेन वर्ज्जनत्वप्रतीतेरि-तरनक्षत्रेषु कृत्तिकादिषु लौकिकवैदिककाम्यानुष्ठानं विधत्ते। "यान्येव देवनक्षत्राणि। तेषु कुर्व्वीत यत्कारी स्यात्। पुण्याह एव कुरुते [८]" इति। यत्काम्यं कर्म्म करोतीति यत्कारी स पुरुषः तत्कर्म्म देवनक्षत्रेषु कुर्व्वन् इतरेषां कालदोषाणा-मुपशान्त्या पुण्याह एव तत् कृतवान् भवति॥

इति द्वितीयोऽनुवाकः॥ २ ॥

---

अथ तृतीयोऽनुवाकः॥

द्वितीयानुवाके नक्षत्रोपजीवनेन शुभकालो निरूपितः। तृतीये दिवसभागोपजीवनेन शुभकालो निरूप्यते। अह्नः पञ्चविभागाः, प्रातःसङ्गवमध्याह्नापराह्नसायाह्नशब्दाभिधेयाः। तत्राद्यन्तयोः स्वभावविशेषं दर्शयति। "देवस्य सवितुः प्रातः-सवः प्राणः। वरुणस्य सायमासवोऽपानः" इति। योऽयमु-दयानन्तरभावी मुहूर्त्तत्रयात्मकः कालः प्रातःशब्दवाच्यः। स च सवितुः प्रेरकस्य देवस्य प्रसवः प्रेरणयुक्तः सूर्य्योदये सत्य-नुष्ठातारः कृषिकाः सेवका वणिजश्च स्वस्वव्यापारेषु सूर्य्यप्रका-शेन प्रेर्य्यन्ते। तस्मात् प्रकर्षेणातिचेष्टते सर्व्वो लोको वेत्त्ययं प्राणरूपः। अह्नोऽन्तिमो मुहूर्त्तत्रयात्मकः कालः सायंशब्दा ऽभिधेयः। स च वरुणसम्बन्धी तत ऊर्द्ध्वं तारकेण तमसा जगदावरणात् स च प्राणप्रेरणस्य समन्ताच्छेदकत्वादासव

इत्युच्यते। अस्तमयकाले हि सर्व्वे प्राणिनः स्वस्वव्यापारेभ्य उपरमन्ते। अतोपगतचेष्टत्वात् अपान इत्युच्यते॥

अथ प्रातःसङ्गवयोः प्रथमद्वितीययोर्भागयोः सन्धिरूपं कालं हेयतया निरूपयति। "यत्प्रतीचीनं प्रातस्तनात्। प्राचीनꣳ सङ्गवात्। ततो देवा अग्निष्टोमं निरमिमीत। तत्तदात्तवीर्य्यं निर्मार्गः" इति। प्रातःकाले योऽयमन्तिमो मुहूर्त्तः तं पृथक्कृत्य तत्स्वरूपं प्रातःस्तनात् कालात्प्रतीचीनमित्युच्यते। मुहूर्त्तत्रयात्मकस्य सङ्गवाख्यस्य द्वितीयभागस्य यः प्रथमो मुहूर्त्तः तं पृथक्कृत्य तत्स्वरूपं सङ्गवात् प्राचीनमिति व्यपदिश्यते। प्रातःकालात् प्रतीचीनं सङ्गवात् प्राचीनञ्च मुहूर्त्तद्वयात्मकं सन्धिरूपं यत् कालरूपं भवति। ततः सन्धिरूपात् कालादग्निष्टोमसंस्थारूपं सोमयागं देवा निर्म्मितवन्तः। यस्मात् कारणात् सन्धिरूपमात्तवीर्य्यं देवैर्गृहीतसारत्वात् निःसारं, तस्मादयं निर्मार्गः कालः। मार्गो मार्ज्जनं शुद्धिः ततो निर्गतो निर्मार्गः॥

प्रातःकालवत् सङ्गवकालं प्रशंसति। "मित्रस्य सङ्गवः। तत्पुण्यं तेजस्व्यहः। तस्मात्तर्हि पशवः समायन्ति" इति। योऽयं सङ्गवो द्वितीयो भागः तस्य मित्रः स्वामी, मित्रस्य च सर्व्वानुग्राहकत्वात् तदीयमहःस्वरूपं पुण्यम्, अध्ययनादिपुण्यकर्म्मोपेतम्। अतएव तेजस्वित्वेन भासते। तस्मात्तेजस्वित्वादेव तस्मिन् काले पशवोऽरण्येषु सम्यगाचरन्ति।

अथ द्वितीयतृतीयभागयोः सन्धिं पूर्व्वसन्धिवन्निन्दति।

"यत्प्रतीचीनꣳ सङ्गवात् [१]। प्राचीनं मध्यन्दिनात्। ततो देवा उक्थ्यं निरमिमीत। तत्तदात्तवीर्य्यं निर्मार्गः"॥

तृतीयभागं प्रशंसति। "बृहस्पतेर्मध्यन्दिनः। तत्पुण्यं तेजस्व्यहः। तस्मात्तर्हि तेऽक्ष्णिष्ठं तपति" इति। माध्यन्दिनभागस्य बृहस्पतिः स्वामी तस्यातिशयेन ब्रह्मवर्चसित्वात्तदीयमङ्गःस्वरूपं पुण्यम्, अतस्तस्मिन् ते पशवः अक्ष्णिष्ठं नाशरहितमुद्वेगराहित्येनावस्थानरूपं तपः कुर्व्वन्ति। पशूनां तथाऽवस्थानमेव तपः। गावो वा एतत् सत्रमासतेत्यत्र तथा तत्तपःप्रतिपादनात्। वस्तुतस्तु तेऽक्ष्णिष्ठमित्येकमेव पदम्। तथा च तेऽक्ष्णिष्ठं अतिशयेन तीक्ष्णं तापं यथा स्यात्तथा तस्मिन् काले सूर्य्यस्तपति ब्राह्मणश्च तथा तपेदिति। मध्यन्दिने प्रबलमधीयीतेति श्रुतेः॥

तृतीयचतुर्थभागयोः सन्धिं निन्दति। "यत्प्रतीचीनं मध्यन्दिनात्। प्राचीनमपराह्णात्। ततो देवाः षोडशिनं निरमिमीत। तत्तदात्तवीर्य्यं निर्मार्गः" [२] इति॥

चतुर्थभागं प्रशंसति। "भगस्यापराह्णः। तत्पुण्यं तेजस्व्यहः। तस्मादपराह्णे कुमार्य्यो भगमिच्छमानाश्चरन्ति" इति। भगं सौभाग्यं शृङ्गारं गृहवर्त्तिनां सर्व्वेषां भोजनादिव्यापारेषु निष्पन्नेष्वपराह्णकाले मातरः पुत्रीणां कुमारीणामङ्गप्रक्षालनधम्मिल्लबन्धननयनाञ्जनादिभिः शृङ्गारं कुर्व्वन्ति। सौभाग्यदेवतायाः तत्कालस्वामित्वेन तदेतदुचितम्॥

अथ चतुर्थपञ्चमभागयोः सन्धिं निन्दति। "यत्प्रतीची-

मनपराह्णात्। प्राचीनꣳ सायाह्नात्। ततो देवा अतिरात्रं निरमिमीत। तत्तदात्तवीर्य्यँ निर्मार्गः” इति॥

पञ्चमभागं प्रशंसति। “वरुणस्य सायम्। तत् पुण्यं तेजस्व्यहः। तस्मात्तर्हि नानृतं वदेत्”[२] इति। वरुणस्योग्रदेवतात्वात् तस्मिन् पुण्यकालेऽनृतवादिनं वरुणो बाधते। अतएवान्यत्र श्रूयते, अनृते खलु वै क्रियमाणे वरुणो गृह्णातीति। तस्मात्तस्मिन् कालेऽतिप्रयत्नेनानृतं वर्ज्जयेत्॥

उत्तमाधमकालविभागज्ञानं प्रशंसति। “ब्राह्मणो वा अष्टाविꣳशो नक्षत्राणाम्। समानस्याह्नः पञ्च पुण्यानि नक्षत्राणि। चत्वार्य्यश्लीलानि। तानि नव। यच्च परस्तान्नक्षत्राणां यच्चावस्तात्। तान्येकादश। ब्राह्मणो द्वादशः। य एवं विद्वान्त्संवत्सरं व्रतं चरति। संवत्सरेणैवास्य व्रतं गुप्तं भवति” इति। कृत्तिकादीनि भरण्यन्तानि सप्तविंशतिनक्षत्राणि तदपेक्षया ब्राह्मणोऽष्टाविंशं नक्षत्रम्। यथा नक्षत्रयोगात् कालस्य कर्म्मयोग्यता। एवं ब्राह्मणवचनादपि कालः कर्म्मयोग्यो भवति। अतएव शिष्टाः कर्म्मारम्भेषु पुण्याहं वाचयन्ति। एकस्याह्नः प्राप्ताः प्रातःसङ्गवादयः पञ्चभागाः नक्षत्रांशोपेतत्वात्ते नक्षत्राणि तानि च पूर्व्वोक्तरीत्या प्रशस्तत्वात् पुण्यानि। यानि च सन्धिरूपाणि तान्यग्निष्टोमाद्युत्पादनेन निःसारत्वादश्लीलानि निन्दितानि। एवं पुण्यान्यश्लीलानि च मिलित्वा नवसङ्ख्याकानि। यच्च नक्षत्रांशयुक्तेन नक्षत्राणामेतेषां नवसंख्याकानां परस्तादुपरि प्रदोषकालरूपं यच्चाधस्तादुषः-

कालरूपम्। ताभ्यां द्वाभ्यां सह तान्येकादशानि सम्पद्यन्ते। तदपेक्षया वचनेन पुण्याहत्वसम्पादको ब्राह्मणो द्वादशः। एवमेते कालविशेषाः द्वादशमासत्वेन भाविताः संवत्सरतामापद्यन्ते। एवमनेन प्रकारेण यो विद्वान्त्संवत्सरत्वसम्पादनेनैकस्मिन् दिने व्रतं कर्म्मविशेषमाचरति। तस्य तद्व्रतं प्रसिद्धेनैव संवत्सरेण गुप्तं भवति। संवत्सरानुष्ठानेन यावत् फलं तावदाप्नोतीत्यर्थः। एवमेकेन प्रकारेण द्वादशभागानुसन्धानमुक्तम्॥

अथ प्रकारान्तरेण तदभिधत्ते। "समानस्याह्नः पञ्चपुण्यानि नक्षत्राणि। चत्वार्य्यश्लीलानि। तानि नव। आग्नेयी रात्रिः। ऐन्द्रमहः। तान्येकादश। आदित्यो द्वादशः। य एवं विद्वान्त्संवत्सरं व्रतं चरति। संवत्सरेणैवास्य व्रतं गुप्तं भवति" [४] इति। पूर्व्वं प्रदोषकालोषःकालब्राह्मणैर्द्वादशसङ्ख्या पूरिता इदानीं तत्त्रयं परित्यज्याग्निदेवताकां रात्रिमिन्द्रदेवताकमहरादित्यञ्च तत्त्रयस्थाने निवेश्यानुसन्धानमुच्यत इति विशेषः॥

इति तृतीयोऽनुवाकः॥ ३॥

---

## अथ चतुर्थोऽनुवाकः।

तृतीये हेयोपादेयकालविभागो निरूपितः। स च क्रतुविशेषसम्बन्धाभावात् पुरुषार्थः। अतः सामान्येऽन्यसर्व्वकर्मसु सम्बध्यते। चतुर्थे सोमविषये विशेषोऽभिधीयते। यदुक्तं पूर्व्व-

प्रपाठके, यद्दारुमयाणि पात्राणि भवन्तीति। तदेतत् प्रशंसति। "ब्रह्मवादिनो वदन्ति। कति पात्राणि यज्ञं वहन्तीति। त्रयोदशेति ब्रूयात्। स यद्ब्रूयात्। कस्तानि निरमिमीतेति। प्रजापतिरिति ब्रूयात्। स यद्ब्रूयात्। कुतस्तानि निरमिमीतेति। आत्मन इति। प्राणापानाभ्यामेवोपाꣳश्वन्तर्यामौ निरमिमीत [१]। व्यानादुपाꣳशुसवनम्। वाच ऐन्द्रवायवम्। दक्षक्रतुभ्यां मैत्रावरुणम्। श्रोत्रादाश्विनम्। चक्षुषः शुक्रामन्थिनौ। आत्मन आग्रयणम्। अङ्गेभ्य उक्थ्यम्। आयुषो ध्रुवम्। प्रतिष्ठाया ऋतुपात्रे" इति। सोमग्रहणसाधनत्वेन यज्ञनिर्वाहकानां पात्राणां सङ्ख्याविशेषो निर्मातृविशेषो निर्माणसाधनञ्चेति त्रयं ब्रह्मवादिनां प्रश्नेनाभिज्ञपुरुषोत्तरेण च निर्णीतम्। प्रजापतिः स्वशरीरान्निरमिमीतेति सामान्येनोक्तस्य प्राणापानाभ्यामित्यादिना विशेषः कथितः। तत्र प्राणवायोरुपांशुपात्रं निर्मितम्। अपानवायोरन्तर्यामपात्रम्। व्यानवायोरुपांशुसवनाख्यः पाषाणः। वागिन्द्रियादैन्द्रवायवपात्रम्। दक्ष उत्साहः क्रतुः सङ्कल्पस्ताभ्यां मैत्रावरुणपात्रम्। श्रोत्रादाश्विनपात्रम्। चक्षुरिन्द्रियाच्छुक्रामन्थिपात्रद्वयम्। आत्मनो मध्यशरीरादाग्रयणपात्रम्। अङ्गेभ्यो हस्तपादादिभ्यः उक्थ्यपात्रम्। स्वकीयादायुष्याद्ध्रुवपात्रम्। प्रतिष्ठाहेतुभ्यां पादाभ्यां ऋतुपात्रद्वयम्। प्रजापतेः सत्यसङ्कल्पत्वादिकमेतस्माज्जायतामिति सङ्कल्पमात्रेण तथैव जायते। यस्मादत्र प्राणादिभ्य एतानि निष्पन्नानि। तस्मात्तत्तन्मन्त्रेष्व-

नेनैव क्रमेण प्राणादय एव दृश्यन्ते। तथा च ग्रहाभिवीक्षणमन्त्रा एवमाम्नायन्ते। प्राणाय मे वर्चोदा वर्चसे पवस्वापानय व्याना चेदुक्षक्रतुभ्यामित्याद्याः॥

सवनीयपुरोडाशान् प्रशंसति। "यज्ञं वाव तं प्रजापतिर्निरमिमीत। स निर्मितो नाध्रियत समम्लीयत। स एतान् प्रजापतिरपि वापानपश्यत्। तां निरवपत्। तैर्वै स यज्ञमप्यवपत्। यदपि वापा भवन्ति। यज्ञस्य धृत्या असंम्लयाय" [२] इति। यथोक्तग्रहपात्रसाध्यः प्रजापतिनिर्मितः स सोमयज्ञो दृढो नाभवत्। किन्तु विशीर्णोऽभूत्। अतस्तद्दार्ढ्यहेतूनपि पवनीयान् सवनीयपुरोडाशान् दृष्ट्वा तन्निर्वापेण तं यज्ञमप्यवपत् दृढीचकार। अतोऽन्यस्यापि तन्निर्वापे यज्ञस्य दार्ढ्याय विशरणाभावाय भवति। सोमप्रकरणे षष्ठकाण्डे प्राणाणि पात्राणि युज्यन्त इत्यनुवाके पात्रस्तुतिः। तस्मादनुसवनं पुरोडाशा निरूप्यन्त इति निर्वापविधिस्ताम्नातः। अतस्तच्छेषोऽयमनुवाको द्रष्टव्यः॥

इति चतुर्थोऽनुवाकः॥ ४॥

---

## अथ पञ्चमोऽनुवाकः।

चतुर्थे सोमशेषभूतपात्रस्तुतिरुक्ता। पञ्चमे चातुर्मास्यशेषा वपनमन्त्रा उच्यन्ते। तत्र वैश्वदेवस्यानुष्ठानान्ते यद्वपनं तत्राद्यं मन्त्रैः सूत्रकारो विनियुङ्क्ते। त्रेण्याशल्येचुकाण्डे इत्युशलाकया

लौहेन च क्षुरेणौदुम्बरेण च निकेशान् वर्त्तयते वापयते श्मश्रुण्यमृतमेव परमेष्ठि। ऋतन्नात्येति किञ्चन। ऋते समुद्र आहितः। ऋते भूमिरियꣳश्रिता। अग्निस्तिग्मेन शोचिषा। तप आक्रान्तमुष्णिहा। शिरस्तपस्याहितम्। वैश्वानरस्य तेजसा। ऋतेनास्य निवर्त्तये। सत्येन परिवर्त्तये [१]। तपसास्यानुवर्त्तये। शिवेनास्योपवर्त्तये। शग्मेनास्याभिवर्त्तये इति निवर्त्तयति, "तदृतं तत्सत्यम्। तद्व्रतं तच्छकेयम्। तेन शकेयं तेन राध्यासम्" इति। यजमानो जपतीति। सूत्रगतलौहादिशब्दार्थ उपरितनानुवाके व्याख्यास्यते। ऋतमेवेत्यादिशग्मेनास्याभिवर्त्तय इत्यन्ता मन्त्राः केशनिवर्त्तने विनियुक्ताः। तद्व्रतमित्यादियजमानजपे। ऋतं सत्यवदनं तदेव परमेष्ठि जगत्स्रष्टुः प्रजापतिस्वरूपं तस्माल्लोके किञ्चन वस्तुमतिक्रमितुं न भवति। तत् कथमिति तदेवोच्यते, योऽयं समुद्रो जलराशिः उन्नतः सोऽप्यृते समाहितः, प्रजापतिर्वेलां कृत्वा तामिमां नातिक्रमस्वेति समुद्रमुवाच। तस्मिन्नेव सत्यवाक्ये तथैव व्यवस्थितः। समुन्नतोऽपि जलराशिर्वेलामुल्लङ्घ्य भूमिं नाप्लवयति। तथा खेदमन्तरेण सर्व्वान् प्राणिनो धारयेति प्रजापतिनोक्ते सत्यवाक्ये भूमिरियमाश्रिता वर्त्तते। तथा प्रजापतेः सत्यवाक्येनैवायमग्निस्तिग्मेन शोचिषा तीक्ष्णेन रश्मिना युक्तो वर्त्तते। तथा प्रजापतिवाक्येन सत्येन महर्षिभिः तप्यमानं तप उष्णिहादिच्छन्दोविशेषयुक्तेन मन्त्रेणाक्रान्तं तपस्यमाना हि छन्दोयुक्ता मन्त्रा जपन्ति। तथा प्रजापतिसत्यवाक्यादेव यजमानाः

शिरोमुण्डनादिलक्षणे तपसि व्यवस्थिताः, तस्माद्वैश्वानरस्य स्वामिनः प्रजापतेः तेजसा ऋतेनास्य यजमानस्य केशान्निवर्त्तये निवृत्तान् करोमि। सत्येन तदीयेन परिवर्त्तये परितः परित्यक्तान् करोमि। मानसमृतं वाचिकं सत्यमिति तद्भेदः। तथास्य यजमानस्य तपसां निमित्तभूतेनानुवर्त्तये। केशाननुकूलान् करोमि। शिवेन शान्तेन प्रजापतिसत्यवाक्येनास्य केशानुपवर्त्तये। समीपे केशमूले क्षुरस्यावर्त्तनं कुर्व्वे। शग्मेन सुखप्रापकेन प्रजापतेः सत्यवाक्येनास्य केशानुपवर्त्तये अभितः क्षुरं व्यापारयाति। सोऽयमध्वर्य्योर्वपनमन्त्रः। अथ यजमानस्य जपमन्त्रः। तत्प्रजापतेर्ऋतं मानसं तच्च वाचिकं सत्यं तदनेनानुष्ठेयं तद्व्रतं कर्म्मलक्षणं तत्सर्व्वं सम्पादयितुं शकेयं शक्तो भूयासं तेन प्रजापतिसत्येनैव शकेयं शक्तो भूयासं व्रतेन कर्म्मणा राध्यासं समृद्धो भूयासम्। अथ वरुणप्रघासपर्व्वानन्तरभाविवपनमन्त्रौ ॥

कल्पः। अत्र पौर्णमासेष्ट्योदनादिपूर्व्ववत् निवर्त्तनं सर्व्वं वापयेत्। मन्त्रादिर्विक्रियते। "यद्घर्म्मः पर्य्यवर्त्तयत्। अन्तान् पृथिव्या दिवः। अग्निरीशान ओजसा। वरुणो धीतिभिः सह [२]। इन्द्रो मरुद्भिः सखिभिः सह" इति। अग्निस्तिग्मेनेति समानमिति। घर्म्मो दीप्यमानो य आदित्योऽस्ति सोऽयं पृथिव्या दिवश्चान्तान् प्रजापतिः सत्यवाक्येनैव पर्य्यवर्त्तयत् परितः प्रकाशितवान्। अग्निरोजसा तेजोबलेनेशानः सर्व्वं दग्धुं प्रभुर्भवति। वरुणस्य धीतिभिर्बुद्धिविशेषैः सह स्वव्यापारे

प्रभवति । इन्द्रश्च मरुद्भिः स्वकीयैः सखिभिः सह प्रजापतिः सत्यवाक्येन स्वव्यापारे प्रभुर्भवति । एतावान् पूर्व्वस्मान् मन्त्राद्विशेषः । अवशिष्टस्तु समानः ॥

तस्यावशिष्टस्य पाठस्तु । "अग्निस्तिग्मेन शोचिषा । तप आक्रान्तमुष्णिहा । शिरस्तपस्याहितम् । वैश्वानरस्य तेजसा । ऋतेनास्य निवर्त्तये । सत्येन परिवर्त्तये । तपसास्यानुवर्त्तये । शिवेनास्योपवर्त्तये । शग्मेनास्याभिवर्त्तये [३] । तदृतं तत्सत्यम् । तद्व्रतं तच्छकेयम् । तेन शकेयं तेन राध्यासम्" इति । पूर्व्ववद्व्याख्येयम् । पूर्व्ववद्वैश्वदेवान्ते श्मश्रूणामेव वपनं केशानान्तु कर्त्तनम् । इह तु केशानां वपनकर्त्तने विकल्पिते ॥

अथ साकमेधिपर्व्वानन्तरभाविवपनमन्त्रौ । कल्पः । पौर्ण्णमास्याश्चोन्दनादि पूर्व्वकं निवर्त्तनं सर्व्वं वापयेत् । मन्त्रादिर्विक्रियते । "यो अस्याः पृथिव्यास्त्वचि । निवर्त्तयत्योषधीः । अग्निरीशान ओजसा । वरुणो धीतिभिः सह । इन्द्रो मरुद्भिः सखिभिः सह । अग्निस्तिग्मेनेति समानम्" इति । य आदित्योऽस्ति सोऽयं प्रजापतिः सत्यवाक्येनास्याः पृथिव्यास्त्वचि उपरिभागे ओषधीर्भिर्निवर्त्तयति परिपाचयति । अग्निरीशान इत्यादि पूर्व्ववद्व्याख्येयम् । मन्त्रस्तु । "अग्निस्तिग्मेन शोचिषा । तप आक्रान्तमुष्णिहा [४] । शिरस्तपस्याहितम् । वैश्वानरस्य तेजसा । ऋतेनास्य निवर्त्तये । सत्येन परिवर्त्तये । तपसास्यानुवर्त्तये । शिवेनास्योपवर्त्तये । शग्मेनास्याभिवर्त्तये । तदृतं तत्सत्यम् । तद्व्रतं तच्छकेयम् । तेन शकेयं तेन राध्यासम्"[५] इति । पूर्व्ववद्व्याख्येयम् ॥

अथ शुनाशीरीयपर्व्वानन्तरचोरं मन्त्रौ। कल्पः। अत्र पौर्णमास्येष्टौन्दनादिपूर्व्ववन्निवर्त्तनं सर्व्वं वा वापयेत्। मन्त्रादि निष्क्रियते। "एकं मासमुदसृजत्। परमेष्ठी प्रजाभ्यः। तेनाभ्यो मह आवहत्। अमृतं मर्त्त्याभ्यः। प्रजामनुप्रजायसे। तद् ते मर्त्त्यामृतम्। येन मासा अर्द्धमासाः। ऋतवः परिवत्सराः। येन ते ते प्रजापते। ईजानस्य न्यवर्त्तयन् [६]। तेनाहमस्य ब्रह्मणा। निवर्त्तयानि * जीवसे। अग्निस्तिग्मेन शोचिषेति समानमिति। परमेष्ठी प्रजापतिरेकं मासं मासोपलचितं चातुर्मास्यानुष्ठानयोग्यकालेन महः महदमृतं अविनाशिफलमावहत् सम्पादितवान्। तच्च फलं पूर्व्वप्रपाठके चातुर्मास्ययाजिनो मरणविचारे निर्णीतम्। सूत्रकारेणाप्येतदेव प्रयुक्तम्, अच्य्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवतीति। हे मर्त्त्य मनुष्यरूप यजमान प्रजां पुत्रपौत्रादिरूपाम् अनुप्रजायसे अनुक्रमेणोत्पादयसि। तद् तदेव पुत्रपौत्रादिरूपेणावस्थानं तेन चामृतम् अविनाशिकफलं मर्त्त्यत्वादेतस्य शरीरस्य नाशेऽपि पुत्रपौत्रादिसन्ततेरविच्छेदनाद्येन मन्त्रसामर्थ्येन मासार्द्धमासर्त्तुसंवत्सरविशेषाः स्वोचितकार्य्यकारिणः प्रवर्त्तन्ते, प्रजापतेः पुत्रपौत्रादिस्वरूपाणां प्रजानां पालकः यजमान ईजानस्य यागं कृतवतस्ते तव मासादिकास्ते कालविशेषा येन मन्त्रेण न्यवर्त्तयन् निरन्तरं सम्पादिताः।

---

* तेनाहमस्य ब्रह्मणा। निवर्त्तयानि इति F चिह्नितपुस्तकपाठः।

तेन ब्राह्मणमन्त्रेणाहमध्वर्युः । अस्य यजमानस्य जीवसे जीवनाय निवर्त्तयामि छन्तनेन केशान्निवृत्तान् करोमि । एतावानत्र मन्त्रविशेषः । अवशिष्टस्तु समानः । तत्पाठस्तु । "अग्निस्तिग्मेन शोचिषा । तप आक्रान्तमुष्णिहा । शिरस्तपस्याहितम् । वैश्वानरस्य तेजसा । ऋतेनास्य निवर्त्तये । सत्येन परिवर्त्तये । तपसास्यानुवर्त्तये । शिवेनास्योपवर्त्तये । शग्मेनास्याभिवर्त्तये । तदृतं तत्सत्यम् । तद्व्रतं तच्छकेयम् । तेन शकेयं तेन राध्यासम्" [७] इति । पूर्ववद्व्याख्येयम् । अथवा क्षुरपरत्वेन योजनीयम् । अग्निसमानोऽयं क्षुरः सतीक्ष्णेन दीप्तिसमानेन धाराग्रेण सह वर्त्तते । उष्णिहा छन्दःसमानसामर्थ्ययुक्तेन क्षुरेण वपनरूपं तप आक्रान्तं प्रारब्धं यजमानस्य शिरः तस्मिन् वपनरूपे तपस्याहितं समर्पितम् । वैश्वानरसमानस्य क्षुरस्य तेजःपरिमाणेन ऋतेनावश्यं भाविव्यापारेणास्य यजमानस्य केशान्निवर्त्तये निवृत्तान् करोमि । निवृत्तिप्रकारविशेषा एव परिवर्त्तनाभिवर्त्तनशब्दैरुच्यते । तृतीयान्तैः क्षुर एव विशेष्यते । यजमानमन्त्रस्त्वेवं व्याख्येयः । तदेतत् केशछन्तनं तदेव वाचिकं मानससत्यरूपमनुष्ठीयमानवपनरूपं तत्छन्तनं सम्पादयितुं शक्नोमि । तेन च छन्तनेन कर्म साङ्गं कर्त्तुं शक्नोमि । फलेन च समृद्धो भूयासमिति ॥

इति पञ्चमोऽनुवाकः ॥ ५ ॥

---

अथ षष्ठोऽनुवाकः।

पञ्चमे चातुर्मास्ययाजिनः पवनमन्त्रा उक्ताः। षष्ठे तद्विधिरुच्यते। तत्रादावन्वयव्यतिरेकाभ्यां वपनक्रमं विधत्ते। "देवा वै यद्यज्ञेऽकुर्वत। तदसुरा अकुर्वत। तेऽसुरा ऊर्द्ध्वं पृष्ठेभ्यो नापश्यन्। ते केशानग्रेऽवपन्त। अथ श्मश्रूणि। अथोपपक्षौ। ततस्तेऽवाञ्च आयन्। पराभवन्। यस्यैवं वपन्ति। अवाङेति [१]। अथो परैव भवति। अथ देवा ऊर्द्ध्वं पृष्ठेभ्योऽपश्यन्। त उपपक्षावग्रेऽवपन्त। अथ श्मश्रूणि। अथ केशान्। ततस्तेऽभवन्। सुवर्गं लोकमायन्। यस्यैवं वपन्ति। भवत्यात्मना। अथो सुवर्गं लोकमेति" [२] इति। देवैर्यद्यदङ्गं यज्ञेऽनुष्ठितं तत्तदङ्गमसुरास्तथैवान्वतिष्ठन्। वपने तु स्वबुध्यैव प्रवृत्ताः। पृष्ठशब्देन तत्समीपवर्त्तिनौ कक्षावुपलक्ष्येते। ते सर्व्वेऽप्यसुराः स्वकीयान् कक्षानारभ्योर्द्ध्वं वपनं कर्त्तव्यमिति शास्त्रार्थं नाज्ञापयिषुः। अज्ञात्वा च केशश्मश्रुकक्षक्रमेणाधोमुखप्रवृत्तं वपनं कृत्वा स्वयमवाञ्चो नीचा भूत्वा लोके समागत्य पराभूताः। एवमन्योऽपि नीचो भूत्वा लोके समागत्य पराभवति। देवास्तु कक्षेभ्य ऊर्द्ध्वक्रमं ज्ञात्वा कक्षश्मश्रुकेशक्रमेण वपनं कृत्वा लोकेऽस्मिन्नैश्वर्य्यं प्राप्ताः ऊर्द्ध्वक्रमेण स्वर्गञ्च प्राप्नुवन्। अन्योऽप्येवं कृत्वात्र स्वयमेव प्रभुर्भवति स्वर्गञ्च प्राप्नोति॥

ऊर्द्ध्वक्रमेण सह विकल्पार्थं क्रमान्तरं विधत्ते। "अथैतन्मनुर्वप्ते मिथुनमपश्यत्। स श्मश्रूण्यग्रेऽवपत। अथोपपक्षौ। अथ केशान्। ततो वै स प्राजायत प्रजया पशुभिः। यस्यैवं वपन्ति।

प्र प्रजया पशुभिर्मिथुनैर्जायते" इति। वप्ते यो वप्ताऽध्वर्युः तदर्थं तस्यानुष्ठानार्थं तन्मिथुनमूर्द्धमवाञ्चं चेतिद्विविधं वपनप्रकारं मनुरपश्यत्। दृष्ट्वा च मध्यवर्त्तीनि श्मश्रूण्यादौ वप्ता ततोऽधोवर्त्तिकक्षयोः केशानां वपनञ्चकार। ततस्तादृशाद्वपनात् स मनुः प्रजया पशुभिश्च प्रभूतोऽभूत्। अन्योऽप्येवं कृत्वा मनुष्यमिथुनैः पशुमिथुनैश्च प्रभूतो भवति॥

तदेतद्वपनं प्रशंसति। "देवासुराः संयत्ता आसन्। ते संवत्सरे व्यायच्छन्त। तान्देवाश्चातुर्मास्यैरेवाभिप्रायुञ्जत [३]। वैश्वदेवेन चतुरो मासोऽवृञ्जतेन्द्रराजानः। ताञ्छीर्षं निचावर्त्तयन्त परि च। वरुणप्रघासैश्चतुरो मासो वृञ्जत वरुणराजानः। ताञ्छीर्षं निचावर्त्तयन्त परि च। साकमेधैश्चतुरो मासोऽवृञ्जत सोमराजानः। ताञ्छीर्षं निचावर्त्तयन्त परि च। या संवत्सर उपजीवासीत्। तामेषामवृञ्जत। ततो देवा अभवन्। परासुराः [४]। य एवं विद्वाꣳश्चातुर्मास्यैर्यजते। भ्रातृव्यस्यैव मासोऽवृक्त्वा। शीर्षन्निचावर्त्तयते परि च। यैषा संवत्सर उपजीवा। वृङ्क्ते तां भ्रातृव्यस्य। क्षुधास्य भ्रातृव्यः पराभवति" इति। देवाश्चासुराश्च युद्धोद्युक्ताः सन्तः संवत्सरानुष्ठानसाध्ये फले व्यायच्छन्त विरोधमारभन्। अस्माकमेवेदं फलं भवत्विति परस्परकलहं कृतवन्तस्तदानीं तानसुरानभिलक्ष्य तेषां फलं वारयितुं चातुर्मास्यैरेवानुष्ठानं कृतवन्तः। तेषु च देवेषु त्रयो व्यूहाः, इन्द्रस्वामिक एको व्यूहः, वरुणस्वामिको द्वितीयः, सोमस्वामिकस्तृतीयः। तत्र वरुण-

स्वामिका देवा वैश्वदेवेन पर्व्वणा चतुरो मासानसुरसम्बन्धिनो विनाशितवन्तः। विनाशितानेव तन्मासानभिलक्ष्य तान् शीर्षन् स्वकीये शिरसि निवर्त्तनञ्च परिवर्त्तनञ्च कृतवन्तः। पवनीयानां केशानां स्थापनीयेभ्यः शिखागतकेशेभ्यः पृथक्करणं निवर्त्तनं पृथक्कृतानां वपनं परिवर्त्तनम्। एवमुत्तरव्यूहद्वयेऽपि योजनीयम्। एवं त्रिविधमासचतुष्टयानुष्ठानेनैकस्मिन् संवत्सरे तैरसुरैरुपजीवनाय धनादिसम्पत् सम्पादिता। एषामसुराणां तां सम्पदं विनाशितवन्तः। ततो देवाः सम्पन्ना अभवन्। असुराश्च पराभूताः। एवं ज्ञात्वा चातुर्मास्यानुष्ठानेन भ्रातृव्यसम्बन्धिनो मासान् विनाश्य तद्विनाशनार्थं स्वशिरसि निवर्त्तनपरिवर्त्तने कृत्वा वैरिणः संवत्सरोपजीव्यं सम्पदं सम्यग्विनाशयति। स च शत्रुरन्नाभावेन क्षुत्पीडितो भवति॥

अथ वपनसाधनं विधत्ते। "लोहितायसेन निवर्त्तयते। यदा इमामग्निर्ऋतावागते निवर्त्तयति। एतदेवैनꣳ रूपं कृत्वा निवर्त्तयति। सा ततः श्वश्वो भूयसी भवन्त्येति [५]। प्रजायते। य एवं विद्वाँल्लोहितायसेन निवर्त्तयते। एतदेव रूपं कृत्वा निवर्त्तयते। स ततः श्वश्वो भूयान् भवन्नेति प्रैव जायते" इति। अयसा निर्म्मितः क्षुर आयसः, स च लोहिततासमिश्रेणायसा निर्म्मितत्वात् तादृशेन क्षुरेण केशान् निवर्त्तयेत् वपनं कुर्य्यादित्यर्थः। लोके सञ्चरन् दावाग्निः ऋतौ धर्म्मकालरूपे समागते सति यो देवोग्ररूपं धृत्वेमां भूमिं निवर्त्तयति शुष्कजलाशयां पातितपलाशपादपां लूनधान्यां मुण्डितामिव

करोति, तदानीमग्निरेतदेव लोहितक्षुरसमानरूपं कृत्वा इमां निवृत्तजलादियुक्तां करोति। सा च भूमिर्दग्धतृणा सती तत ऊर्द्धमुत्तरोत्तरदिवसे भूयसी भवन्ती प्रजायते वर्द्धमाना सती तृणादिकमुत्पादयति। एवमन्योऽपि लोहितायसेन क्षुरेण वपनं प्राप्नुवन्नग्निसमानरूपं तस्य कृत्वा वपनं प्राप्नोति। स च तत ऊर्द्धं धनादिभिः समृद्धोऽभवन् लोके सञ्चरति प्रजाश्चोत्पादयति॥

वपनीयानामितरेषाञ्च केशानां विभागकरणे साधनं विधत्ते। "त्रेण्या शलल्या निवर्त्तयेत। त्रीणि त्रीणि वै देवानामृद्धानि। त्रीणि छन्दाꣳसि। त्रीणि सवनानि। त्रय इमे लोकाः [६]। ऋद्ध्यामेव तद्वीर्य्य एषु लोकेषु प्रतितिष्ठति" इति। तिस्र एण्यः श्वेतराजयो यस्याः शलल्याः सा त्रेणी शललीशब्देन शललाख्यस्य क्षुद्रमृगस्य पुच्छभागवर्त्ती तीक्ष्णाग्रलोहशलाकासदृशो रोमविशेष उच्यते। तया श्वेतराजित्रययुक्तया शलल्या वपनीयान् केशान् इतरेभ्यः पृथक्कुर्य्यात्। तच्च श्वेतराजित्रयं प्रशस्तम्, यतो देवानां सम्बन्धीनि समृद्धं वस्तूनि प्रत्येकं त्रिसङ्ख्यायुक्तानि दृश्यन्ते। गायत्री त्रिष्टुप् जगती इत्येतानि छन्दांसि त्रिसङ्ख्याकानि। प्रातर्माध्यन्दिनतृतीयाख्यानि सर्व्वे तानि च त्रिसङ्ख्याकानि लोकाश्च त्रिसङ्ख्याकाः। अतो राजित्रययोगे सति देवसम्बन्धिन्या समृद्धौ वीर्य्ये लोकत्रये च प्रतितिष्ठति॥

वपनक्रमं साधनञ्च विधाय वपनं विधत्ते। "यच्चातुर्मास्य

याज्यात्मनो नावद्येत्। देवेभ्य आवृश्च्येत। चतुर्षु चतुर्षु मासेषु निवर्त्तयेत। परोक्षमेवैतद्देवेभ्य आत्मनोऽवद्यत्यनार्त्यै" इति। चातुर्मास्ययाजी स्वशरीरांशं यदि देवेभ्यो नावद्येत्। तदा देवेभ्यो विच्छिद्येत्। अतो विच्छेदाभावाय तदा तदा मासचतुष्टये वपनं कुर्य्यात्। तथा सति वपनव्यवधानेन स्वशरीरावदानमेव देवार्थं करोति। तच्चाविच्छेदाय भवति॥

तदेतद्वपनं प्रशंसति। "देवानां वा एष आनीतः। यश्चातुर्मास्ययाजी। य एवं विद्वान्निच वर्त्तयते परि च। देवता एवाप्येति। नास्य रुद्रः प्रजां पशूनभिमन्यते"[७] इति। योऽयं चातुर्मास्ययाजी स एष देवानां स्वभूतः सन् लोके समानीतः। तस्मादेवं विद्वान् पुरुषः शलल्या केशान् पृथक्कुर्य्यात्। लोहितायसेन वपेच्च। स देवता एव प्राप्नोति। अस्य प्रजां पशून् रुद्रो न हिनस्ति॥

इति षष्ठोऽनुवाकः॥ ६॥

---

## अथ सप्तमोऽनुवाकः।

षष्ठे चातुर्मास्यशेषो वपनविधिरुक्तः। सप्तमे त्वग्निचयनशेषा इष्टकोपधानमन्त्रा उच्यन्ते। प्राचीदिशामित्यादिभिर्मन्त्रैर्या अपानभृतय इष्टका उक्ताः। तदुपधानादूर्ध्वं आयुष इत्यादिभिर्मन्त्रैः द्वादशसन्तत्याख्या इष्टका उपधेयाः। तन्मन्त्रपाठस्तु। "आयुषः प्राणꣳ सन्तनु। प्राणादपानꣳ सन्तनु। अपानाद्व्यानꣳ सन्तनु। व्यानाच्चक्षुः सन्तनु। चक्षुषः श्रोत्रꣳ

सन्तनु। श्रोत्रान्मनः सन्तनु। मनसो वाचꣳ सन्तनु। वाच आत्मानꣳ सन्तनु। आत्मनः पृथिवीꣳ सन्तनु। पृथिव्या अन्तरिक्षꣳ सन्तनु। अन्तरिक्षाद्दिवꣳ सन्तनु। दिवः सुवः सन्तनु" [१] इति। हे इष्टके आयुःप्राणयोः परस्परं सन्ततिमविच्छेदं कुरु। आयुष इति तृतीयार्थे पञ्चमी। आयुषा प्राणꣳ संयोजय इत्यर्थः। एवमुत्तरत्रापि योज्यम्। आत्मनो मनो जीवो वा द्यौर्द्युलोकः। सुवःशब्देन तत्रत्यो भोगस्थानविशेष उच्यते॥

इति सप्तमोऽनुवाकः॥ ७॥

---

अथाष्टमोऽनुवाकः।

सप्तमे सन्तत्याष्टका मन्त्रा उक्ताः। अष्टमेऽथर्वशिरोऽभिधानामिष्टकानां दशानां मन्त्रा उच्यन्ते। तास्विष्टकाः प्राच्या त्वा दिशा सादयामि इत्येतैर्मन्त्रैरुपधेयाभ्य इष्टिकाभ्य ऊर्द्धं पञ्चम्याञ्चितायां उपधेयाः। तत्र प्रथमामृचमाह। "इन्द्रो दधीचो अस्थिभिः। वृत्राण्यप्रतिष्कुतः। जघान नवतीर्नव" इति। अथर्वणः पुत्रः कश्चिदृषिर्दध्यङ्नामा तस्य सान्यस्थीनि वज्रसमानि तैरस्थिभिर्वृत्राणि निवारकाणि परबलानि जघान। कीदृश इन्द्रः, अप्रतिष्कुतः प्रतिकूलो भूत्वा कुतोऽयमित्येवं निराकर्त्ता वैरी यस्यासौ प्रतिष्कुतः, तथाविधशत्रुराहित्यादयमप्रतिष्कुतः। कियन्ति वृत्राणि नवसङ्ख्याकानि नवतिश्च, दशाऽधिकान्यष्टशतानीत्यर्थः। हे इष्टके तथाविधे-

न्द्ररूपा त्वमसि तादृशमिन्द्रस्त्वामुपदधात्विति वाऽध्याहर्त्तव्यम् ॥

अथ द्वितीयामाह। "इच्छन्नश्वस्य यच्छिरः। पर्व्वतेष्वपश्रितम्। तद्विदच्छर्य्यणावति" इति। अग्निः कदाचिदश्वो भूत्वा देवेभ्योऽपक्रम्य पर्व्वतेषु निलीनः। तदानीमयमिन्द्रः तस्याश्वस्य यच्छिरो द्रष्टुमिच्छन् पर्व्वतेषु चचार। तदानीं पर्व्वतेष्वाश्रितं तदश्वस्य शिरः शर्य्यणावन्नामके कस्मिंश्चित् पर्व्वते विदत् लब्धवान्। हे इष्टके त्वं तथाविधाश्वशिरोरूपासि ॥

अथ तृतीयामाह। "अत्राह गोरमन्वत। नाम त्वष्टुरपीच्यम्। इत्था चन्द्रमसो गृहे" इति। त्वष्टुः सूर्य्यस्य गोशब्दाभिधेयो रश्मिर्योऽस्ति तस्य नामात्राह। अस्मिन्नेवाग्नौ विद्यत इत्येवं यजमाना अमन्वत। अग्निं दीप्तं दृष्ट्वा सूर्य्यरश्मिरेव भावितवन्त इत्यर्थः। कीदृशं रश्मिनाम। अपीच्यम्, अप्यञ्चन्ति पुनः पुनर्गच्छन्तीत्यपीच्यम्। यदा यदा वह्निज्वाला तदा तदा सूर्य्यरश्मिरित्येवं तेषां निश्चयः। एतच्च युक्तम्। एतस्यैव तेजसो रात्रावग्निप्रवेशस्य दिवसे सूर्य्यप्रवेशस्य वाग्निहोत्रब्राह्मणे प्रपञ्चयिष्यमाणत्वात्। इत्था चन्द्रमसः गृहे। एवमेव चन्द्रमण्डले यो रश्मिः तं नामाप्यस्मिन्नेवाग्नौ मन्यन्ते। सूर्य्यरश्मेरेव चन्द्रगतत्वात्। सुषम्नः सूर्य्यरश्मिश्चन्द्रमा इति श्रुत्यन्तरात्। यः सूर्य्यरश्मिः यश्चन्द्ररश्मिः तदुभयरूपे यमग्निर्ज्वालेति तात्पर्य्यार्थः। हे इष्टके तथाविधाग्निरूपा त्वमसि ॥

अथ चतुर्थीमाह। "इन्द्रमिद्गाथिनो बृहत् [१]। इन्द्र-मर्कैभिरर्किणः। इन्द्रं वाणीरनूषत" इति। गाथिनः सामगाः इन्द्रमित् इन्द्रमेव बृहत् यथा महद्भवति तथा गायन्तीति शेषः। अर्किणः शस्त्रिणो होतारः। अर्कैभिरर्चनीयैः शस्त्रै-रिन्द्रं शंसन्तीति शेषः। वणीरध्वर्योर्वाच इन्द्रमनूषतस्तुवन्ति। हे इष्टके तथाविधेन्द्ररूपा त्वमसि॥

अथ पञ्चमीमाह।"इन्द्र इद्धर्य्योः सचा। सम्मिश्ल आवचो-युजा। इन्द्रो वज्री हिरण्ययः" इति। हर्य्योरश्वयोरिन्द्र इत्। इन्द्र एव सचा सक्तः सम्बद्धहरिद्वययुक्ते रथेऽवस्थित इत्यर्थः। तथा वचोयुजा नानाविधवाक्यसन्दर्भयुक्तेन स्तोत्रेण आसम-न्तात् सम्मिश्लः संयुक्तः। स एवेन्द्रो वज्री वज्रहस्तः। हिरण्ययः सुवर्णाभरणयुक्तः॥

अथ षष्ठीमाह। "इन्द्रो दीर्घाय चक्षसे। आ सूर्य्यꣳ रो-हद्दिवि। वि गोभिरद्रिमैरयत्" इति। अथ इन्द्रो दीर्घाय चक्षसे दूरवर्त्तिनो दर्शनाय दिवि द्युलोके सूर्य्यमारोहयत् आरोहं कृतवान्। स च सूर्य्यो गोभीरश्मिभिरद्रिं पर्व्वतादि-युक्तां भूमिविशेषेणैरयत् प्रेरितवान्, प्रकाशितवानित्यर्थः॥

अथ सप्तमीमाह। "इन्द्र वाजेषु नो अव। सहस्रप्रधनेषु च [२]। उग्र उग्राभिरूतिभिः" इति। हे इन्द्र त्वमुग्रः प्रति-कूलनिवारणे तीव्रः सन् वाजेष्वन्नेषु सहस्रप्रधनेषु सहस्र-सङ्ख्याकेषु प्रकृष्टधनेषु च निमित्तभूतेषु उग्राभिरूतिभिः प्रति-बन्धनिवारणाय तीव्रैः रक्षणैः नोऽस्मान् अव रक्ष॥

अथाष्टमीमाह। "तमिन्द्रं वाजयामसि। महे वृत्राय हन्तवे। स वृषा वृषभोऽभुवत्" इति। तथाविधगुणयुक्तमिन्द्रं वयं वाजयामसि गमयामः भक्त्या प्रेरयाम इत्यर्थः। किमर्थं महे वृत्राय हन्तवे महान्तं पापरूपं वैरिणं हन्तुम्। स चेन्द्रो वृषा अस्माकं कामानां वर्षयिता सन् वृषभोऽभुवत् श्रेष्ठो भवतु ॥

अथ नवमीमाह। "इन्द्रः स दामने कृतः। ओजिष्ठः स बले हितः। द्युम्नी श्लोकी स सोम्यः" इति। स तादृश इन्द्रः दामने दामकृत्ये वन्धने कृतः पाशैर्व्वशीकृत इत्यर्थः। स चेन्द्रः ओजिष्ठः अतिबलवान्। अतएव बले हितः बलकृत्ये वैरि-विनाशनेऽस्माभिर्भक्त्या प्रेरितः। स चेन्द्रो द्युम्नी धनवान्। श्लोकी कीर्त्तिमान्। सोम्यो रमणीयः ॥

अथ दशमीमाह। "गिरा वज्रो न सम्भृतः। सबलो अनपच्युतः। ववक्षुरुग्रो अस्तृतः" [२] इति। सोऽयमिन्द्रो गिरा अस्मदीयया स्तुतिरूपया वाचा वज्रो न वज्र इव सम्भृतः। सम्यगस्माभिर्वशीकृतः। सबलो बलेन सैन्येन युक्तः। अनप-च्युतः कदाचिदप्यपलायितः। ववक्षुर्युद्धभारं वोढुमिच्छुः। उग्रः शत्रूणां भयङ्करः। अस्तृतः केनाप्यहिंसितः। हे इष्टिके ईदृगिन्द्ररूपा त्वमसि। इदृगिन्द्रस्त्वामुपदधात्विति सर्व्वत्रशेषो ऽध्याहर्त्तव्यः ॥

इति अष्टमोऽनुवाकः ॥ ८ ॥

---

## अथ नवमोऽनुवाकः।

अष्टमेऽथर्वशिरोऽभिधानानामिष्टकानां मन्त्रा उक्ताः। नवमे सोमशेषभूता इष्टयो विधीयन्ते। तत्रादौ शब्दनिर्वचनेनेष्टीः प्रशंसति। "देवासुराः संयत्ता आसन्। स प्रजापतिरिन्द्रं ज्येष्ठं पुत्रमपन्यधत्त। नेदेनमसुरा बलीयाᳬसोऽहनन्निति। प्रह्लादो ह वै कायाधवः। विरोचनᳬ स्वं पुत्रमपन्यधत्त। नेदेनं देवा अहनन्निति। ते देवाः प्रजापतिमुपसमेत्योचुः। नाराजकस्य युद्धमस्ति। इन्द्रमन्विच्छामेति। तं यज्ञक्रतुभिरन्वैच्छन् [१]। तं यज्ञक्रतुभिर्नान्वविन्दन्। तमिष्टिभिरन्वैच्छन्। तमिष्टिभिरन्वविदन्। तदिष्टीनामिष्टित्वम्। एष्टयो ह वै नाम। ता इष्टय इत्याचक्षते परोक्षेण। परोक्षप्रिया इव हि देवाः" इति। देवाश्चासुराश्च यदा युद्धार्थं उद्यताः तदानीं प्रजापतिः स्वकीयं ज्येष्ठं पुत्रमिन्द्रं युद्धभूमेरपनीय क्वचिद्गूढे स्थाने निहितवान्। तस्याप्ययमभिप्रायः। बलीयांसोऽसुराः एनं दुर्बलमिन्द्रं नेदेनं हनं नैव घ्नन्। तथा कयाधुसञ्ज्ञिताया हिरण्यकशिपुभार्य्यायाः पुत्रः प्रह्लादः। स्वकीयं पुत्रं विरोचनमसुरसैन्यस्वामिनं युद्धभूमेरपनीय क्वचिन्निहितवान्। तस्यायमभिप्रायः। एवं विरोचनं देवाः सर्व्वथा मा घ्नन्त्विति। एवञ्च राजद्वयरहितयोः सेनयोरवस्थितयोः सत्योर्देवाः प्रजापतिसमीपं प्राप्यैवमूचुः। राजरहितस्य सैन्यस्य न क्वचिदपि युद्धमस्ति। युयुत्सवः सर्व्वेऽपि राजानमन्तरेण पलायिष्यन्ते। तस्मादिन्द्रं राजानं तत्र

तत्रान्विच्छाम इत्युक्त्वा प्रजापतिनानुज्ञाताः तमिन्द्रं लब्धुं, ज्योतिष्टोमोक्थ्यादिरूपान् क्रतूननुष्ठितवन्तः। अङ्गभूतेष्टि-रहितैस्तैर्महाक्रतुभिरिन्द्रमलब्ध्वा तत्र कारणमङ्गेष्टिवैकल्यं निश्चित्य ता इष्टीरनुष्ठाय ताभिरिष्टिभिरेनं लब्धवन्तः। एवञ्च सत्यन्वेषणसाधनत्वादेष्टय इत्येतासां नाम। तथापि मुख्यं नाम गोपयित्वा परोक्षेण तिरोहितेन नाम्ना व्यवहर्त्तुमिष्टय इत्या-चक्षते। अन्वेषणसाधनत्वमेष्टित्वं यजनसाधनत्वमिष्टित्वम्। अतस्तेन व्यवहारे सति मुख्यं नाम परोक्षं भवति। देवानाञ्च परोक्षं नाम प्रियम्। अतएव लोकेऽपि देवदत्तादिनाम परित्यज्याचार्य्या उपाध्याया मिश्रा इत्यादिनामभिः पूज्याः परितुष्यन्ति। यद्यप्यन्वेषणार्थस्वीकारेऽपीच्छतिधातोः क्तिन्प्रत्यये सति यजिधातुवदिष्टिरित्येव रूपं सम्पद्यते। तथाप्यौणादिकं किञ्चित् ककाररहितं किञ्चित्प्रत्ययमभिप्रेत्य रूपमीदृशं श्रुत्या विवक्षितम्॥

याभिरिष्टिभिरिन्द्रमैच्छन्। तासां मध्ये प्रथमामिष्टिं दर्श-यति। "तस्मा एतमाग्ना वैष्णवमेकादशकपालं दीक्षणीयं निरवपन्। तदपद्रुत्यातन्वत। तान् पत्नीसंयाजान्त उपानयन् [२]। ते तदन्तमेव क्लोदद्रवन्" इति। तस्मादिन्द्रलाभार्थमग्ना विष्णुदेवताकमेकादशकपालं पुरोडाशयुक्तं दीक्षणीयाख्यं क-र्म्मानुष्ठितवन्तः। तेषु देवेषु मध्ये यावद्भिर्देवैर्यजमानैर्ऋत्विग्रूपैः कर्म्मानुष्ठानं शक्यते। तावन्तो देवाः कृत्स्नाद्देवसैन्यसङ्घादपक्रम्य क्वचिद्देवयजनदेशे तद्दीक्षणीयाख्यं कर्म्म विस्तारितवन्तः।

मदानीमितरदेवाः तमिन्द्रमन्विष्य तैस्तैर्ऋत्विग्भिः पत्नीसंया-
जपर्य्यन्ते कर्म्मण्यनुष्ठिते सतिताननुष्ठातृन्देवान् प्रति समीपे
समानयन्। ते च ऋत्विग्रूपा देवाः स्वप्रयोजनस्य निष्पन्नत्वात्
पत्नीसंयाजान्तमेव तत् कर्म्म कृत्वा तत्परित्यज्योद्गताः॥

तावतापीन्द्रस्थैर्य्याभावे पुनस्त ऋत्विजः प्रायणीयाख्यामिष्टिं
कृतवन्तः। इत्येतद्दर्शयति। "ते प्रायणीयमभिसमारोहन्।
तदपद्रुत्यातन्वत। ताञ्छंय्वन्त उपानयन्। ते तदन्तमेव
कृत्वोदद्रवन्" इति। अभिसमारोहन्, प्रायणीयाख्यं कर्म्मा-
भिलक्ष्य देवयजनं प्रविष्टाः। अन्यत् पूर्व्ववत्॥

पुनरपीन्द्रस्थैर्य्यायातिथ्याख्यामिष्टिं दर्शयति। "त आति-
थ्यमभिसमारोहन्। तदपद्रुत्यातन्वत। तानिडान्त उपान-
यन्। ते तदन्तमेव कृत्वोदद्रवन्। तस्मादेता एतदन्ता इष्टयः
सन्तिष्ठन्ते [३] इति। पत्नीसंयाजानामेकविधत्वान्नास्ति तत्र
सन्देहः। शंय्विडयोर्द्वैविध्यमस्ति। पत्नीसंयाजेभ्यः पूर्व्वं होता
शंयुवाकेऽनूच्यमाने आहवनीये परिधीननुप्रहरति। सोऽय-
मेकः प्रकारः। आश्वलायनस्तु, पत्नीसंयाजानभिधाय तदूर्द्ध्वं
शंयुवाकविकल्पमुदाजहार, शंयुवाको भवेन्न वेति। पुरोडा-
शेत्येवमिडापि द्विविधा। तत्र पूर्व्वमिडान्तत्वं द्रष्टव्यम्॥

ता एतामिष्टीः प्रशस्य तास्तिस्रः इष्टीर्विधत्ते। "एवꣳ
हि देवा अकुर्व्वत। इति देवा अकुर्व्वत। इत्यु वै मनुष्याः कु-
र्व्वते" इति। यस्मादेवमुक्तप्रकारेण देवा अकुर्व्वत। तस्मान्म-
नुष्या अप्यनेनैव प्रकारेण इष्टीः कुर्य्युः। मध्ये पठितमिति

देवा इति वाक्यं मनुष्यवत्कृतेरनुवादः। इति वा इत्यनेन प्रकारेण कृतवन्त इत्यनूद्य तत्सर्व्वं देवानुष्ठितप्रकारं हृदि निधाय पश्चात्तदनुतिष्ठन्ति।

अथोपसदनुष्ठानप्रकारं विधातुं स्तौति। "ते देवा ऊचुः। यदा इदमुच्चैर्यज्ञेन चराम। तन्नोऽसुराः पाप्मानन्नुविन्दति। उपाꣳशूपसदा चराम। तथा नोऽसुराः पाप्मानानुवेत्स्यन्तीति। त उपाꣳशूपसदमतन्वत। तिस्र एव सामिधेनीरनूच्य [४]। स्रुवेणाघारमाघार्य्य। तिस्रः पराचीराहुतीर्हुत्वा। स्रुवेणोपसदं जुहवाञ्चक्रुः। उग्रं वाचो अपावधीन्त्वेषं वचो अपावधीꣳ स्वाहेति। अशनायापिपासे ह वा उग्रं वचः। एनश्च वैरहत्यञ्च त्वेषं वचः। एतꣳ ह वाव तच्चतुर्द्धा विहितं पाप्मानं देवा अपजघ्निरे" इति। असुराः सर्व्वत्र स्वयं प्रयोगमजानाना देवसमीपे कञ्चिद्गूढपुरुषमवस्थाप्य ततस्तेन ज्ञात्वा स्वयमप्यनुतिष्ठन्ति। एवं वृत्तान्तं विज्ञाय देवाः परस्परमिदमूचुः। यदि वयं उच्चध्वनिना यज्ञमनुतिष्ठामः तर्ह्यस्माननु सर्व्वं प्रयोगं पापिष्ठा असुरा जानन्ति। अतस्तज्ज्ञानिवारणायोपांशु यथा भवति तथा उप सत्कर्म्मानुष्ठानं निष्पादयामः। तथा सति पापिष्ठा असुराः अस्माननुप्रयोगं न ज्ञास्यन्तीत्येवं निश्चित्योच्चध्वनिं परित्यज्योपांश्वेवोपसदमन्वतिष्ठन्। तत्प्रकारस्त्वेतादृशः, चोदकप्राप्ताः पञ्चदश सामिधेनीः परित्यज्य तिस्र एव सामिधेन्यः, तैरनूक्ताः, तथा स्रुच्याघारं परित्यज्य स्रौवाघार एवानुतिष्ठितवन्तः। तदूर्द्ध्वं तिस्रः प्रधानाहुतीः अग्निं सोमं

विष्णुश्चोद्दिश्य ह्रूयमाना पराचीर्हुतवन्तः। प्रकृतौ तु प्रति-प्रयाजं पृथगेव वेद्या उत्तरतो दक्षिणदेशमागत्य होमः क्रियेत। इह तु सकृदेवागत्य होमः क्रियते। तदिदं पुनरावृत्ति-राहित्यं पराचीशब्देन विवक्षितम्। तदेतदाहुतित्रयं हुत्वा चतुर्थीमुपसदाख्यां प्रधानाहुतिं या ते अग्ने याशयेति संहिता-यामाम्नातमन्त्रा उच्चार्य्य स्रुवेण हुतवन्तः। तस्य मन्त्रस्यो-त्तरभागे उग्रं वच इत्यादिवाक्यमस्ति। तत्र क्षुत्पिपासे एवोग्रं वच उच्यते। क्षुधिताः स्मः पिपासिताः स्मो नास्माकमन्नपाने विद्येते। इत्येतद्वाक्यं घोरं कृपालवः श्रोतुं न सहन्ते। तदे-तत् उपत्वं यदेतद्गोवधादिरूपमुपपातकं यच्च वीरहत्यादि-रूपं महापातकं तदेतत्त्वेषं वच इत्यनेनाभिधीयते। त्वेषशब्देन दीप्तिवाचिना चित्तक्लेशरूपा ज्वालोपचर्य्यते। उपपातकं महा-पातकञ्च निष्पन्नमिति श्रुतवतश्चित्ते महान् क्लेशो भवति। क्षुत्पिपासे महापातकोपपातके इत्येव। फलरूपेण तत्साधन-रूपेण चावस्थितं चतुर्विधं पाप्मानं देवा उपसद्धोमेन विना-शितवन्तः। अयं देवैरनुष्ठितप्रकारः। सर्व्वोऽपि सूत्रकारेण सङ्गृहीतः। प्रैषादृष्टौ जुह्वां गृह्णाति। चतुरुपभृति घृतवति-शब्दे जुह्वपभृतावादाय दक्षिणा सकृदभिक्रान्त उपांशूपाज-वत्। प्रचरत्यर्द्धेन जौहवस्याग्निं यजत्यर्द्धेन सोममौपभृतं जुह्वामानीय विष्णुमिष्ट्वा प्रत्याक्रम्य या ते अग्ने याशया तनू-रिति स्रुवेणोपसदं जुहोतीति॥

तमिमं प्रकारं विधत्ते। "तयो एवैतदेवंविद्यजमानः।

तिस्र एव सामिधेनीरनूच्य। स्रुवेणाघारमाघार्य्य [५]। तिस्रः पराचीराहुतीर्हुत्वा। स्रुवेणोपसदं जुहोति। उग्रं वचो अपावधीन्त्वेषं वचो अपावधीꣳ स्वाहेति। अशनयापिपासे ह वा उग्रं वचः। एनश्च वैरहत्यञ्च त्वेषं वचः। एतमेव तच्चतुर्धा विहितं पाप्मानं यजमानोऽपहते'' इति। तदेतद्यजमानवाक्यं पूर्व्वोक्तदेववाक्यवद्व्याख्येयम्॥

उपसदनुष्ठानप्रकारं विधायानन्तरमग्नीषोमीयपश्वनुष्ठानं विधातुं प्रस्तौति। ''तेऽभिनीयैवाह्नः पशुमालभन्त। अह्न एव तद्देवा अवर्त्तिं पाप्मानं मृत्युमपजघ्निरे। तेनाभिनीयेव रात्रेः प्राचरन्। रात्रिया एव तद्देवा अवर्त्तिं पाप्मानं मृत्युमपजघ्निरे'' [६]। अनुष्ठितोपसदः ते देवा अहरभिनीयैवास्तमयात् प्रागह्नो विशिष्टं कालं प्राप्यैवाग्नीषोमीयं पशुमालभन्ते। योऽयमवर्त्तिं जीवनार्थवृत्तिप्रतिबन्धकं पाप्मानं मृत्युसदृशं तेन पश्वालम्भनेनाह्नोपनीय देवाः विनाशितवन्तः। अभिनीयैवाहनि पशुमुपक्रम्यैव तेन पशुना रात्रेः सम्बन्धिनि कालविशेषेऽनुष्ठितवन्तः। तेनानुष्ठानेन देवा रात्र्याः सकाशात्तं पापमपनीय नाशितवन्तः। अत्र प्रयाजपर्य्यन्तमहन्यनुष्ठेयम्, शेषो रात्रावनुष्ठेय इति। एतमर्थं सूत्रकारः स्पष्टमुदाजहार, दिवा प्रयाजैः प्रचर्य्येति॥

तमिममनुष्ठानप्रकारं विधत्ते। ''तस्मादभिनीयैवाह्नः पशुमालभेत। अह्न एव तद्यजमानोऽवर्त्तिं पाप्मानं भ्रातृव्यानपनुदते। तेनाभिनीयेव रात्रेः प्रचरेत्। रात्रिया एव तद्य-

जमानोऽवर्त्तिं पाप्मानं भ्रातृव्यानपनुदते" इति । यस्माद्देवै-रनुष्ठितं तस्माद्यजमानोऽपि तथानुतिष्ठेत् । देववाक्यवद्यजमान-वाक्यं व्याख्येयम् । तत्र मृत्युरूपः पाप्मा, अत्र तु भ्रातृव्य रूप इति शेषः ॥

उक्तस्य पशोर्दैवतासम्बन्धं विधत्ते । "स एष उपवसथीये ह्यं द्विदेवत्यः पशुरालभ्यते । इयं वा अस्मिँल्लोके यजमानः । अस्थि च माꣳसञ्च । अस्थि चैव तेन माꣳसञ्च यजमानः सꣳस्कुरुते" इति । यस्मिन्नहनि देवता यजमानस्य समीपे निवसति तदहरुपवसथीयम् । अतएवान्यत्राम्नायते, उपास्मिंस्श्वो यक्ष्यमाणे देवता वसन्तीति । अत्राप्यग्नीषोमीयानुष्ठानदिना-दूर्ध्वदिने यजमानः सोमेन यक्ष्यते । तस्मादिदमहरुपवसथीयम् । यस्मिन्नहनि पशुरालभ्यः स द्विदेवत्यः । तौ च देवौ अग्नी-षोमौ, यदग्नीषोमीयं पशुमालभते इत्यन्यत्राम्नानात् । यजमा-नस्य शरीरमप्यस्मिन्मनुष्यलोकेऽस्थिमांसद्वयात्मकं ततो द्वि-देवत्येन पशुना यजमानः स्वकीयमस्थिमांसञ्च संस्कुरुते ॥

एतत्पशुदेवताप्रसङ्गेन सवनीयपशुदेवतारूपानुबन्ध्याख्य-पशुमग्निदेवतां मित्रावरुणरूपाञ्च मिलित्वा प्रशंसति । "तावा एताः पञ्चदेवताः । अग्नीषोमावग्निर्मित्रावरुणौ । पञ्चपञ्चो वै यजमानः । त्वङ्माꣳसꣳ स्नाय्वस्थि मज्जा । एतमेव तत्पञ्चधा विहितमात्मानं वरुणपाशान्मुञ्चति । भेषजतायै निर्वरुणत्वाय" इति । ता वा एताः पशुदेवताः पञ्चसङ्ख्याकाः कास्ता इति ता उच्यन्ते । उपवसथीयेऽह्नि द्वावग्नीषोमावस्य पशोर्देवौ, परेद्युः

सवनेष्वग्निः, सवनीयपशोर्देवः। अन्ते मित्रावरुणावनूबन्ध्याख्य-पशोर्देवौ। यजमानोऽप्यवयवपञ्चकोपेतत्वात् पङ्क्ती। पञ्चभि-स्त्वगादिभिः पङ्क्तीति समासे सति पञ्चपङ्क्ती। अतः पशुत्रये पञ्चदेवता यजमानः पञ्चावयवोपेतं स्वदेहं वरुणपाशान्मोच-यति। अतस्तद्भजनमौषधसिद्धये भवति। तस्मादेताः पञ्च-देवताः भजनीयाः॥

अथ प्रातरनुवाकाख्यऋक्समूहे छन्दोविशेषान् विधत्ते। "तꣳ सप्तभिश्छन्दोभिः प्रातराह्वयन्। तस्मात् सप्तचतुरुत्त-राणि छन्दाꣳसि प्रातरनुवाकेऽनूच्यन्ते" इति। देवास्तमिन्द्रं प्रातःकाले सप्तभिश्छन्दोभिराहूतवन्तः। तस्मात् कारणात् प्रातरनुवाके गायत्रीत्रिष्टुब्जगत्याख्यानि मुख्यछन्दांसि चतु-र्भिरुत्तरैरुष्णिगनुष्टुब्बृहतीपङ्क्त्याख्यैः छन्दोभिः सहितानि प्रियमनुवक्तव्यानि, तास्छन्दोविशेषयुक्ता ऋचः ऐतरेयब्रा-ह्मणेऽवगन्तव्याः॥

अथ बहिष्पवमानाख्यस्य स्तोत्रस्य प्रथमामृचं विधत्ते। "तमेतयोपसमेत्योपासीदन्। उपास्मै गायता नर इति। त-स्मादेतया बहिष्पवमान उपसद्यः" [७] इति। देवास्त-मिन्द्रमुपास्मा इत्येतयर्चा समीपे प्राप्योपाविशन्। तस्मादेत-यर्चा बहिष्पवमानाख्यस्तोत्रविशेषः सामगैरारब्धव्यः। अथ मीमांसा नवमाध्यायस्य प्रथमपादे चिन्तितम्।

मन्त्रादिक*मपूर्वाय परायावान्तराय वा।

---

* मन्त्रादिकमिति F चिह्नितपुस्तकपाठः।

फलदायो नो समं तल्लक्षणा तु विशिष्यते॥

ज्योतिष्टोमे श्रूयते। यावत्या वाचा कामयेत तावत्या दीक्षणीयायामनुब्रूयात्। मन्त्रं* प्रायणीयायां मन्त्रतर†मातिथ्यायामुपांशूपसत्सूच्चैरग्नीषोमीय इति। अत्र ध्वनेरुच्चावचभावः। परमापूर्व्वप्रयुक्तः, तस्य फलवत्वादिति चेत्। मैवम्। अवान्तरापूर्व्वेऽपि समानं फलवत्वं परमापूर्व्वजननद्वारेण फलसम्बन्धात् समाने च फलवत्वे सन्निकृष्टलक्षणया निर्णयः। तथाहि, दीक्षणीयादिशब्दाः अङ्गकर्म्मवाचिनः, न च मन्द्रत्वादिधर्म्माणां कर्म्मस्वरूपं प्रयोजकम्। अपूर्व्वप्रयुक्तेन निर्णीतत्वात्। ततो दीक्षणीयादिशब्दैरपूर्व्वं लक्षणीयम्। तत्र स्ववाक्यगतमवान्तरापूर्व्वं सन्निकृष्टं तद्द्वारकं परमापूर्व्वकविप्रकृष्टम्। तस्मादवान्तरापूर्व्वप्रयुक्ता एते धर्म्माः। अश्वमेधगतत्रैधातवीयायामूहाभावः फलम्। तथाहि अश्वमेधे समाम्नायते, त्रैधातवीया दीक्षणीया भवतीति। यदि परमापूर्व्वप्रयुक्तः स्यात्। ततस्तस्योपकारविशेषनिबन्धन इति तत्कार्य्यापन्नायां त्रैधातवीयायां भविष्यति। अथावान्तरापूर्व्वप्रयुक्तः। तदा त्रैधातवीयायां तदपूर्व्वं न भवति किन्त्वन्यदेवेति नास्त्यूहः। दशमाध्यायस्य सप्तमपादे चिन्तितम्।

प्रायणीयातिथ्ययोः किं विकल्पः शब्दविर्डा ततः।
नियमो वा विकल्पः स्यात् निषेधपरिसङ्ख्यया॥

---

* मन्द्रमिति F चिह्नितपुस्तकपाठः।

† मन्द्रतरमिति F चिह्नितपुस्तकपाठः।

अन्त्विडां तत्त्ववाक्याच्च नियमो विधिमात्रतः ।
नित्यानुवादो नञ्वाक्यदोषवाऽकुल्यमन्यथा ॥

ज्योतिष्टोमे श्रूयते। अन्वन्ता प्रायणीया सन्तिष्ठते। न पत्नीःसंयाजयन्तीति नानुयाजान् यजतीति। प्रकृतौ यदा होता तच्छंयोरिति मन्त्रं जपति तदानीमध्वर्युः परिधीनग्नौ प्रक्षिपति। तदाह कल्पसूत्रकारः, अनूच्यमाने शंयुवाके आहवनीये परिधीन् प्रहरतीति। ततो हविःशेषेषु भक्षितेषु पत्नीःसंयाजन्तीति क्रमः। तथा प्रधानयागेनारिष्टहोमप्राशित्रादिभक्षणेडाभक्षणानूयाजसूक्तवाकसंयुवाक इत्यधस्तनप्रयोगक्रमः । पत्नीसंयाजानामुपरिफलीकरणहोमप्रायश्चित्तहोमकपालोद्वासनैरिष्टिः समाप्यते। एवं स्थिते विकृतिरूपायाः प्रायणीयेष्टेः संयुवाकान्तत्वमातिथ्येष्टेरिडाभक्षणान्तत्वञ्च विकल्पितं स्यात्। कुतः। निषेधवाक्यविधिवाक्याभ्यां प्रकारद्वयप्रतीतेः। तथाहि, अन्वन्तत्वेडान्तत्वविधिनैवोपरितनपत्नीसंयाजानूयाजनिषेधे पुनर्निषेधवचनं परिसङ्ख्यार्थम्। पत्नीसंयाजानूयाजव्यतिरिक्तोऽस्य नास्ति निषेध इति परिसङ्ख्या। तेन प्रकृतिवद्यथाप्राप्तं कपालोद्वासनान्तत्वमनयोरिष्ट्योः प्रतीयते। विधिवाक्येन अन्विडान्तत्वं तेन व्रीहियववद्विकल्प इति प्राप्ते ब्रूमः। विधिमात्रस्यात्र प्रवृत्तेः अन्विडान्तत्वमिडान्तत्वञ्च तयोः प्रतिनियतं पत्नीसंयाजाद्यभावस्त्वर्थसिद्धः। ततो नञादियुक्तमुपरितनं प्रतिषेधवाक्यं नित्यानुवादः। नित्यानुवादः सन्नर्थवादः पत्नीसंयाजाद्यकरणाल्लाघवं भवतीति। अन्यथा

बहवो दोषाः प्रसज्येरन् । विकल्पे तावदष्टौ दोषाः प्रसिद्धाः। परिसङ्ख्यायाञ्च त्रयो दोषाः। विधिपरिसङ्ख्याभ्यां वाक्यभेदोऽपरो दोषः। ततः शंयुविडान्तत्वं नियतम्। तत्रैवान्यच्चिन्तितम्।

तत्रैव शंयुविडे पूर्वे परे वा स्वेच्छयाथवा।
परे एवाथवा पूर्वे एवाद्यो द्विविधः श्रुतेः॥
निषेधस्यार्थवत्त्वाय परे एवानुवादगीः।
पूर्वाङ्गवाक्यतां याति पूर्वे एवाविरोधतः॥

प्रायणीयातिथ्ययोरेवान्तत्वेन निर्णीते। शंयुविडे पुनः संदिह्येते। प्रकृतौ द्विविधे शंयुविडे पत्नीसंयाजेभ्यः पुरस्तादुपरिष्टाच्च विहिते। ते चात्र चोदकप्राप्ते तत्र द्विविधश्रुतेरर्थे चोदकेनातिदिष्टे सति विशेषनियामकाभावादिच्छया स्वीकार्ये इत्येकः पक्षः। यदि प्रायणीयापूर्वशंयुविडन्ता आतिथ्या च पूर्वेडान्ता स्यात्। तदानीमन्तत्वविधिनैव ताभ्यां शंयुविडाभ्यामूर्द्धमप्राप्तानां पत्नीसंयाजानामनूयाजानाञ्च वारितत्वात्तं निषेधो व्यर्थः स्यात्। परयोः शंयुविडयोरन्तत्वेन ताभ्यां शंयुविडाभ्यां पूर्वप्राप्तानां तेषामनिवारणात् तं निवारणाय सार्थको निषेधः। तस्मात् परे एव शंयुविडे ग्राह्ये इति द्वितीयः पक्षः। निषेधोऽयं नित्यानुवाद इत्युक्तम्। स च पूर्वयोः शंयुविडयोरन्तत्वेऽपि एकवाक्यतामापाद्यार्थवादत्वेनोपपद्यते। असञ्जातविरोधिन्यौ हि पूर्वे शंयुविडे, तस्मात्ते एव ग्राह्ये इति राद्धान्तः। तत्रैवान्यच्चिन्तितम्।

उपसत्सु निषिद्धेभ्यः शिष्टं सर्वं किमाचरेत्।

यावदुक्तमुत्पाद्योऽस्तु चोदकस्यानिवारणात्॥
सौवाघारो पुनः श्रुत्या शिष्टस्य परिसङ्ख्यया।
अपूर्व्वार्थत्वतो वान्यो ऽनुवादोऽत्र निषेधगोः॥

ज्योतिष्टोमे विहितास्तूपसत्सु पठ्यते। अप्रयाजास्ता अननूयाज इति। तत्र निषिद्धान् प्रयाजानूयाजान् वर्ज्जयित्वा शिष्टश्चोदकप्राप्तमङ्गजातं सर्व्वमाचरणीयमिति प्राप्ते ब्रूमः। प्रकृतौ विहित एव स्रौवाघारः पुनरिह विधीयते। स चोदकप्राप्तान्यत् सर्व्वमङ्गजातं परिसञ्चष्टे। अन्यथा पुनर्विधानवैयर्थ्यत्वात् ननु पुनर्विधानं प्रतिप्रसवार्थम्। अतएव श्रुतिस्तत्र स्रौवाघारमभावशङ्कानिराकरणपूर्व्वकं विदधाति, नान्यामाहुतिं पुरस्ताज्जुहुयाद्यदन्यामाहुतिं पुरस्ताज्जुहुयादन्यन्मुखं कुर्य्यात् स्रुवेणाघारमाघारयतीति। अयमर्थः, स्रौवाघारः सर्व्वत्र यज्ञस्य मुखं तथा सति यदि कश्चिन्मन्दमुपसत्प्रयोगादौ स्रौवाघारमहुत्वा तस्य स्थाने काञ्चिदन्यामाहुतिं जुहुयात्। तदा मुखव्यत्यासेन प्रत्यवायं प्राप्नुयात्। तस्मात् स्रौवाघार आदौ कर्त्तव्य इति। नैतद्युक्तम्। चोदकप्राप्तस्याघारस्य कारणमन्तरेणाकस्मादभावशङ्काया अयुक्तत्वात्। तस्मात् परिसङ्ख्यार्थे एव पुनर्विधिः। आहुत्यन्तरनिन्दा तु तच्छेषभूतोऽर्थवादः। यदि परिसङ्ख्या निषिद्धेत्युच्यते तर्हि गृहमेधीयवदपूर्व्वं कर्म्मास्तु। प्रयाजादिनिषेधो नित्यानुवादः। सर्व्वथा यावदुक्तमत्रानुष्ठेयम्॥

इति नवमोऽनुवाकः॥ ९॥

## अथ दशमोऽनुवाकः।

नवमे दीक्षणीयादीनि बहिष्पवमानोपक्रमान्तानि सोमाङ्गान्युक्तानि। दशमे त्रिवृदादिस्तोमरूपाणि सोमाङ्गान्युच्यन्ते। तत्रादौ चात्वालखननं सप्रमाणं विधत्ते। "स समुद्र उत्तरतः प्राज्वलद्भूम्यन्तेन। एष वाव स समुद्रः। यच्चात्वालः। एष उ एव स भूम्यन्तः। यद्वेद्यन्तः। तदेतत्त्रिशलं त्रिपुरुषम्। तस्मात्तं त्रिवितस्तं खनन्ति" इति। योऽयं प्रसिद्धो लवणसमुद्रः सोऽयमुत्तरस्यां दिशि भूमेरान्तिमभागेन सह कदाचित् प्रज्वलितोऽभूत्। सोऽयमत्र देवयजनभूमौ सम्पाद्यते। योऽयं चात्वालाख्यो गर्त्तोऽस्ति स एष एवात्र समुद्रस्थानीयः, योऽयं वेदेरवसानदेशः सोऽयं भूमेरवसानभागः। एतावती वै पृथिवी यावती वेदिरिति भूमित्वं वेदेराम्नातम्। यत् समुद्रस्य पुरुषत्रयपरिमाणमूर्द्धप्रज्वलनं तदेतदत्र चत्वाले त्रिशलं शललोम्दगसम्बन्धिरोमत्रयपरिमितं भवति। तस्य च रोमणो वितस्तिपरिमाणं तद्रोमत्रयमत्र पुरुषत्रयरूपेणोपचर्य्यते। तस्मात्तं चात्वालं वितस्तित्रयपरिमितं खनेयुः॥

तमेतं चात्वालं आदित्यरूपेण प्रशंसति। "स सुवर्णरजताभ्यां कुशीभ्यां परिगृहीत आसीत्। तं यदस्या अध्यजनयन्। तस्मादादित्यः [१]। अथ यत् सुवर्णरजताभ्यां कुशीभ्यां परिगृहीत आसीत्। सास्य कौशिकता" इति। स चात्वालः परितः सुवर्णरजतनिर्म्मिताभ्यां शकलाभ्यां गृहीतोऽभवत्। खात्रं कु-

र्व्वाणाः सामगाः स्तोत्रावृत्तिगणनार्थं यां काष्ठशलाकां प्रादेशमात्रपरिमितां भूमौ स्थापयन्ति सेयं कुशेत्युच्यते। तादृशं सुवर्णरजतनिर्म्मितं कुशीद्वयं चात्वालस्यान्तिकं स्थापयित्वा तस्य चात्वालस्याहोरात्रनिष्पादकेनादित्येन साम्यं सम्पादितवन्तः। यस्मादस्या भूमे वायुःपरिमितं चात्वालमजनयन्। तस्मादयमदितेः सम्बन्धित्वादादित्य इत्युच्यते। कुशीद्वयपरिगृहीतत्वाच्च कौशिक इत्यपि नाम॥

इत्थं चात्वालं विधाय त्रिवृदादिस्तोमान् विधातुमादौ त्रिवृत्स्तोमं प्रशंसति। "तं त्रिवृताऽभिप्रास्तुवत्। तं त्रिवृतादद्त। तं त्रिवृताहरन्। यावती त्रिवृतो मात्रा" इति। त्रिवृतस्तृचरूपावयवा यस्य स्तोमस्यायं स्तोमः त्रिवृत्, तेन स्तोमेन देवास्तमादित्यं स्तुत्वा तं स्वाधीनत्वेम समादाय स्वापेक्षिते स्थाने समाहरन्। ततस्त्रिवृत्स्तोमस्य सम्बन्धिनीमीयते। अवगम्यत इति मात्रा धनादिसम्पाद्या यावती विद्यते तावती देवैः लब्धेति शेषः॥

एवमन्यानपि त्रीन् स्तोमान् प्रशंसति। "तं पञ्चदशेनाभिप्रास्तुवत। तं पञ्चदशेनाददत। तं पञ्चदशेनाहरन्। यावती पञ्चदशस्य मात्रा [१]। तꣳ सप्तदशेनाभिप्रास्तुवत। तꣳ सप्तदशेनाददत। तꣳ सप्तदशेनाहरन्। यावती सप्तदशस्य मात्रा। तस्य सप्तदशेन ह्रियमाणस्य तेजो हरोऽपतत्। तमेकविꣳशेनाभिप्रास्तुवत। तमेकविꣳशेनाददत। तमेकविꣳशेनाहरन्। यावत्येकविꣳशस्य मात्रा" इति। एकस्यां स्तुचि वर्त्तमानास्तिस्रः

ऋचो ब्राह्मणोक्तेनावृत्तिविशेषेण पञ्चदशसङ्ख्याका यस्मिन् स्तोमे सम्पाद्यन्ते सोऽयं स्तोमः पञ्चदशः। एवं सप्तदशैकविंशावपि। तत्र सप्तदशस्तोमेन स्तुत्वा यदादित्य आह्रियते तदानीं तस्य तेजः कियदप्यधोऽपतत्। यद्यपि हरःशब्देनापि तेज एवाभिधीयते तथापि पौनरुक्त्यपरिहाराय लेशो लक्ष्यते। अतः कियदपीति व्याख्यातम्। अन्यत् पूर्ववद्व्याख्येयम्॥

एवं स्तोमान् प्रशस्य त्रिवृत्स्तोमं विधत्ते। "ते यत्त्रिवृता स्तुवते [३]। त्रिवृतैव तद्यजमानमाददते। तं त्रिवृतैव हरन्ति। यावती त्रिवृतो मात्रा। अग्निर्वै त्रिवृत्। यावद्वा अग्नेर्दहतो धूम उदेत्यानुव्येति। तावती त्रिवृतो मात्रा। अग्नेरेवैनं तत्। मात्राꣳ सायुज्यꣳ सलोकतां गमयन्ति" इति। तदुद्गातारो यदि सोमयागे त्रिवृता स्तोमेन स्तुवीरन्। तदानीं त्रिवृत्स्तोमसामर्थ्येनैव लोकविशेषे हरन्ति। तत्र त्रिवृत्स्तोमदेवताया यावती भोग्यवस्तुसम्पत्तिः तावतीमयं यजमानः प्राप्नोति। अयमेवार्थः सङ्क्षेपेण पुनरपि स्पष्टीक्रियते। अग्निरेव त्रिवृत्स्तोमाभिमानी देवः। तस्य चाग्नेररण्यादिकं दहतो दहनवेलायां धूम उद्गत्यानुक्रमेण यावन्तं देशं विविधं व्याप्नोति तावती त्रिवृत्सम्बन्धिनी भोगभूमिः। तस्मादुद्गातार एनं यजमानं अग्नेर्मात्राम् ~~अग्निदेवतासम्बन्धिनीं~~ भोग्यवस्तु प्रापयन्ति, तथैवाग्नेः सायुज्यं सहावस्थानं प्रापयन्ति। तथैवाग्नेः सम्बन्धिनीं सलोकतामेकलोकावस्थानं प्रापयन्ति। अग्निसमानभोग्यवस्तुप्राप्तिरुत्तमं फलम्। अग्निसमीपे-

ऽवस्थानं मध्यमम्। अग्निलोकेऽवस्थानमधमम्। एतच्चानुष्ठान-श्रद्धातारतम्येन व्यवस्थापनीयमिति॥

त्रिवृत्स्तोमं विधायाथ त्रीनुत्तरात् स्तोमान् विधत्ते। "अथ यत् पञ्चदशेन स्तुवते। पञ्चदशेनैव तद्यजमानमाददते [४]। तं पञ्चदशेनैव हरन्ति। यावती पञ्चदशस्य मात्रा। चन्द्रमा वै पञ्चदशः। एष हि पञ्चदश्यामपक्षीयते। पञ्चदश्यामापूर्य्यते। चन्द्रमस एवैनं तत्। मात्राꣳ सायुज्यꣳ सलोकतां गमयन्ति। अथ यत् सप्तदशेन स्तुवते। सप्तदशेनैव तद्यजमानमाददते। तꣳ सप्तदशेनैव हरन्ति [५]। यावती सप्तदशस्य मात्रा। प्रजापतिर्वै सप्तदशः। प्रजापतेरेवैनं तत्। मात्राꣳ सायुज्यꣳ सलोकतां गमयन्ति। अथ यदेकविꣳशेन स्तुवते। एकविꣳशेनैव तद्यजमानमाददते। तमेकविꣳशेनैव हरन्ति। यावत्येकविꣳशस्य मात्रा। असौ वा आदित्य एकविꣳशः। आदित्यस्यैवैनं तत् [६]। मात्राꣳ सायुज्यꣳ सलोकतां गमयन्ति" इति। यस्मादेष चन्द्रमाः कृष्णपक्षस्य पञ्चदश्यां अमावास्यायामपक्षीयते। शुक्लपक्षस्य पञ्चदश्यां पौर्णमास्यामापूर्य्यते। चन्द्रमाः पञ्चदशस्तोमाभिमानी देवः। प्रजापतेराश्रावयेदित्यादिसप्तदशाक्षरात्मकत्वात् सप्तदशस्तोमस्वामित्वम्। यत्त्वन्यत्र द्वादशमासाः पञ्चर्त्तवः त्रय इमे लोकाः असावादित्य एकविꣳश इत्येकविंशस्तोमपूरकत्वेनादित्यस्याम्नातत्वात्। आदित्य एकविꣳशस्तोमस्वामी। अन्यत् सर्व्वं पूर्व्ववद्व्याख्येयम्।

पुरा याभ्यां कुशीभ्यां चात्वालो देवैः परिगृहीतः । तयोः कुश्योरपनयनं दर्शयति । "ते कुश्यौ । व्यघ्नन् । ते अहोरात्रे अभवताम् । अहरेव सुवर्णाभवत् । रजता रात्रिः । स यदादित्य उदेति । एतामेव तत्सुवर्णां कुशीमनुसमेति । अथ यदस्तमेति । एतामेव तद्रजतां कुशीमनुसंविशति" इति । ते देवाः चात्वालसमीपे पूर्वं स्थापिते कुश्यौ विसृज्य हतवन्तः परित्यक्तवन्त इत्यर्थः । ते च त्यक्ते कुश्यौ अहोरात्ररूपे अभूताम् । तत्सुवर्णा सुवर्णकुश्या अह्नोरूपत्वादयमादित्य उदयन् तां कुशीमनु सम्यक् प्रवर्त्तते । रजतकुश्या रात्रिरूपत्वात् । आदित्योऽस्तं गच्छन् तां कुशीमनुप्रविशति । तदेवमनया पूर्वोक्तया च कुशीस्तुत्या स्तुतिकाले स्तोत्रीयाणां गणनाय कुश्यः स्थापनीयाः पश्चादपनेया इति विधिरुन्नीयते ॥

अथ चात्वालप्रसङ्गात् बुद्धिस्थे प्रदरे कञ्चिन्निषेद्धुं पुरुषार्थं दर्शयति । "प्रह्लादो ह वै कायाधवः । विरोचनꣳ स्वं पुत्रमुदास्यत् । स प्रदरोभवत् । तस्मात् प्रदरादुदकं नाचामेत्" इति । कयाधुसञ्ज्ञायाः स्त्रियः पुत्रः प्रह्लादः, स्वकीयं पुत्रं विरोचनं केनाऽपि निमित्तेन कुपितो हस्तेनोद्धृत्य क्वचिद्भूमावपातयत् । स भूमिप्रदेशः प्रदरः छिद्ररूपोऽभूत् । तस्य प्रदरस्यासुरत्वात्तत्र प्रतिष्ठमुदकं पुरुषो नाचामेत् । तथा च आपस्तम्बः स्मरति, न वर्षधारास्वाचामेत्तथा न प्रदरोदक इति ॥

इति दशमोऽनुवाकः ॥ १० ॥

अथैकादशोऽनुवाकः ।

दशमे त्रिवृदादिस्तोमा विहिताः । एकादशे सवनीय-पशुपुरोडाशा उच्यन्ते । यदुक्तं संहितायाः षष्ठे काण्डे, तस्मा-दनुसवनं पुरोडाशा निरूप्यन्ते इति । ते पुरोडाशा अत्र प्रपञ्च्यन्ते । तत्रादौ तावज्ज्योतिष्टोमे स्तोमानामियत्तां दर्श-यति । "ये वै चत्वारः स्तोमाः । कृतं तत् । अथ ये पञ्च । कलिः सः । तस्माच्चतुष्टोमः । तच्चतुष्टोमस्य चतुष्टोमत्वम्" इति । पूर्व्वोक्ताः त्रिवृत् पञ्चदशः सप्तदश एकविꣳश इत्येवं रूपाः स्तोमा ये सन्ति ते कृतयुगस्य स्वरूपभूताः । कृतयुगे हि धर्म्मस्य चत्वारः पादा विद्यन्ते । यत्त्वन्येन केनचित् स्तोमेन सह पञ्चस्तोमास्तेषां कलियुगरूपत्वम् । तत्र तन्मध्यगतानां चतुर्णां कृतयुगार्थत्वेन विभागे सति कलेरसाधारणस्तोम एक एव परिशिष्यते । धर्म्मस्य कलियुग एकपादेव । ततः कलिस्वरूप-त्वेन पञ्चस्तोमपक्षस्य निन्दितत्वाच्चतुष्टोमपक्षस्य कृतयुगस्वरूप-त्वेन प्रशस्तत्वादयं सोमयागः चतुष्टोम एव कर्त्तव्यः । चत्वारः स्तोमा अत्रेति व्युत्पत्त्या सोमयागस्य चतुष्टोमत्वं सम्पन्नम् ॥

अथ प्रश्नोत्तराभ्यां स्तोमानां ज्योतिष्ट्वं सम्पादयति । "त-दाहुः । कतमानि तानि ज्योतीꣳषि । य एतस्य स्तोमा इति । त्रिवृत्पञ्चदशः सप्तदश एकविꣳशः [१] । एतानि वाव तानि ज्योतीꣳषि । य एतस्य स्तोमाः" इति । ज्योतिष्टोमाम्नाते तस्मिन् यागे यानि ज्योतींषि स्तोमास्स्यु प्रतीयन्ते । सामाना-

धिकरणात्तु स्तोमानामेव ज्योतिष्ट्वं भासते। तत्र केचित् स्तोमाः पूर्व्वमुदाहृताः। इतः परं य एतस्य स्तोमाः ज्योतिष्ट्वार्हाः तेषु च स्तोमेषु ज्योतींषि कानीत्येवं जिज्ञासवः पप्रच्छुः। ये पूर्व्वमुक्तास्त्रिवृदाद्याः चत्वारः स्तोमास्त एवैतस्य यागस्य ज्योतींषि। एतैर्हि स्तोमैर्निष्पाद्यत्वेन ज्योतिर्भिरेव यागो बभास्यते। अतएव सप्तमकाण्डे समाम्नातम्। तस्माज्ज्योतिरुच्यते। द्वौ स्तोमौ प्रातःसवनं वहत इत्यादि॥

एवं चतुष्टोमत्वं सोमानां ज्योतिष्टोमत्वञ्चाभिधाय चाख्यायिकामुखेन सवनीयपुरोडाशान् प्रपञ्चयति। "सोऽब्रवीत्। सप्तदशेन ह्रियमाणो व्यलेशिषि। भिषज्यतमेति। तदश्विनौ धानाभिरभिषज्यताम्। पूषा करम्भेण। भारती परिवापेण। मित्रावरुणौ पयस्यया" इति। पूर्व्वस्मिन्ननुवाके तस्य सप्तदशेन ह्रियमाणस्य तेजोहरोऽपतदित्यादित्यस्य तेजोहराम्नातम्। स आदित्यो देवान् प्रत्येवमब्रवीत्, सप्तदशस्तोमेन ह्रीयमाणो ह तत्तेजो वियोगाद्व्लेशिषि। अन्योऽभूवं तस्मान्मां भिषज्यत एवमादित्येन प्रार्थिता देवा अश्विपूषादयः स्वपरिचितेनौषधेन चिकित्सामकुर्व्वन्। धाना भ्रष्टयवाः। करम्भो यवपिष्टमाज्यसंयुतम्। परिवापो लाजाः। पयस्या आमिक्षा॥

अथ प्रश्नोत्तराभ्यां धानादीनां चतुर्णां द्रव्याणां हविषामिन्द्रदेवताकत्वं दर्शयति। "तदाहुः [२]। यदश्विभ्यां धानाः। पूष्णः करम्भः। भारत्यै परिवापः। मित्रावरुणयोः पयस्याथ। कस्मादेतेषाꣳ हविषामिन्द्रमेव यजन्तीति। एता

ष्येनं देवता इति ब्रूयात्। एतैर्हविर्भिरभिषज्यंस्तस्मात्'' इति। पूर्व्वोक्तरीत्या धानादीन्यग्न्यादिदेवसम्बन्धीनि द्रव्याणि। तथा सति होमकाले अग्न्यादिदेवताः परित्यज्य कस्मात् कारणादेतेषां हविषामिन्द्रदेवस्वामित्वं कृत्वा यजमानाय यजन्तीति। एवञ्ब्रह्मवादिनः पप्रच्छुः। अत्राभिज्ञ उत्तरमेवं ब्रूयात्, यस्मादेताः सर्व्वाः देवताः एनमिन्द्रमुपजीवन्तीति शेषः; तस्मादिन्द्रस्यैव धानादिहविःस्वामित्वं युक्तम्। एतैरेवेन्द्रस्वामिकैर्हविर्भिरग्निपूषादिदेवा आदित्यस्य चिकित्सां कृतवन्तः। अतएव सूत्रकारः, इन्द्रविषयमेव प्रैषमिन्द्रमुदाजहार॥

सर्व्वेषां पुरोडाशानां जुह्वां समवपत्युः प्रभृति सौविष्टकृतानि प्रातःसावनेन्द्राय पुरोडाशानामनुब्रूहीति धानादिहविश्चतुष्टयं प्रशंस्य पञ्चमं पुरोडाशाख्यं हविः प्रशंसति। "तं वसवोऽष्टाकपालेन प्रातःसवनेऽभिषज्यन्। रुद्रा एकादशकपालेन माध्यन्दिने सवने। विश्वे देवा द्वादशकपालेन तृतीयसवने'' [२] इति। तमादित्यं न चान्द्रस्य सोमत्वे सति भैषज्येनादित्यस्तुतिरयुक्तेति वाच्यम्। इन्द्रस्यैव मूर्त्त्यन्तरं स्वीकृत्यादित्यरूपेणावस्थितवान्। अथवादितेः पुत्र इति व्युत्पत्त्यादित्यशब्देनेन्द्र एव विवक्षित इति गमयितव्यम्॥

अथोक्तार्थवादानुसारेण सवनत्रये विलक्षणपुरोडाशप्राप्तान्वयव्यतिरेकाभ्यां तद्दारयति। "स यदष्टाकपालान् प्रातःसवने कुर्य्यात्। एकादशकपालान् माध्यन्दिने सवने। द्वादश-

कपालाꣳस्तृतीयसवने। विलोम तद्यज्ञस्य क्रियते। एकादश-कपालानेव प्रातःसवने कुर्य्यात्। एकादशकपालान् माध्य-न्दिने सवने। एकादशकपालाꣳस्तृतीयसवने। यज्ञस्य सलो-मत्वाय" इति। अत्र पुरोडाशार्थानि यानि कपालानि तेषां वैलक्षण्यं यज्ञस्य विलोमत्वमेकविधत्वं सलोमत्वं तमिमं पक्षद्वयं सूत्रकार आह, अष्टौ पुरोडाशकपालानि एकादश माध्य-न्दिने द्वादशस्तृतीयसवने सर्व्वानेकादशकपालाननुसवनमेके समामनन्तीति॥

पूर्व्ववदत्रापि प्रश्नोत्तराभ्यां पुरोडाशानामिन्द्रदेवताकत्वं दर्शयति। "तदाहुः। यद्वसूनां प्रातःसवनम्। रुद्राणां मा-ध्यन्दिनꣳ सवनम्। विश्वेषां देवानां तृतीयसवनम्। अथ कस्मादेतेषाꣳ हविषामिन्द्रमेव यजन्तीति। एता ह्येनं देवता इति ब्रूयात्। एतैर्हविर्भिरभिषज्यꣳस्तस्मादिति" [४]। धा-नादिवाक्यवत् पुरोडाशवाक्यं व्याख्येयम्। यद्यपि धानादयः न पुरोडाशाः, तथापि पुरोडाशसाहचर्य्याच्छत्रिन्यायेन पुरो-डाशा इति व्यवहारः। यथैकस्मिन्नेव छत्रिणि सत्यपि छत्रिणो गच्छन्तीति सर्व्वेषु छत्रित्वव्यवहारः, तद्वत्॥

इत्येकादशोऽनुवाकः॥ ११॥

---

अथ द्वादशोऽनुवाकः।

एकादशे सवनीयपुरोडाशाः प्रपञ्चिताः। अथ द्वादशे सप्तच्छन्दांसि प्रपञ्च्यन्ते। तत्रादौ श्रायन्तीय-वारवन्तीयनाम-

निरुक्तिद्वारा प्रशंसति। "तस्या वाचोऽवपादादबिभयुः। तमे-तेषु सप्तसु छन्दःस्वश्रयन्। यदश्रयन्। तच्छ्रायन्तीयस्य श्रा-यन्तीयत्वम्। यदवारयन्। तद्वारवन्तीयस्य वारवन्तीयत्वम्" इति। योऽयमादित्य आकाशमार्गे सञ्चरति। सोयमधस्तात् पतिष्यतीति। एवं तस्यादित्यस्याधोदेशविषयात् पातात् भीता देवास्तत्पातपरिहाराय तमादित्यमेतेषु गायत्र्यादिषु सप्तसु छन्दःसु स्थापितवन्तः। यस्माद्देवाश्छन्दांस्याश्रितवन्तः। तस्मात्तेषु छन्दःसु गीयमानस्य सामविशेषस्य श्रायन्तीयं नाम सम्पन्नम्। यस्माच्छन्दःस्वादित्यं स्थापयित्वा तस्याधः-पातं निवारितवन्तः। तस्मात्तेषु छन्दःसु गातव्यस्य साम-विशेषस्य वारवन्तीयं नाम सम्पन्नम्। स्तोत्रकर्मसाधनानां श्रायन्तीयादिसाम्नामाधारत्वाच्छन्दांसि प्रशस्तानीत्यर्थः ॥

तेषु छन्दःसु बृहतीं विशेषेण प्रशंसति। "तस्या वाच एवावपादादबिभयुः। तस्मा एतानि सप्तचतुरुत्तराणि छन्दांस्युपादधुः। तेषामतिरिच्यन्त। न त्रीण्युदभवन् [१]। स बृहतीमेवास्पृशत्। द्वाभ्यामक्षराभ्याम्। अहोरात्रा-भ्यामेव" इति। छन्दःस्वादित्यं स्थापयित्वापि तेषां छन्दसां न्यूनाधिकभावेन कार्य्यक्षमत्वाभावमाशङ्कमाना देवाः पुनरा-दित्यपातात् भीताः सन्तस्तेष्वेव छन्दःसु कार्य्यक्षममेकं छन्दो नियच्छन्तस्तानि सप्तापि छन्दांस्यादित्यसमीपे स्थापितवन्तः। चत्वार्य्युष्णिगनुष्टुप्पङ्क्तिबृहतीत्येतान्युत्तराणि येषां गायत्री त्रि-ष्टुब्जगतीत्येषां प्रसिद्धानां मुख्यच्छन्दसां तानि मुख्यच्छन्दांसि

चतुरुत्तराणि तानि च मिलित्वा सप्तसङ्ख्याकानि, तेषां सप्तानां मध्ये त्रीणि पङ्क्तित्रिष्टुब्जगतीत्येतान्यतिरिच्यन्त। यदा बृहतीं कृत्वा गानं क्रियते तदानीमेतेष्वप्यक्षराण्यधिकानि भवेयुः। तथा त्रीणि गायत्र्युष्णिगनुष्टुबित्येतानि नोद्भवन् नोद्भूतानि बृहतीं पूरयितुं न समर्थानि कैश्चिदक्षरैर्न्यूनत्वात् स च न्यूनाधिकभावः श्रुत्यैव दर्शयिष्यते। तदानीं स आदित्यस्तानि षडपि छन्दांसि परित्यज्य बृहतीमेव स्वकार्य्यक्षमेयमित्येवं सृष्टवान्। सा च बृहती स्वकार्य्येषु षट्त्रिंशदक्षरेषु द्वे एवाक्षरे अहोरात्ररूपतामापद्य ताभ्यामादित्यस्योपकरोति। तावताधःपातभीतिर्निवृत्ता॥

अथ प्रश्नोत्तराभ्यां बृहतीमहिमानं दर्शयति। "तदाहुः। कतमा सा देवाक्षरा बृहती। यस्यां तत्प्रत्यतिष्ठत्। द्वादश पौर्णमास्यः। द्वादशाष्टकाः। द्वादशामावास्याः। एषा वाव सा देवाक्षरा बृहती [२]। यस्यां तत्प्रत्यतिष्ठदिति" इति। बृहती द्विविधा शब्दात्मिका देवतात्मिका चेति। तस्या अवयवभूतान्यक्षराणि च द्विविधानि शब्दात्मिकानि देवतात्मिकानि च। न क्षरत्येभिर्द्विविधैरवयवैरिति व्युत्पत्त्या द्विविधा अप्यवयवाक्षरशब्दवाच्याः। तत्र शब्दात्मिकाक्षरावयवाः पुनानः सोमेत्यादिष्वृक्षु प्रसिद्धाः, देवतारूपाक्षरावयवैर्युक्ता देवतारूपा या बृहती तस्यामादित्यमण्डलं प्रतिष्ठितम्। सा च बृहती तदवयवाश्च कीदृशीति पप्रच्छुः। तत्राभिज्ञोत्तरं ब्रूते। पौर्णमास्यः कृष्णाष्टम्योऽमावास्याः संवत्सरगताः सर्व्वा

मिलित्वा देवतारूपा अक्षरावयवाः। तत्सङ्घातरूपेयं बृहती देवताऽऽदित्यमण्डलस्याधारभूता तया धारितमादित्यमण्डलं अधो न पततीति स्तोत्रगानकाले भावनार्थमिदं देवतारूपं निरूप्यते ॥

अथ देवतारूपाणां छन्दसां सम्वादमुखेन सर्व्वेषां प्रशस्तं बृहतीरूपत्वं सम्पादयति। "यानि च छन्दाꣳस्यत्यरिच्यन्त। यानि च नोदभवन्। तानि निर्वीर्य्याणि हीनान्यमन्यन्त। साब्रवीद् बृहती। मामेव भूत्वा। मामुपसꣳश्रयतेति। चतुर्भि-रक्षरैरनुष्टुब्बृहतीं नोदभवत्। चतुर्भिरक्षरैः पङ्क्तिर्बृहती-मत्यरिच्यत। तस्यामेतानि चत्वार्य्यक्षराण्यपच्छिद्याधात्[२]। ते बृहती एव भूत्वा। बृहतीमुपसमश्रयताम्" इति। यानि पङ्क्त्यादीनि बृहत्या अधिकाक्षराणि यानि चानुष्टुबादीनि बृहतीं पूरयितुं न पर्य्याप्तानि तानि द्विविधान्यपि स्वमनस्ये-वममन्यन्त, वयं निर्वीर्य्याणि बृहतीकार्य्यं सम्पादयितुमसम-र्थानि। अतो हीनानि अधमानीति तेषां खेदं दृष्ट्वा तत्प-रिहारोपायं सा बृहतीदेवताऽब्रवीत्। हे छन्दांसि यूयं मामेव भूत्वा प्राप्य मदीयामेवाक्षरसङ्ख्यां धृत्वेत्यर्थः। ततो मामुपेत्य सम्यक् सेवध्वमिति। तत्रानुष्टुभो द्वात्रिंशदक्षरत्वात् बृहत्या षट्त्रिंशदक्षरत्वात् बृहत्या चतुर्भिरक्षरैरियं अनु-ष्टुब्बृहतीं पूरयितुं न समर्था। पङ्क्तेः पञ्चभिः पादैरुपेतत्वात्। एकैकस्य पादस्याष्टाक्षरत्वे सति चत्वारिंशदक्षरा पङ्क्तिः सम्प-द्यते। चतुर्भिरक्षरैः पङ्क्तिर्बृहत्या अधिका। तस्यां पङ्क्तौ

विद्यमानान्येतानि चत्वार्यधिकाक्षराणि अपच्छिद्येयं बृहती न्यूनायामनुष्टुभि स्थापितवती। ततस्ते पङ्क्त्यनुष्टुभौ बृहत्यावेव भूत्वा तां बृहतीमुपेत्य सम्यगसेवेताम्। एकस्य न्यूनाधिकयुग्मस्य बृहतीत्वं सम्पादितम्॥

अथान्ययोर्युग्मयोरपि तत् सम्पादयति। "अष्टाभिरक्षरैरुष्णिग्बृहतीं नोदभवत्। अष्टाभिरक्षरैस्त्रिष्टुब्बृहतीमत्यरिच्यत। तस्यामेतान्यष्टावक्षराण्यपच्छिद्यादधात्। ते बृहती एव भूत्वा बृहतीमुपसमश्रयताम्। द्वादशभिरक्षरैर्गायत्री बृहतीं नोदभवत्। द्वादशभिरक्षरैर्जगती बृहतीमत्यरिच्यत। तस्यामेतानि द्वादशाक्षराण्यपच्छिद्यादधात् [४]। ते बृहती एव भूत्वा। बृहतीमुपसमश्रयताम्" इति। उष्णिगष्टाविंशत्यक्षरा प्रसिद्धमन्यत्॥

अथानुसन्धानार्थं रथरूपकं परिकल्पयति। "सोऽब्रवीत् प्रजापतिः। छन्दाꣳसि रथो मे भवत। युष्माभिरहमेतमध्वानमनुसञ्चराणीति। तस्य गायत्री च जगती च पक्षावभवताम्। उष्णिक्क त्रिष्टुप्च प्रष्ठ्यौ। अनुष्टुप्च पङ्क्तिश्च धुर्यौ। बृहत्येवोद्धिरभवत्। स एतं छन्दोरथमास्थाय। एतमध्वानमनुसमचरत्। एतꣳह वै छन्दोरथमास्थाय। एतमध्वानमनुसञ्चरति। येनैष एतत् सञ्चरति। य एवं विद्वान्त्सोमेन यजते। य उ चैनमेवं वेद" [५] इति। स प्रजापतिरादित्यरूपेणाकाशमार्गे गन्तुमेवमुवाच। हे छन्दांसि गायत्र्यादीनि यूयं मदर्थं रथाकारं प्राप्नुत। रथाकारैर्युष्माभिरहं एत-

माकाशाध्वानं अनुदिनं सञ्चराणीति। ततस्तस्य प्रजापतेर्गमनार्थं गायत्रीजगत्यौ पक्षौ रथस्य चक्रेऽभवताम्। उष्णिगनुष्टुभौ प्रष्ट्यावीषारूपे दीर्घकाष्ठे अभवताम्। अनुष्टुप्पङ्क्त्यौ धुरि योजनीयावश्वावभवताम्। बृहत्येवोद्धिरूर्द्ध्वस्थापनीया पीठसमाना उपवेशनफलकरूपाऽभूत्। स प्रजापतिस्तादृशं रथमारुह्यानुदिनमेतन्मार्गं सञ्चरति। यः पुमानेवं रथमनुसन्दधानः सोमेन यजते। यश्चैनं रथमेवं ध्यायति। स एष उभयविधोऽपि पुरुषो येनाध्वनैष प्रजापतिरेतद्दृश्यमानं स्थानं सञ्चरति। तमेतमेवाध्वानं छन्दोरथमारूढोऽनुदिनं सञ्चरति। अत्रैवं विद्वान् सोमेन यजत इति वाक्ये एवंशब्देन देवासुरा इत्याद्यनुवाकचतुष्टयोक्तः साङ्गः सोमयागप्रकारः परामृश्यते। अतोऽयं सोमयागस्य प्रयोगविधिर्द्रष्टव्यः। अथास्य प्रपाठकस्यानुवाकार्थः सङ्गृह्यते।

नक्षत्रेष्टकानां मन्त्राः पञ्चमाद्ये समीरिताः।
नक्षत्रद्वारकः पुण्यः काल उक्तो द्वितीयके॥
देयादेयावद्दर्भागौ तृतीये समुदीरितौ।
तुर्य्ये पात्रोक्तिरन्यस्मिन् मन्त्रावपनगाः श्रुताः॥
षष्ठे तद्ब्राह्मणं मन्त्रा इष्टकार्य्या द्वयोः श्रुताः।
चतुर्षु नवमाद्येषु साङ्गः सोम उदीरितः॥
औपानुवाक्यरूपस्य पञ्चमोऽयं प्रपाठकः।
ब्राह्मणं राजसूयस्य प्रोक्तं षष्ठे च सप्तमे॥
अष्टमे संहितायान्तु समग्रा विधयः श्रुताः।

विधिव्याख्यानरूपत्वादनुब्राह्मणमुच्यते ॥
प्रतिप्रपाठकं तत्रानुवाका दश वर्णिताः।
षष्ठस्याद्येऽनुमत्याद्य इष्टयोऽथ द्वितीयके ॥
वैश्वदेवहवींषि स्युस्तदङ्गानि तृतीयके।
वरुणस्य प्रघासाः स्युस्तुर्य्ये शेषस्तु पञ्चमे ॥
साकमेधास्तु षष्ठे स्युस्तच्छेषः सप्तमे भवेत्।
अष्टमे पितृयज्ञः स्यात्तच्छेषो नवमे स्मृतः ॥
दशमे त्र्यम्बकानि स्युरिति षष्ठः समापितः।
सप्तमाद्ये शुनासीरीयेन्द्रतुर्य्ये उभे तथा ॥
पञ्चाग्नियमपामार्गहोमंस्तवार ईरिताः।
द्वितीये देविकादीनि तृतीये रत्निनां हविः ॥
तुर्य्ये हविर्देवसुवा पञ्चमे तु जलाहृतिः।
षष्ठे स्याज्जलसंस्कारो दिग्जयध्यानमुत्तरे ॥
अभिषेकोऽष्टमे प्रोक्तो रथारोहणमुत्तरे।
दशमे सेव्यते सर्व्वैः सप्तमोऽयं प्रपाठकः ॥
अष्टमाद्ये हवींषि स्युः संसृपां दशमेयकः।
द्वितीये वेष्टयोऽन्यस्मिन् चतुर्थे प्रयजां हविः ॥
सौत्रामणिर्द्वयोः प्रोक्ता पवित्राहस्तु सप्तमे।
अभिषेच्योऽप्यष्टमे तु विशेषः साममन्त्रयोः ॥
न शेषोऽभिषेकगेऽन्यस्मिन् दशमे तु द्विरात्रकः।
क्षत्रस्य धृतिरित्येवमष्टमोऽयं प्रपाठकः ॥
अक्षरार्थः संहितायां तन्मन्त्रविधिभिः सह।

व्याख्यातोऽवेक्ष्यतां तत्र काण्डोतोऽत्र समापितः ।
वेदार्थस्य प्रकाशेन तमो हार्दं निवर्त्तयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे प्रथमकाण्डे पञ्चम-षष्ठ-सप्तमाष्टमप्रपाठकाः समाप्ताः ॥ * ॥

इति श्रीराजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तकश्रीवीर-बुक्कराजस्याज्ञापालकेन माधवामात्येन विरचिते वेदार्थप्रकाशे यजुर्ब्राह्मणे प्रथमकाण्डः समाप्तः ॥ शुभमस्तु ॥ ० ॥

---